यक्प्र० → य । । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[चैत्रमसूयति लिप्सया]** 'डुलभिंष्, प्राप्तौ' (७८६) लभ् । लब्धुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'रभ-लभ-शक-पत-पदामिः' (४।१।२१) इत्वम् ।

**[मैत्रायाऽसूय्यते]** असू । 'धातोः कण्ड्वादेर्यक्' (३।४।८) यक्प्र० → य । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० → य ।

**[मैत्रायेर्ष्यितव्यम्]** ईर्ष्यते = ईर्ष्यितव्यम् । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'स्ताद्यशितो०' (४।४।३२) इट् ।

**[मैत्रायाऽसूयितव्यम्]** असूय्यते = असूयितव्यम् । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् ।

**[मैत्राय दुरीर्ष्यम्]** दुःखेनेर्ष्यते । 'दुः-स्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थात् खल्' (५।३।१३९) खल्प्र० → अ । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[मैत्राय दुरसूयम्]** दुःखेनाऽसूय्यते । 'दुः-स्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थात् खल्' (५।३।१३९) खल्प्र० → अ । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[मैत्रायेर्ष्यितश्चैत्रः]** ईर्ष्यति स्म । 'गत्यर्था-ऽकर्मक०' (५।१।११) क्तप्र० → त । 'स्ताद्यशितो०' (४।४।३२) इट् ।

**[मैत्रायाऽसूयितः]** असूयति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'स्ताद्यशितो०' (४।४।३२) इट् ।

**[चौरस्य द्विषन्]** चौरस्येत्यत्र 'द्विषो वाऽतृशः' (२।२।८४) इत्यनेन कर्मणि षष्ठी । 'द्विषींक् अप्रीतौ' (११२६) द्विष् । द्वेष्टीति । 'सुग् द्विषार्हः सत्रि-शत्रु-स्तुत्ये' (५।२।२६) अतृश्प्र० → अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।।छ।।

## नोपसर्गात् क्रुद्-द्रुहा ।।२।२।२८।।

**[नोपसर्गात् क्रुद्द्रुहा]** न प्रथमा सि । उपसर्ग पञ्चमी ङसि । क्रुध् च द्रुह् च = क्रुद्द्रुह्, तेन ।

**[मैत्रमभिक्रुध्यति]** 'क्रुधंच् कोपे' (११८४) क्रुध्, अभिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[मैत्रमभिद्रुह्यति]** 'द्रुहौच् जिघांसायाम्' (१२३९) द्रुह्, अभिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।।छ।।

## अपायेऽवधिरपादानम् ।।२।२।२९।।

**[अपाये]** 'अयि गतौ' (७९०) अय् अपपूर्व० । अपायनमपायः । 'भावाऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिस्तस्मिन् ।

**[अवधिः]** 'डुधांग्क् धारणे च' (११३९) धा, अवपूर्व० ।卐 अवधानमवधिः । 'उपसर्गाद् दः किः' (५।३।८७) किप्र० → इ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः ।

**[अपादानम्]** 'डुदांग्क् दाने' (११३८) दा, अप-आङ्पूर्व० । अपादीयते यस्मात् । 'भुजि-पत्यादिभ्यः कर्मा-ऽपादाने' (५।३।१२८) अनट्प्र० → अन ।

P 卐 अवधीयते = अवधिः ।

**[सार्थाद्धीनः]** 'ओहांक् त्यागे' (११३१) हा । जहाति सार्थश्चैत्रं, स एवं विवक्षिते नाऽहं जहामि किन्तु हीयते स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ० ⟶ ई० । 'सूयत्याद्योदितः' (४।२।७०) त० ⟶ न० । 'ततो हश्चतुर्थः' (१।३।३) ही० ⟶ धी० ।

**[वृक्षात् पर्णं पतति]** 'पत्लृ गतौ' (९६२) पत् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[धावतोऽश्वात् पतितः]** 'सृं गतौ' (२५) सृ । वेगेन सरतीति । वेगे सर्त्तेर्धाव्' (४।२।१०७) धाव् आदेशः । 'शत्रानशा०' (५।२।२०) शतृप्र० ⟶ अत् । पञ्चमी ङसि ।

**[पततो देवदत्ताद् धावत्यश्वः]** पततीति । 'शत्रानशा०' (५।२।२०) शतृप्र० ⟶ अत् । पञ्चमी ङसि ।

**[सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतराः]** संकाश । संकाशेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र० ⟶ य । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः । सांकाश्ये भवाः । 'प्रस्थ-पुर-वहान्त-योपान्त्य-धन्वार्थात्' (६।३।४३) अकञ्प्र० ⟶ अक । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तेभ्यः । पाटलिपुत्र मांडियइ । पाटलिपुत्रे भवाः । 'रोपान्त्यात्' (६।३।४२) अकञ्प्र० ⟶ अक । प्रकृष्टा अभिरूपाः = अभिरूपतराः । द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० ⟶ तर ।

बुद्ध्या **समीहितैकत्वान्,** पञ्चालान् कुरुभिर्यदा ।
बुद्ध्या विभजते वक्ता, तदाऽपायः प्रतीयते ॥

समीहितं एकत्वं येषां ते, तान् ।

**[अधर्माज्जुगुप्सते]** 'गुपि गोपन-कुत्सनयोः' (७६३) गुप् । 'गुप्-तिजो गर्हा-क्षान्तौ सन्' (३।४।५) सन्प्र० । 'सन्-यङश्च' (४।१।३) गुप् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ग-होर्जः' (४।१।४०) ग० ⟶ ज० । वर्त्त० ते ।

**[धर्मात् प्रमाद्यति]** 'मदैच् हर्षे' (१२३६) मद्, प्रपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० ⟶ य । 'शम्सप्तकस्य श्ये' (४।२।१११) दीर्घः ।

**[चौरेभ्यस्त्रायते]** 'त्रैङ् पालने' (६०५) त्रै । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) आय् । कश्चित् सुहृद् यदीमं चौराः **पश्येयुर्नू**नमस्य धन**मपहरेयु**रिति बुद्धया तं चौरैः संयोज्य तेभ्यो **निवर्तयती**त्यपाय एव ।

'दृशृं प्रेक्षणे' (४९५) दृश् । सप्तमी युस् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) पश्य । 'याम्-युसोरियमियुसौ' (४।२।१२३) इयुस् । 'अवर्णस्येवर्णादिनैदोदरल्' (१।२।६) अ० ⟶ ए० । 'हृंग् हरणे' (८८५) हृ, अपपूर्व० । सप्तमी युस् । 'कर्त्तर्य०' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'याम्-युसोरियमियुसौ' (४।२।१२३) इयुस् आदेशः । 'अवर्णस्येवर्णादिनैदोदरल्' (१।२।६) अ० ⟶ ए० । 'वृतूङ् वर्तने' (९५५) वृत्, निपूर्व० । निवर्तमानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । वर्त्त० ते (तिव्) । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए ।

**[अध्ययनात् पराजयते]** 'इङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयतेऽध्ययनम् । 'अनट्' (५।३।१२४) अनट्प्र० ⟶ अन । 'नामिनो' गुणो० (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । तस्मात् । 'जिं अभिभवे' (८) जि, परापूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गुणु ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'परा-वेर्जेः' (३।३।२८) आत्मनेपदम् ।

**[यवेभ्यो गां रक्षति]** गो द्वितीया अम् । 'आ अम्-शसोऽता' (१।४।७५) आ ।

**[कूपादन्धं वारयति]** 'वृगट् वरणे' (१२९४) वृ । वृण्वन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[उपाध्यायादन्तर्धत्ते]** 'डुधांग्क् धारणे च' (११३९) धा, अन्तर्पूर्व० । वर्त्त० ते । 'हवः शिति' (४।१।१२) धा द्विर्वचनु । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) ध० ⟶ द० । 'धागस्तथोश्च' (२।१।७८) द० ⟶ ध० । 'श्नश्चाऽऽतः' (४।२।९६) आलोपः । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ध० ⟶ त० ।

**[शृङ्गाच्छरो जायते]** 'जनैचि प्रादुर्भावे' (१२६५) जन् । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० ⟶ य । 'जा ज्ञा-जनोऽत्यादौ' (४।२।१०४) जा । ''नाऽ**त्यन्ताय** निष्क्रामन्ति सन्ततत्वादन्याऽन्यप्रादुर्भावाद् वा''. । अत्यन्ताय । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अव्ययस्य' (३।२।७) अम्लोपः ।

**[हिमवतो गङ्गा प्रभवति]** हिमं विद्यते यस्याऽसौ हिमवान् । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० ⟶ मत् । 'मावर्णान्तोपान्ता०' (२।१।९४) म० ⟶ व० । ''नाऽत्यन्तमव**क्रामन्ति** सन्ततत्वादन्याऽन्यप्रादुर्भावाद् वा'' 'क्रमू पादविक्षेपे' (३८५) क्रम्, अपपूर्व० । वर्त्त० अन्ति । 'कर्त्तर्यन०' (३।४।७१) शव् । 'क्रमो दीर्घः परस्मै' (४।२।१०९) दीर्घः ।

**[वलभ्याः शत्रुञ्जयः षड् योजनानि षट्सु वा योजनेषु भवति]** 'जिं अभिभवे' (८ ) जि, शत्रुपूर्व० रागुपूर्व० । रागादिशत्रून् जयतीति शत्रुञ्जयः । 'भृ-वृ-जि-तृ-तप-दमेश्च नाम्नि' (५।१।११२) खप्र० ⟶ अ । 'नामिनो गुणो०' (४।३।१) गु० ए० । 'खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः ।

**[कार्त्तिक्या आग्रहायणी मासे]** कृत्तिकाभिश्चन्द्रयुक्ताभिर्युक्तकालोऽपि कृत्तिका । 'चन्द्रयुक्तात् काले लुप् त्वप्रयुक्ते' (६।२।६) अण्प्र० ⟶ अ । अनेनैव अण्लोपः । कृत्तिका मांडियइ । कृत्तिकाभिर्युक्ता पूर्णि ? (पौर्ण)मासी । 'चैत्री-कार्त्तिकी-फाल्गुनी-श्रवणाद् वा' (६।२।१००) अण्प्र० । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृ० आर् । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपस्तस्याः । अग्रं हायनमस्य = अग्रहायणः । अग्रहायन(ण)मेव = अ(आ)ग्रहायणी । 'प्रज्ञादिभ्योऽण्' (७।२।१६५) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'पूर्वपदस्थान्नाम्न्यगः' (२।३।६४) णत्वम् ।

**[माथुराः पाटलिपुत्रकेभ्य आढ्यतराः]** मथुरा । मथुरायां भवाः = माथुराः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः । प्रथमा जस् । पाटलिपुत्रे भवाः = पाटलिपुत्रकाः । 'रोपान्त्यात्' (६।३।४२) अकञ्प्र० । इमे आढयाः, इमे आढयाः, अमीषां मध्ये इमे प्रकृष्टा आढ्याः = आढ्यतराः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० ⟶ तर । प्रथमा जस् ।

**[अधर्मेण जुगुप्सते]** 'जुगुप्सते' पूर्ववत् ।

**[मौर्ख्येण प्रमाद्यति]** 'मदैच् हर्षे' (१२३६) मद्, प्रपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० ⟶ य । 'शम्सप्तकस्य श्ये' (४।२।१११) दीर्घः ।

**[चौरैर्बिभेति]** 'ञिभीं‍क् भये' (११३२) भी । वर्त्त० तिव् । 'हवः शिति' (४।१।१२) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) भ० ⟶ ब० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए ।।छ।।

**क्रियाऽऽश्रयस्याऽऽधारोऽधिकरणम्** ॥२।२।३०॥

**[क्रियाऽऽश्रयस्य]** 'श्रिग् सेवायाम्' (८८३) श्रि, आङ्पूर्व० । आश्रयणमाश्रयः । 'भूश्र्यदोऽल्' (५।३।२३) अल्प्र० → अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए० । 'एदैतोऽयाय्' (१।२।२३) अय् । क्रियाया आश्रयः = क्रियाऽऽश्रयस्तस्य ।

**[आधारः]** 'धृंग् धारणे' (८८७) धृ, आङ्पूर्व० । 卐 आध्रियेते कर्तृ-कर्मणी अस्मिन्नित्याधारः । 'न्याया-ऽवाया-ऽध्यायोद्याव-संहारा-ऽवहारा-ऽऽधार-दार-जारम्' (५।३।१३४) आधारनिपातः ।

**[अधिकरणम्]** 'डुकृंग् करणे' (८८८) कृ, अधिपूर्व० । + अधिक्रियतेऽनेनेति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र० → अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[वैषयिकम्]** अनन्यत्र भावः = विषयः, तस्मै प्रभवति = वैषयिकम् । 'तस्मै योगादेः शक्ते' (६।४।९४) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः वि० → वै० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[औपश्लेषिकम्]** एकदेशमात्रसंयोगः = उपश्लेषः, तत्र भवमौपश्लेषिकम् । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः उ० → औ० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[सामीप्यकम्]** यद् आधेये(य)सन्निधिमात्रेण क्रियाहेतुस्तत् = सामीप्यकम् । 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) टयणन्तात् 'यावादिभ्यः कः' (७।३।१५) कप्र० ।

**[नैमित्तिकम्]** निमित्तमेव = नैमित्तिकम् । 'विनयादिभ्यः' (७।२।१६९) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः नि० → नै० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[आतपे क्लाम्यति]** 'क्लमूच् ग्लानौ' (१२३७) क्लम् । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य । 'ष्ठिवू-क्लम्वाऽऽचमः' (४।२।११०) दीर्घः ।

**[औपचारिकम्]** उपचारे भवमौपचारिकम् । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः उ० → औ० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ॥छ॥

**नाम्नः प्रथमैक-द्वि-बहौ** ॥२।२।३१॥

**[नाम्नः]** 'णमं प्रह्वत्वे' (३८८) णम् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नम् । नमति = प्रह्वीभवति जनोऽनेनेति नाम । 'सात्मन्नात्मन्-वेमन्-रोमन्-क्लोमन्-ललामन्-नामन्-पाप्मन्-पक्ष्मन्-यक्ष्मन्निति' (उणा० ९१६) इत्यादिना निपातः । तस्मात् ।

**[प्रथमैकद्विबहौ]** प्रथमा । प्रथमा सि । 卐卐 एका च द्वौ च बहवश्च = एकद्विवहु, तस्मिन् । 'ङिर्डौ' (१।४।२५) औ । सूत्रत्वात् क्लीबत्वम् ।

**[कारकः]** 'डुकृंग् करणे' (८८८) कृ । करोतीति कारकः । 'णक-तृचौ' (५।१।४८) णकप्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

---

P 卐 आध्रियन्ते यस्मिन् क्रिया इत्याधारः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । प्रथमा सि ।

P + अधिक्रियतेऽधिकरणम् । 'अनट्' (५।३।१२४) अनट्प्र० । 'नामिनो गुणो०' (४।३।१) गु० अर् । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

P 卐卐 एकश्च द्वौ च बहवश्च ।

**[पाचकः]** 'डुपचींष् पाके' (८९२) पच् । पचतीति पाचकः । 'णक-तृचौ' (५।१।४८) णकप्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[दण्डी]** दण्डो विद्यते यस्याऽसौ दण्डी । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।

**[विषाणी]** विषाण 'नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गा-ऽङ्ग-गात्र-कण्ठात्' (२।४।३९) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[पञ्चालाः]** पञ्चालेषु भवाः = पञ्चालाः (?) पञ्चालानां राष्ट्रस्य राजानः, पञ्चालस्य राज्ञोऽपत्यानि वा । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'बहुष्वस्त्रियाम्' (६।१।१२४) अञ्लोपः ।

स्वार्थस्य व्यवच्छेद्यमित्यत्र 'कर्तरि' (२।२।८६) षष्ठी स्वार्थेन व्यवच्छिद्यते, शक्त्यादीत्यत्राऽऽदिशव्दात् स्वार्थादिपरिग्रहः, यस्यां त्यादिभिरित्यवतीति तिवादयो विभक्तयः, आदिशव्दात् कृत्-तद्धित-समासाः, व्यतिरेकविभक्तय इति नामार्थान् अतिरेके आधिक्ये द्वितीयाद्या व्यतिरेकविभक्तयः, तत्पूर्वके(क)संबध इति क्रियाकारकपूर्वकः ।

**[स्नानीयं चूर्णम्]** 'ष्णांक् शौचे' (१०६४) ष्णा । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) स्ना । स्नानं क्रियतेऽनेन स्नानीयः । बाहुलकादनीयप्रत्ययः ।

**[दानीयो ब्राह्मणः]** 'डुदांग्क् दाने' (११३८) दा । दीयतेऽस्मै इति दानीयः । बाहुलकादनीयप्रत्ययः ।

**[गोघ्नोऽतिथिः]** गो 'हनंक् हिंसा-गत्योः' (११००) हन् । गौर्हन्यतेऽस्मै आगताय बाहुलकाद् 'ब्रह्माऽऽदिभ्यः' (५।१।८५) टक्प्र० → अ । 'गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक्' (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[प्रस्रवणो गिरिः]** इं (११) - दुं (१२) - द्रुं (१३) - शुं (१४) - 'स्रुं गतौ' (१५) स्रु, प्रपूर्व० । प्रस्रवति जलमस्मादिति प्रस्रवणः । 'भुजि-पत्यादिभ्यः कर्मा-ऽपादाने' (५।३।१२८) अनट्प्र० → अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० उ० → ओ० । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[भयानको व्याघ्रः]** 'ञिभींक् भये' (११३२) भी । बिभेति जनोऽस्मादिति भयानकः । 'शी-भी-राजेश्चानकः' (उणा० ७१) आनकप्र० । 'नामिनो गुणो०' (४।३।१) गु० ई० → ए० । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[स्थानीयं नगरम्]** 'ष्ठां गतिनिवृत्तौ' (५) ष्ठा । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः' न्या० सं० (१।२९) स्था । तिष्ठन्ति जना अस्मिन्निति स्थानीयम् । बाहुलकादनीयप्र० ।

**[गोदोहनी पारी]** गावो दुह्यन्तेऽस्यामिति गोदोहनी । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र० → अन । 'अणञेयेकण्-नञ् - स्नञ् - टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

## आमन्त्र्ये ।।२।२।३२।।

**[आमन्त्र्ये]** 'मन्त्रिण् गुप्तभाषणे' (१८४०) मन्त्र । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । 'अतः' (४।३।८२) अलोपः । आमन्त्र्यते इत्यामन्त्र्यम् । 'य एच्चातः' (५।१।२८) यप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपस्तस्मिन् ।

**[हे देवदत्त !]** तेन देवदत्तशब्देन देवदत्तत्वेन वा सह संबंधस्तत्संबंधः, प्रसिद्धस्तत्संबंधो यस्य हे देवदत्त ! । प्रथमा सि । 'अदेतः स्यमोर्लुक्' (१।४।४४) सिलोपः ।

**[हे पचन् !]** 'डुपचींष् पाके (८९२) पच् । पचतीति पचन् । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०

→ अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[हे पचमान !]** पचते = पचमानस्तस्य संबोधनं हे पचमान ! । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन । 'अतो म आने (४।४।११४) मोऽन्तः । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । प्रथमा सि । 'अदेतः स्यमोर्लुक्' (१।४।४४) सिलोपः ।।छ।।

**गौणात् समया-निकषा-हा- धिगन्तरा-ऽन्तरेणा-ऽति-येन-तेनैर्द्वितीया** ।।२।२।३३।।

**[गौणात्]** गौण पञ्चमी ङसि ।

**[समयानिकषाहाधिगन्तराऽन्तरेणाऽतियेनतेनैः]** समया च निकषा च हा च धिग् च अन्तरा च अन्तरेण च अति च येन च तेन च = समया......, तैः ।

**[द्वितीया]** द्वि । द्वयोः पूरणी । 'द्वेस्तीयः' (७।१।१६५) तीयप्र० । 'आत्' (२।४।१८) आप्प्र० → आ ।

**[येन पश्चिमां गतः]** येन लक्षणे पश्चिमां लक्ष्यीकृत्य गतः ।

**[तेन पश्चिमां नीतः]** तेन लक्षणे पश्चिमां लक्ष्यीकृत्य नीतः ।

**[अन्तरा गार्हपत्यमाहवनीयं च वेदिः]** गृहपतिना संयुक्तः । 'हृद्य-पद्य-तुल्य-मूल्य-वश्य-पथ्य-वयस्य-धेनुष्या- गार्हपत्य-जन्य-धर्म्यम्' (७।१।११) इत्यनेन निपातः ।।छ।।

**द्वित्वेऽधो-ऽध्युपरिभिः** ।।२।२।३४।।

**[द्वित्वे]** द्वि । द्वयोर्भावः = द्वित्वम् । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । तस्मिन् ।

**[अधोऽध्युपरिभिः]** अधश्च अधिश्च उपरिश्च = अधोऽध्युपरयस्तैः ।

**[अधोऽधो ग्रामं ग्रामाः]** अधस् प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'सामीप्येऽधोऽध्युपरि' (७।४।७९) द्वित्वम् ।

**[अधः प्रासादस्य]** 'षद्लृं विशरण-गत्यवसादनेषु' (९६६) षद् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सद्, प्रपूर्व० । प्रसीदन्ति अस्मिन् जगज्जननयनमनांसीति प्रासादः । 'व्यञ्जनाद् घञ्' (५।३।१३२) घञ्प्र० । 'घञ्युपसर्गस्य बहुलम्' (३।२।८६) प्रशब्दस्य दीर्घः । 'ञ्णिति'(४।३।५०) उपान्त्यवृद्धिः । तस्य ।।छ।।

**सर्वोभया-ऽभि-परिणा तसा** ।।२।२।३५।।

**[सर्वोभयाऽभिपरिणा]** सर्वश्च उभयश्च अभिश्च परिश्च = सर्वोभयाऽभिपरि, तेन = सर्वोभयाऽभिपरिणा । 'अनाम्स्वरे नोऽन्तः' (१।४।६४) नोऽन्तः ।

**[तसा]** तस् तृतीया टा ।

**[सर्वतो ग्रामं वनानि]** सर्व । सर्वस्मात् = सर्वतः । 'किमद्व्यादि-सर्वाद्यवैपुल्यबहोः पित् तस्' (७।२।८९) तस्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । वन प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० → इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः ।

**[उभयतो ग्रामं वनानि]** उभय । उभयस्मात् = उभयतः । 'किमद्व्यादिसर्वाद्य०' (७।२।८९) तस्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । वन प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० → इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः ।

**[अभितो ग्रामं क्षेत्राणि]** उभयस्मात् = अभितः । 'पर्यभेः सर्वोभये' (७।२।८२) तस्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[परितो ग्रामं क्षेत्राणि]** सर्वस्मात् = परितः । 'पर्यभेः सर्वोभये' (७।२।८२) तस्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।।छ।।

**लक्षण-वीप्स्येत्थम्भूतेष्वभिना ।।२।२।३६।।**

**[लक्षणवीप्स्येत्थम्भूतेष्वभिना]** इत्थमग्रे 'भू सत्तायाम्' (१) भू । इत्थम्भवति स्माऽस्मिन् मात्रादाविति । 'अद्यर्थाच्चाधारे' (५।१।१२) क्तप्र० → त । लक्षणं च वीप्स्यं च इत्थम्भूतश्च = लक्षणवीप्स्येत्थम्भूतास्तेषु । अभि तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० । 'इवर्णादे०' (१।२।२१) वत्वम् ।

**[वृक्षमभि विद्योतते विद्युत्]** वृक्ष द्वितीया अम् । अभि प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'द्युति दीप्तौ' (९३७) द्युत्, विपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० । 'द्युति दीप्तौ' (९३७) द्युत्, विपूर्व० । विद्योतनं = विद्युत् । 'क्रुत्-संपदादिभ्यः क्विप्' (५।३।११४) क्विप्प्र०(?) । ('दिद्युद्-ददृद्०' (५।२।८३) क्विप्प्र०) । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः (?) ।

**[वृक्षं वृक्षमभि सेकः]** वृक्ष(२), अभि प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच् । सेचनं = सेकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० इ० → ए० । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च० → क० ।

**[साधुर्देवदत्तो मातरमभि]** मातृ द्वि० अम् । 'तृ-स्वसृ-नप्तृ-नेष्टृ०' (१।४।३८) आर् ।

अभिना साध्यसाधनभावसंबंधो द्योत्यते ।

**[यदत्र ममाऽभि स्यात् तद् दीयताम्]** 'असक् भुवि' (११०२) अस् । सप्तमी यात् । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । 'डुदांग्क् दाने' (११३८) दा । पञ्चमी ताम् । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ० → ई० ।।छ।।

**भागिनि च प्रति-पर्यनुभिः ।।२।२।३७।।**

**[भागिनि]** 'भजीं सेवायाम्' (८९५) भज् । भजनं = भागः । 'भावाऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) ज० → ग० । भागोऽस्याऽस्तीति भागी । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णवर्णस्य' (७।४।६८) अलोपस्तस्मिन् ।

**[प्रतिपर्यनुभिः]** प्रतिश्च परिश्च अनुश्च = प्रतिपर्यनवस्तैः ।

**[यदत्र मां प्रति, मां परि, मामनु स्यात् स दीयताम्]** अस्मद् 'लोकात्' (१।१।३) अद् अग्रे विश्लेषियइ । द्वितीया अम् । 'त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्' (२।१।११) म० । 'अमौ मः' (२।१।१६) म० । 'युष्मदस्मदोः' (२।१।६) द० → आ० । 'समानानां०' (१।२।१) दीर्घः । प्रति प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'असक् भुवि' (११०२) अस् । सप्तमी यात् । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । तद् प्रथमा सि । 'डुदांग्क् दाने' (११३८) दा । पञ्चमी ताम् । 'क्यः शिति' (३।४।७०) क्यप्र० । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ० → ई० ।

**[वृक्षं प्रति, वृक्षं परि, वृक्षमनु विद्योतते विद्युत्]** विद्युत् प्रथमा सि । 'दीर्घङ्या०' (१।४।४५) सिलोपः ।

**[वृक्षं वृक्षं प्रति, वृक्षं वृक्षं परि, वृक्षं वृक्षमनु सेचनम्]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै०' (२।३।९८)

सिच् । सिच्यतेऽनेनेति सेचनम् । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र० → अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० इ० → ए० ।

**[अनु वनस्याऽशनिर्गता]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गच्छतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) सि० → डा० → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ॥छ॥

**हेतु - सहार्थेऽनुना ॥२।२।३८॥**

**[हेतुसहार्थे]** सह लक्षणोऽर्थो यस्य सः = सहार्थः, हेतुश्च सहार्थश्च = हेतुसहार्थस्तस्मिन् ।

**[अनुना]** अनु तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० ।

**[जिनजन्मोत्सवमन्वागच्छन् सुराः]** जिनस्य जन्म = जिनजन्म । जिनजन्मनि उत्सवः = जिनजन्मोत्सवस्तम् । अनु प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । अम (३९२) - द्रम (३९३) - हम्म (३९४) मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम्, आङ्पूर्व० । ह्यस्तनी अन् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'गमिषद्यमश्छः' (४।२।१०६) म० → छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ० → च० । 'लुगस्या०' (२।१।११३) अलोपः ।

**[पर्वतमन्ववसिता सेना]** पर्वत द्वि० अम् । अनु प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'षिंग्ट् बन्धने' (१२८७) षि । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सि, अवपूर्व० । अवसिनोति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'आत्' (२।४।१८) आप् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

**उत्कृष्टेऽनूपेन ॥२।२।३९॥**

**[उत्कृष्टेऽनूपेन]** उत्कृष्ट सप्तमी ङि । अनुश्च उपश्च = अनूपं, तेन ।

**[उपोमास्वातिं सङ्ग्रहीतारः]** उप अव्यउ । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 卐 उमा-कीर्तिः स्वातिरिवोज्ज्वला यस्याऽसौ, तम् । 'ग्रहीश् उपादाने' (१५१७) ग्रह्, संपूर्व० । संगृह्णन्तीत्येवंशीलाः । 'तृन् शील-धर्म-साधुषु' (५।२।२७) तृन्प्र० → तृ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'गृह्णोऽपरोक्षायां दीर्घः' (४।४।३४) दीर्घत्वम् । 'तृ-स्वसृ-नप्तृ-नेष्टृ०' (१।४।३८) आर् ।

**[उप जिनभद्रक्षमाश्रमणं व्याख्यातारः]** 'ख्यांक् प्रथने' (१०७१) ख्या, वि-आङ्पूर्व० । व्याख्यान्तीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । प्रथमा जस् । 'तृ-स्वसृ-नप्तृ-नेष्टृ०' (१।४।३८) आर् ॥छ॥

**कर्मणि ॥२।२।४०॥**

**[कर्मणि]** कर्मन् सप्तमी ङि ।

**[आदित्यं पश्यति]** 'दृशृं प्रेक्षणे' (४९५) दृश् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) पश्य ।

**[अहिं लङ्घयति]** रघुङ् (६३७) - 'लघुङ् गतौ' (६३८) लघ् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । लङ्घमानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए० । 'एदैतोऽयाय्' (१।२।२३) अय् ।

---

P 卐 उमा - जननी, स्वातिः - पिता यस्य सः = उमास्वातिः, तम् ।

**[ग्रामं गच्छन् वृक्षमूलान्युपसर्पति]** 'सृप्लृं गतौ' (३४१) सृप्, उपपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[अजां नयति ग्रामम्]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[गां दोग्धि पयः]** गो द्वितीया अम् । 'आ अम्-शसोऽता' (१।४।७५) आ । 'दुहींक् क्षरणे' (११२७) दुह् । वर्त्त० तिव् । 'लघोरुपान्त्य०' (४।३।४) गु० ओ । 'भ्वादेर्दादेर्घः' (२।१।८३) ह० → घ० । 'अधश्चतुर्थात् त-थोर्धः' (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) घ० → ग० । पयस् द्वि० अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः ।

**[शत्यः पटः]** शत । शतेन क्रीतः । 'शतात् केवलादतस्मिन् येकौ' (६।४।१३१) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[आरूढवानरो वृक्षः]** 'रुहं जन्मनि' (९८८) रुह्, आङ्पूर्व० । आरुह्यते स्म । 'श्लिष-शीङ्-स्था-ऽऽस-वस-जन-रुह-जॄ-भजेः क्तः' (५।१।९) क्तप्र० → त । 'हो धुट्-पदान्ते' (२।१।८२) ह० → ढ० । 'अधश्चतुर्थात् त-थोर्धः' (२।१।७९) त० → ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध० → ढ० । 'ढस्तड्ढे' (१।३।४२) ढलोपः-पूर्वस्य दीर्घः ।

**[दात्रेण लुनाति]** 'दांवृक् लवने' (१०७०) दा । दायतेऽनेनेति । 'नी-दाव्-शसू-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-पा-नहस्त्रट्' (५।२।८८) त्रट्प्र० → त्र, तेन ।

**[दानीयाय ददाति]** 'डुदांग्क् दाने' (११३८) दा । दीयतेऽस्मै आगताय । बाहुलकादनीयप्र०, तस्मै ।

**[भीमाद् बिभेति]** 'ञिभींक् भये' (११३२) भी । बिभेति अस्मादिति भीमः । 'भीमादयोऽपादाने' (५।१।१४) इति, 'भियः षोऽन्तश्च वा' (उणा० ३४४) किद् मप्र० ।

**[ओदनः पक्त्वा भुज्यते देवदत्तेन]** 'डुपचींष् पाके' (८९२) पच् । पचनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र → त्वा । 'च-जः क-गम्' (२।१।८६) च० → क० ।

**[कृतपूर्वी कटम्]** कृतः(तं) पूर्वं कटोऽनेनेति कृतपूर्वी । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[भुक्तपूर्वी ओदनम्]** भुक्तं पूर्वं ओदनोऽनेनेति । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

ननु गौणान्नाम्नः कर्मणि द्वितीयेत्युक्तम्, अजां नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षया अजादेः प्रधानत्वान्न ततो द्वितीया प्राप्नोतीत्याह- इह चेति ।।छ।।

## क्रियाविशेषणात् ।।२।२।४१।।

**[क्रियाविशेषणात्]** क्रियाया विशेषणं = क्रियाविशेषणं, तस्मात् ।

**[ओदनस्य शोभनं पक्ता]** 'डुपचींष् पाके' (८९२) पच् । पचतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) डा० → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । 'च-जः कगम्' (२।१।८६) च० → क० ।

**[सुखं स्थाता]** स्था (२।२।२०) सूत्रवत् । तिष्ठतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । प्रथमा सि । 'ऋदुशनस्-पुरदंशो०' (१।४।८४) सि० → डा० → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[कष्टं स्थाता]** 'कष हिंसायाम' (५०७) कष् । कषिस्यतीति । 'कषोऽनिटः' (५।३।३) क्तप्र० । 'कषः कृच्छ्र-गहने' (४।४।६७) इड्निषेधः ।

**[चिरमासिता]** 'आसिक् उपवेशने' (१११९) आस् । आस्ते = आसिता । 'णक-तृचौ' (५।१।४८) तृच्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) डा० → आ० ।

**[मन्दं गन्ता ग्रामाय]** ग्रामायेत्यत्र 'गतेर्नवाऽनाप्ते' (२।२।६३) चतुर्थी न स्यात्, मन्दशब्दात् ॥छ॥

**कालाऽध्वनोर्व्याप्तौ ॥२।२।४२॥**

**[कालाऽध्वनोः]** कालश्च अध्वा च = कालाऽध्व(वा)नौ, तयोः = कालाऽध्वनोः, सप्तमी ओस् ।

**[व्याप्तौ]** व्याप्ति सप्तमी ङि ।

**[मासं गुडधानाः]** गुडेन मिश्रा धानाः = गुडधानाः ।

**[मासं कल्याणी]** 'अण शब्दे' (२५९) अण्, कल्यपूर्व० । कल्यमणतीति कल्याणी । 'कर्मणोऽण्' (५।१।७२) अण्प्र० । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[मासमधीते]** 'इंङ्क अध्ययने' (११०४) इ, अधिपूर्व० । वर्त्त० ते । समानानां० (१।२।१) दीर्घः ।

**द्रव्य-गुण-क्रियादिभिर्व्याप्तिरत्यन्तसंयोगः ।**

**[मासस्य मासे वा द्व्यहं गुडधानाः]** द्वि-अहन् । द्वयोरह्नोः समाहारः = द्व्यहम् । 'द्विगोरन्नह्नोऽट्' (७।३।९९) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । द्वितीया अम् ।

**[मासस्य मासे वा एकरात्रं कल्याणी]** एका चासौ रात्रिश्च = एकरात्रम् । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासः । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः ।

**[मासस्य मासे वा द्विरधीते]** द्वि । द्वौ वारावस्य । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः ॥छ॥

***द्वितीयाप्रकरणं समाप्तं दशभिः सूत्रैः ॥***

**सिद्धौ तृतीया ॥२।२।४३॥**

**[सिद्धौ तृतीया]** सिद्धि सप्तमी ङि । त्रि । त्रयाणां पूरणी = तृतीया । 'त्रेस्तृ च' (७।१।१६६) तीयप्र०-तृ आदेशः । 'आत्' (२।४।१८) आप् ।

**[मासेन मासाभ्यां मासैर्वाऽऽवश्यकमधीतम्]** 'इंङ्क अध्ययने' (११०४) इ, अधिपूर्व० । अधीयते स्माऽस्मिन्निति । 'अद्यर्थाच्चाऽऽधारे' (५।१।१२) क्तप्र० → त ।

**[क्रोशेन क्रोशाभ्यां क्रोशैर्वा प्राभृतमधीतम्]** 'अधीतं पूर्ववत् ।

**[मासमधीत आचारो नाऽनेन गृहीतः]** 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । प्रथमा सि । 'सो रुः' (२।१।७२) स० → र० । 'ग्रहीश् उपादाने' (१५१७) ग्रह् । गृह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'ग्रह-व्रश्च-भ्रस्ज-प्रच्छः' (४।१।८४) य्वृत् गृ० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'गृह्णोऽपरोक्षायां दीर्घः' (४।४।३४) दीर्घः इ० → ई० ॥छ॥

### हेतु-कर्तृ-करणेत्थम्भूतलक्षणे ।।२।२।४४।।

**[हेतुकर्तृकरणेत्थम्भूतलक्षणे]** इत्थं 'भू सत्तायाम्' (१) भू । इत्थम्भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । इत्थम्भूतस्य लक्षणमिति विग्रहः स लक्ष्यते येनेति त्वर्थकथनमात्रं । हेतुश्च कर्ता च करणं च इत्थम्भूतलक्षणं च = हेतुकतृकरणेत्थम्भूतलक्षणं, तस्मिन् ।

**[अपि भवान् कमण्डलुना छात्रमद्राक्षीत्]** अपि प्रथमा सि । 'अव्ययस्य (३।२।७) सिलोपः । 'मडुण् भूषायाम्' (१६३३) मण्ड्, कपूर्व० । केन = पानीयेन मण्ड्यते इति कमण्डलुः । 'गूहलु-गुग्गुलु-कमण्डलवः' (उणा० ८२४) आलुप्र०-कमण्डलुनिपातः, तेन ।卐 छदण् अपवारणे' (१९६४) छद् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । छादयत्युपाध्यायस्य दोषानिति छात्रः । 'हु-या-मा-श्रु-वसि-भसि-गु-वी-पचि-वचि-धृ-यम्यमि-मनि-तनि-सदि-छादि-क्षि-क्षदि-लुपि-पति-धूभ्यस्त्रः' (उणा० ४५१) त्रप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'अघोषे प्रथमो०' (१।३।५०) द० → त० । द्वितीया अम् । 'समानादमोऽतः (१।४।४६) अलोपः । 'दृशृं प्रेक्षणे' (४९५) दृश् । अद्यतनी दि । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'सः सिजस्तेर्दि-स्योः' (४।३।६५) ईत् । 'अः सृजि-दृशोऽकिति' (४।४।१११) अकारागमुः । 'इवर्णादे०' (१।२।२१) र० । 'व्यञ्जनानामनिटि' (४।३।४५) वृद्धिः आ । 'यज-सृज-मृज०' (२।१।८७) श० → ष० । 'ष-ढोः कस्सि' (२।१।६२) ष० → क० । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[धान्येनाऽर्थी]** अर्थोऽस्याऽस्तीति । 'अर्था-ऽर्थान्ताद् भावात्' (७।२।८) इन्प्र० । 'अवर्णे०' (७।४।६८) अलोपः ।।छ।।

### सहार्थे ।।२।२।४५।।

**[सहार्थे]**卐卐 सहस्याऽर्थः = सहार्थस्तस्मिन् ।

**[पुत्रेण सहाऽऽगतः]** अम (३९२) - द्रम(३९३) - हम्म (३९४) - मीमृ (३९५)- 'गम्लृं गतौ' (३९६) गम्, आङ्पूर्व० । आगच्छति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति' (४।२।५५) मलोपः ।

**[पुत्रेण सह गोमान्]** गो । गावो विद्यन्ते यस्याऽसौ । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'अभ्वादेरत्वसः सौ' (१।४।९०) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

एकेनापि सुपुत्रेण, सिंही स्वपिति निर्भरम् ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।।१।।

**[दशभिः]** दशन् । तृतीया भिस् । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।

**[पुत्रैः]** पुत्र । तृतीया भिस् । 'भिस ऐस्' (१।४।२) ऐस् । ऐदौत् सन्ध्यक्षरैः (१।२।१२) ऐ ।

**[वहति]** 'वहीं प्रापणे' (९९६) वह् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[गर्दभी]** गर्दभी । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[चैत्रमैत्राभ्यां सह कृतम्]** सह 'डुकृंग् करणे' (८८८) कृ । सह क्रियते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ।।छ।।

---

卐 उणादौ - धातुपारायणे च 'छदण् संवरणे ।

P. 卐卐 सह लक्षणोऽर्थो यस्याऽसौ सहार्थः ।

**यद्भेदैस्तद्वदाख्या ॥२।२।४६॥**

**[यद्भेदैस्तद्वदाख्या]** यस्य भेदिनो भेदाः = यद्भेदास्तैः, ते भेदा विद्यन्ते यस्य सः = तद्वान् । 'तदस्याऽस्त्य०' (७।२।१) मतुप्र०। 'मावर्णान्तोपान्ता०' (२।१।९४) म० → व० । तद्वतोऽर्थस्याऽऽख्या = तद्वदाख्या । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[अक्ष्णा काणः]** अक्षि । तृतीया टा । 'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्याऽन्' (१।४।६३) अन् । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[प्रकृत्या दर्शनीयः]** 'दृशृं प्रेक्षणे' (४९५) दृश् । दृश्यते = दर्शनीयः । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[गोत्रेण काश्यपः]** कश्यप । कश्यस्याऽपत्यं वृद्धं = काश्यपः । 'विदादेर्वृद्धे' (६।१।४१) अञ्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।

**[अक्षि काणं पश्य]** अक्षि । द्वि० अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । 'दृशृं प्रेक्षणे' (४९५) दृश् । पञ्चमी हि । 'श्रौति-कृवु-धिवु०' (४।२।१०८) पश्य आदेशः । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः ॥छ॥

**कृताद्यैः ॥२।२।४७॥**

**[कृताद्यैः]** कृत्(त) आद्यो येषां ते = कृताद्यास्तैः ।

**[कृतं तेन]** कृतं । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ॥छ॥

**काले भान्नवाऽऽधारे ॥२।२।४८॥**

**[काले भान्नवाऽऽधारे]** काल सप्तमी ङि । भ पञ्चमी ङसि । नवा प्रथमा सि । 'धुटस्तृतीयः' (२।१।७६) त० → द० । 'तृतीयस्य पञ्चमे' (१।३।१) द० → न० । आधार सप्तमी ङि ।

**[पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्]** पुष्य । पुष्येण चन्द्रयुक्तेन युक्तः कालोऽपि पुष्यः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० - 'लुप् त्वप्रयुक्ते' अण्लोपः । पयस् । पयसा(सि) संस्कृतं = पायसम् । 'संस्कृते भक्ष्ये' (६।२।१४०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अशश् भोजने' (१५५८) अश् । सप्तमी यात् । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) ई० ।

**[चित्रासु जाता चित्रा माणविका तस्यां चित्रायामास्ते]** मनोरपत्यं मूढं = माणवः । 'माणवः कुत्सायाम्' (६।१।९५) अण्प्र०निपातः । माणव एव = माणवकः । 'यावादिभ्यः कः' (७।३।१५) स्वार्थे कप्र० । 'आत्' (२।४।१५) आप्प्र० → आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[तिलपुष्पेषु यत् क्षीरम्, तिलच्छेदेषु यद् दधि]** तिलानां पुष्पाणि = तिलपुष्पाणि, तेषु । तिलानां छेदाः = तिलच्छेदास्तेषु ।

**[अद्य पुष्यं विद्धि]** 'विदक् ज्ञाने' (१०९९) विद् । पञ्चमी हि । 'हु-धुटो हेर्धिः' (४।२।८३) हि० → धि० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) द० → द० ॥छ॥

### प्रसितोत्सुका-ऽवबद्धैः ॥२।२।४९॥

**[प्रसितोत्सुकाऽवबद्धैः]** प्रसितश्च उत्सुकश्च 卐 अवबद्धश्च = प्रसितोत्सुकाऽवबद्धास्तैः ।

**[केशैः प्रसितः, केशेषु प्रसितः]** 'षिंगट् बन्धने' (१२८७) षि । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सि, प्रपूर्व० । प्रसिनोति स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ।

**[गृहेणोत्सुकः, गृहे उत्सुक]** उद्गतं सुष्ठु मनोऽस्याऽसौ उत्सुकः । 'उदुत्सोरुन्मनसि' (७।१।१९२) कप्र० ।

**[केशैरवबद्धः, केशेष्ववबद्धः]** 'बन्धंश् बन्धने' (१५५२) बन्ध् । बध्नाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अधश्चतुर्थात् त-थोर्धः' (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध० → द० । प्रथमा सि ॥छ॥

### व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥२।२।५०॥

**[व्याप्ये]** 'आप्लृंट् व्याप्तौ' (१३०७) आप्, विपूर्व० । विशेषेणाऽऽप्यते = प्राप्यते इति व्याप्यम् । 'शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात्' (५।१।२९) यप्र० । तस्मिन् ।

**[द्विद्रोणादिभ्यः]** द्विद्रोण आदिर्येषां ते = द्विद्रोणादयस्तेभ्यः ।

**[वीप्सायाम्]** 'आप्लृंट् व्याप्तौ' (१३०७) आप्, विपूर्व० । विशेषेणाऽऽप्तुमिच्छा वीप्सा । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'ज्ञप्यापो ज्ञीपीप्, न च द्विः सि सनि (४।१।१६) ईप् । 'समानानां०' (१।२।१) दीर्घः । वीप्सायां = वीप्सा । 'शंसि-प्रत्ययात्' (५।३।१०५) अप्र० । 'अतः' (४।३।८२) अलोपः । 'आत्' (२।४।१८) आप् । सप्तमी ङि । 'आपो ङितां यै-यास्-यास्-याम्' (१।४।१७) याम् ।

**[द्विद्रोणेन धान्यं क्रीणाति, द्विद्रोणं द्विद्रोणं क्रीणाति]** द्वि-द्रोण । द्वौ द्रोणौ मानमस्य तद् द्विद्रोणं, तेन । 'मानम्' (६।४।१६९) इकणप्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । द्वौ द्रौणौ मानमस्य तद् द्विद्रोणम् । द्वि० अम् । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'वीप्सायाम्' (७।४।८०) द्विद्रोणं द्वित्वम् । 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र० । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[पञ्चकेन पशून् क्रीणाति, पञ्चकं पञ्चकं क्रीणाति]** पञ्चन् । पञ्चेति संख्यामानमस्य । 'संख्यायाः संघ-सूत्र-पाठे' (६।४।१७१) इति यथाविहितः । 'संख्या-ऽतेश्चाऽशत्-ति-ष्टेः कः' (६।४।१३०) कप्र० । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । तेन, तम् । 'वीप्सायाम्' (७।४।८०) द्विर्वचनम् । पशु द्वितीया शस् । 'शसोऽता सश्च नः पुंसि' (१।४।४९) दीर्घः - स० → न० ॥छ॥

### समो ज्ञोऽस्मृतौ वा ॥२।२।५१॥

**[समो ज्ञोऽस्मृतौ वा]** सम् पञ्चमी ङसि । ज्ञा षष्ठी ङस् । 'लुगाऽऽतोऽनापः' (२।१।१०७) आलोपः । स्मरणं = स्मृतिः । न स्मृतिरस्मृतिः । 'नञत्' (३।२।१२५) न० → अ०, तस्यां = अस्मृतौ, सप्तमी ङि । वा प्रथमा सि ।

**[मात्रा संजानीते, मातरं संजानीते]** मातृ तृतीया टा । 'इवर्णादेरस्वे स्वरे य-व-र-लम्' (१।२।२१) र० । मातृ द्वितीया अम् । 'अर्डो च' (१।४।३९) अर् । 'ज्ञांश् अवबोधने' (१५४०) ज्ञा संपूर्व० । वर्त्त० ते । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । एषामी व्यञ्जनेऽदः (४।२।९७) आ० → ई० । 'जा ज्ञा-जनोऽत्यादौ' (४।२।१०४) जा ॥छ॥

---

P 卐 अवबध्यते स्म । क्तप्र० । 'अधश्चतुर्थात् त-थोर्धः' (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध० → द० ।

### दामः संप्रदानेऽधर्म्ये आत्मने च ।।२।२।५२।।

**[दामः]** दाम् पञ्चमी ङसि(?) (षष्ठी ङस्) ।

**[संप्रदाने]** 'डुदांग्क दाने' (११३८) दा, संपूर्व० । संप्रदीयते यस्मै तत् = संप्रदानं, तस्मिन् । 'बहुलम्' (५।१।२) अनट्प्र० → अन ।

**[अधर्म्ये]** न धर्म्यं = अधर्म्यं, तस्मिन् ।

**[आत्मने च]** आत्मार्थं पदं = आत्मनेपदम् । 'ते लुग्वा' (३।२।१०८) पदलोपः । प्रथमा सि । सूत्रत्वात् सिलोपः । च प्रथमा सि । 'अव्ययस्य (३।२।७) सिलोपः ।

**[दास्या संप्रयच्छते]** दासी तृतीया टा । 'दां दाने' (७ ) दा, संप्रपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु-पा-घ्रा०' (४।२।१०८) यच्छ आदेशः ।

**[दास्यै संददाति]** दासी चतुर्थी ङे । 'स्त्रीदूतः' (१।४।२९) दै० → ऐ० । 'डुदांग्क् दाने' (११३८) दा, संपूर्व० । वर्त्त० तिव् । 'हवः शिति' (४।१।१२) दा द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् ।।छ।।

*॥ इति तृतीयाप्रकरणं समाप्तं दशभिः सूत्रैः ॥*

### चतुर्थी ।।२।२।५३।।

**[चतुर्थी]** चतुर्ण्णां (चतसृणां) पूरणी = चतुर्थी । 'चतुरः' (७।१।१६३) थट्प्र० → थ । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[द्विजाय गां ददाति]** द्विज चतुर्थी ङे । 'ङे-ङस्योर्याऽऽतौ' (१।४।६) य । 'अत आ स्यादौ जस्-भ्याम्-ये' (१।४।१) अ० → आ० । गो द्वि० अम् । 'आ अम्-शसोऽता' (१।४।७५) आ ।

**[शिष्याभ्यां धर्ममुपदिशति]** 'शासूक् अनुशिष्टौ' (१०९५) शास् । शिष्यते इति शिष्यः । 'दृ-वृग्-स्तु-जुषेति-शासः' (५।१।४०) क्यप्प्र० → य । 'इसासः शासोऽङ्-व्यञ्जने' (४।४।११८) शिस् । 'नाम्यन्तस्था०' (२।३।१५) षत्वम् । ताभ्यां = शिष्याभ्याम् । 'अत आ स्यादौ०' (१।४।१) आ ।

**[पत्ये शेते]** पति चतुर्थी ङे । 'शीङ्क् स्वप्ने' (११०५) शी । वर्त्त० ते । 'शीङ एः शिति' (४।३।१०४) ए ।

**[राज्ञे विज्ञपयति]** राजन् चतुर्थी ङे । 'अनोऽस्य' (२।१।१०८) अलोपः । 'ज्ञांश् अवबोधने' (१५४०) ज्ञा, विपूर्व० । विजानन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'अर्त्ति-री-व्ली०' (४।२।२१) पोऽन्तः । 'मारण-तोषण-निशाने ज्ञश्च' (४।२।३०) ह्रस्वः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।।छ।।

### तादर्थ्ये ।।२।२।५४।।

**[तादर्थ्ये]** तद् - अर्थ । तस्मा इदं = तदर्थम् । तदर्थस्य भावः = तादर्थ्यम् । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र० → य । 'वृद्धि स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्मिन् = तादर्थ्ये ।

**[अवहननायोलूखलम्]** 'हनंक् हिंसा-गत्योः' (११००) हन्, अवपूर्व० । अवहन्यते । 'अनट्' (५।३।१२४) अनट्प्र०, तस्मै ।।छ।।

## रुचिकृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ।।२।२।५५।।

**[रुचिकृप्यर्थधारिभिः]** रुचिश्च कृपिश्च = रुचिकृपी, रुचिकृपी अर्थो(र्थौ) येषां ते = रुचिकृप्यर्थाः, रुचिकृप्यर्थाश्च धारिश्च = रुचिकृप्यर्थधारयस्तैः = रुचिकृप्यर्थधारिभिः ।

**[प्रेयविकारोत्तमर्णेषु]** प्रेयश्च विकारश्च उत्तमर्णश्च = प्रेयविकारोत्तमर्णास्तेषु = प्रेयविकारोत्तमर्णेषु, सप्तमी सुप् । 'एद् बहुस्भोसि' (१।४।४) ए । 'नाम्यन्तस्था०' (२।३।१५) षत्वम् ।

**[जिनदत्ताय रोचते धर्मः]** जिन 'डुदांग्क् दाने' (११३८) दा । जिना एनं देयासुर्जिनदत्तः । 'तिक्कृतौ नाम्नि' (५।१।७१) तिप्र०? (क्तप्र०) । 'दत्' (४।४।१०) । दत् आदेशस्तस्मै । 'रुचि अभिप्रीत्यां च' (९३८) रुच् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[गुरुदत्ताय स्वदते दधि]** गुरु 'डुदांग्क् दाने' (११३८) दा । गुरव एनं देयासुर्गुरुदत्तः । "तिक्कृतौ नाम्नि' (५।१।७१) तिप्र० (?) (क्तप्र०) । 'दत्' (४।४।१०) दत् आदेशस्तस्मै । 'ष्वदि आस्वादने' (७२९) ष्वद् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वद् । वर्त्त० ते । कर्त्तर्यनद्भ्यः० (३।४।७१) शव् ।

**[मूत्राय कल्पते यवागूः]** 'कृपौङ् सामर्थ्ये' (९५९) कृप् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । 'ऋ-र लृ-लं कृपोऽकृपीटादिषु' (२।३।९९) र० → ल० । 'युक् मिश्रणे' (१०८०) यु । यूयते = मिश्रते पानीयादिनेति यवागूः । 'योरागूः' (उणा० ८५०) आगूप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ० । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[उच्चाराय संपद्यते यवान्नम्]** 'पदिंच् गतौ' (१२५७) पद्, संपूर्व० । वर्त्त० ते । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[चैत्राय शतं धारयति]** 'धृंग् धारणे' (८८७) धृ । धरन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० → इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।।छ।।

## प्रत्याङः श्रुवाऽर्थिनि ।।२।२।५६।।

**[प्रत्याङः]** प्रतिश्च आङ् च = प्रत्याङ्, तस्मात् = प्रत्याङः, पञ्चमी ङसि ।

**[श्रुवाऽर्थिनि]** श्रु तृतीया टा । 'संयोगात्' (२।१।५२) उव् । अर्थो विद्यते यस्याऽसौ । 'अर्था-ऽर्थान्ताद् भावात्' (७।२।८) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्मिन् ।

**[द्विजाय गां प्रतिशृणोति]** 'श्रुंट् श्रवणे' (१२९६) श्रु, प्रतिपूर्व० । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र० → नु । 'श्रौति-कृवु-धिवु०' (४।२।१०८) शृ । 'उ-श्नोः' (४।३।२) गु० ओ । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० ।

**[द्विजाय गामाशृणोति]** 'श्रुंट् श्रवणे' (१२९६) श्रु, आङ्पूर्व० । वर्त्त० तिव् । शेषं पूर्ववत् ।।छ।।

## प्रत्यनोर्गृणाऽऽख्यातरि ।।२।२।५७।।

**[प्रत्यनोर्]** प्रतिश्च अनुश्च = प्रत्यनु, तस्मात् = प्रत्यनोः, पञ्चमी ङसि । 'ङित्यदिति' (१।४।२३) ओ । 'एदोद्भ्यां ङसि-ङसो रः' (१।४।३५) र० ।

**[गृणाऽऽख्यातरि]** गृणा तृतीया टा । 'लुगाऽऽतोऽनापः' (२।१।१०७) आलोपः ।卐 'ख्यांक् प्रथने' (१०७१) ख्या, आङ्पूर्व० । आख्यातीति आख्याता । 'णक-तृचौ' (५।१।४८) तृच्प्र०, तस्मिन् = आख्यातरि, सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् ।

**[आचार्याय प्रतिगृणाति]** 'गृश् शब्दे' (१५३८) गॄ, प्रतिपूर्व० । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । 'प्वादेर्ह्रस्वः' (४।२।१०५) ह्रस्वत्वम् । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[आचार्यायाऽनुगृणाति]** 'गृश् शब्दे' (१५३८) गॄ, अनुपूर्व० । वर्त्त० तिव् । शेषं पूर्ववत् ॥छ॥

## यद्वीक्ष्ये राधीक्षी ॥२।२।५८॥

**[यद्वीक्ष्ये]** यद् 'ईक्षि दर्शने' (८८२) ईक्ष्, विपूर्व० । विशेषेणेक्ष्यते यत् तद् वीक्ष्यम् । 'य एच्चातः' (५।१।२८) यप्र० । यस्य वीक्ष्यं = यद्वीक्ष्यम्, तस्मिन् = यद्वीक्ष्ये, सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[राधीक्षी]** राधिश्च ईक्षिश्च = राधीक्षी । प्रथमा औ । 'औरीः' (१।४।५६) ई (?) ('इदुतो०' (१।४।२१) ई) ।

**[मैत्राय राध्यति]** मैत्र चतुर्थी ङे । 'राधंच् वृद्धौ' (११५६) राध् । वर्त्त० तिव् । 'दिवादेः०' (३।४।७२) श्यप्र० → य ।

**[मैत्रायेक्षते]** मैत्र चतुर्थी ङे । 'ईक्षि दर्शने' (८८२) इक्ष् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम्]** ईक्षा(क्ष)ते = ईक्षितव्यम् । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । परेषां स्त्रियः = परस्त्रियस्ताभ्यः ।

**[मैत्राय राधयति]** 'राधं संसिद्धौ' (१३०४) राध् । राध्नुवन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० → इ । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतो०' (१।२।२३) अय् ।

**[मैत्राय साधयति]** राधं (१३०४) - 'साधंट् संसिद्धौ' (१३०५) साध् । साध्नुवन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० → इ । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ॥छ॥

## उत्पातेन ज्ञाप्ये ॥२।२।५९॥

**[उत्पातेन]** 'पत्लृ गतौ' (९६२) पत्, उत्पूर्व० । उत्पतनमुत्पातः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । तृतीया टा । 'टा-ङसोरिन-स्यौ' (१।४।५) इन । 'अवर्णस्ये०' (१।२।६) ए ।

**[ज्ञाप्ये]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । जानन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । ज्ञाप्यते = ज्ञाप्यम् । 'य एच्चातः' (५।१।२८) यप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपस्तस्मिन् = ज्ञाप्ये ।

बाताय कपिला विद्युदातपायाऽतिलोहिनी ।
पीता वर्षाय विज्ञेया, दुर्भिक्षाय सिता भवेत् ॥१॥

**[विज्ञेया]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा, विपूर्व० । विज्ञायते = विज्ञेया । 'य एच्चातः' (५।१।२८) यप्र०, आ → ए० ।

---

卐 क्रियारत्नसमुच्चये - 'ख्यांक् प्रकथने' - प्रकटने इत्यन्ये । धातुपारायणे - 'ख्यांक् प्रथने' प्रकथने इत्यन्ये ।

**[भवेत्]** 'भू सत्तायाम्' (१) भू । सप्तमी यात् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतो०' (१।२।२४) अव् । 'यः सप्तम्याः' (४।२।१२२) या० → इ० । 'अवर्णस्ये०' (१।२।६) ए ।

**[राज्ञ इदं छत्रमायातं(न्तं) विद्धि राजानम्]** राजन् षष्ठी ङस् । 'अनोऽस्य' (२।१।१०८) अलोपः । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न० → ञ० । 'सो रुः' (२।१।७२) स० → र० । 'रोर्यः' (१।३।२६) र० → य० । 'स्वरे वा' (१।३।२४) यलोपः । इदम् प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । छत्र द्वितीया अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । 'यांक् प्रापणे' (१०६२) या, आङ्पूर्व० । आयातीति आयातः (न्), तम् । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् । द्वि० अम् । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'विदक् ज्ञाने' (१०९९) विद् । पञ्चमी हि । 'हु-धुटो हेर्धिः' (४।२।८३) हि० → धि० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) द० → द० ।।छ।।

**श्लाघ-ह्नु-स्था-शपा प्रयोज्ये ।।२।२।६०।।**

**[श्लाघह्नुस्थाशपा]** श्लाघश्च ह्नुश्च स्थाश्च शप् च = श्लाघह्नुस्थाशप्, तेन = श्लाघह्नुस्थाशपा, तृतीया टा ।

**[प्रयोज्ये]**卐 'युजण संपर्चने' (१९४१) युज्, प्रपूर्व० । 'युजादेर्नवा' (३।४।१८) णिच्प्र० । प्रयोज्यत इति प्रयोज्यः । 'य एच्चातः' (५।१।२८) यप्र० । 'णेरनिटि' (४।३।८३) णिज्लोपस्तस्मिन् = प्रयोज्ये, सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[मैत्राय श्लाघते]** मैत्र चतुर्थी ङे । 'ङे-ङस्योर्याऽऽतौ' (१।४।६) य । 'अत आ स्यादौ०' (१।४।१) आ । 'श्लाघृङ् कत्थने' (६४५) श्लाघ् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[मैत्राय ह्नुते]** 'ह्नुंङ्क् अपनयने' (११०६) ह्नु । वर्त्त० ते ।

**[मैत्राय तिष्ठते]** स्था (२।२।२०) सूत्रवत् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) तिष्ठ आदेशः ।

**[मैत्राय शपते]** 'शपीं आक्रोशे' (९१६) शप् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।।छ।।

**तुमोऽर्थे भाववचनात् ।।२।२।६१।।**

**[तुमोऽर्थे]** तुम् षष्ठी ङस् । अर्थ सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[भाववचनात्]** भवनं = भावः । 'वचंक् भाषणे' (१०९६) वच् । भावं वक्तीति । 'रम्यादिभ्यः कर्त्तरि' (५।३।१२६) अनट्प्र० → अन, तस्मात् ।

**[पाकाय व्रजति]** 'डुपचींष् पाके' (८९२) पच् । पक्तुं = पाकाय । 'भाववचनाः' (५।३।१५) घञ्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च० → क० । चतुर्थी ङे । 'ङे - ङस्योर्याऽऽतौ' (१।४।६) य । 'अत आ स्यादौ०' (१।४।१) आ ।

**[पक्तये व्रजति]** पचनं = पक्तिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति (?) ('गा-पा-पचो भावे' (५।३।९५) क्तिप्र० → ति) । 'च-जः क-गम्' (२।१।८६) च० → क०, तस्यै ।

**[पचनाय व्रजति]** पच्यते = पचनम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन, तस्मै ।

---

P 卐 'युजृंपी योगे' (१४७६) युज्, प्रपूर्व० । प्रयुङ्क्ते कश्चित्, तं प्रयुञ्जानमन्यः प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । प्रयोज्यत इति प्रयोज्यः, तस्मिन् ।

**[इज्यायै व्रजति]** 'यजीं देवपूजा-सङ्गतिकरण-दानेषु' (९९१) यज् । यष्टुं = इज्या । 'आस्यटि-व्रज्-यजः क्यप्' (५।३।९७) क्यप्प्र० ⟶ य । 'यजादि-वचेः किति' (४।१।७९) य्वृद् य० ⟶ इ० । 'आत्' (२।४।१८) आप् । चतुर्थी ङे । 'आपो ङितां यै-यास्-यास्-याम्' (१।४।१७)यै । धृज (१३०) - धृजु (१३१) - ध्वज (१३२) - ध्वजु (१३३) - ध्रज (१३४) - ध्रजु (१३५) - वज (१३६) 'व्रज गतौ' (१३७) व्रज् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् ।

**[पाचकस्य व्रज्या]** पक्ष्यतीति पाचकः । 'क्रियायां क्रियार्थायां तुम्-णकच् भविष्यन्ती' (५।३।१३) णकच्प्र० ⟶ अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'च-जः क-गम्' (२।१।८६) च० ⟶ क०, तस्य । 'व्रज गतौ' (१३७) व्रज् । व्रजनं = व्रज्या । 'आस्यटि-व्रज्-यजः क्यप्' (५।३।९७) क्यप्प्र० ⟶ य । 'आत्' (२।४।१८) आप्प्र० ⟶ आ ।

**[गोदायस्य परिसर्या]** गां दास्यतीति गोदायकः । 'क्रियायां क्रियार्थायां तुम्-णकच् भविष्यन्ती' (५।३।१३) णकच्प्र० ⟶ अक । 'आत ऐः कृञ्चौ' (४।३।५३) आ० ⟶ ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय्, तस्य । 'सृं गतौ' (२५ ) सृ, परिपूर्व० । परिसरणं = परिसर्या । 'परेः सृ-चरेर्यः' (५।३।१०२) यप्र० । 'नामिनो गुणो०' (४।३।१) गु० अर् । 'आत्' (२।४।१८) आप्प्र० । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

## गम्यस्याऽऽप्ये ॥२।२।६२॥

**[गम्यस्य]** गम् । गमनं = गम्यम् । 'य एच्चातः' (५।१।२८) यप्र० । षष्ठी ङस् । 'टा-ङसोरिन-स्यौ' (१।४।५) स्य ।

**[आप्ये]** 'आप्लृंट् व्याप्तौ' (१३०७) आप् । आप्यते = आप्यम्, तस्मिन् = आप्ये, सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[एधेभ्यो व्रजति]** एध चतुर्थी भ्यस् । 'एद् बहुस्भोसि' (१।४।४) ए । 'व्रज गतौ' (१३७) व्रज् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[एधानाहर्तुं व्रजति]** एध द्वितीया शस् । 'शसोऽता सश्च नः पुंसि' (१।४।४९) दीर्घः - स० ⟶ न० । 'हृंग् हरणे' (८८५) हृ, आङ्पूर्व० । आहरणाय = आहर्तुम् । 'क्रियायां क्रियार्थायां तुम्०' (५।३।१३) तुम्प्र० । 'नामिनो गुणो०' (४।३।१) अर् । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । व्रजति पूर्ववत् ।

**[प्रविश पिण्डीं द्वारम्]** 'विशंत् प्रवेशने' (१४१५) विश्, प्रपूर्व० । पञ्चमी हि । 'तुदादेः शः' (३।४।८१) शप्र० । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः ॥छ॥

## गतेर्नवाऽनाप्ते ॥२।२।६३॥

**[गतेर्नवाऽनाप्ते]** गति पञ्चमी ङसि । 'ङित्यदिति' (१।४।२३) इ० ⟶ ए० । 'एदोद्भ्यां ङसि-ङसो रः' (१।४।३५) र० । नवा प्रथमा सि । 卐 न आप्तमनाप्तम् । 'नञत्' (३।२।१२५) न० ⟶ अ०, तस्मिन् ।

**[विप्रनष्टः पन्थानं पथे वा गच्छति]** 'नशौच् अदर्शने' (१२०२) नश्, वि-प्रपूर्व० । विप्रनश्यति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० ⟶ त । 'यज-सृज-मृज०' (२।१।८७) श० ⟶ ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० ⟶ ट० । प्रथमा सि । 'सो रुः' (२।१।७२) र० । पथिन् द्वितीया अम् । 'एः' (१।४।७७) इ० ⟶ आ० । पथिन् चतुर्थी ङे । 'इन् ङीस्वरे लुक्' (१।४।७९) इन्लोपः ।

**[उत्पथेन पन्थानं पथे वा गच्छति]** उत्-पथिन् । उत्क्रान्तः पन्थानं = उत्पथः । 'ऋक्-पूः-पथ्यपोऽत्' (७।३।७६)

P 卐 न आप्तः = अनाप्तः ।

अत्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) इन्लोपस्तेन ।

**[स्त्रियं गच्छति]** स्त्री द्वितीया अम् । 'वाऽम्-शसि' (२।१।५५) इय् । 'गम्लृं गतौ' (३९६) गम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'गमिषद्यमश्छः' (४।२।१०६) म० → छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ० → च० ।

**[ग्रामस्य गन्ता]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'गमिषद्यमश्छः' (४।२।१०६) म० → छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमो०' (१।३।५०) छ० → च० । गच्छतीति गन्ता । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) सि० → डा० → आ० । 'डित्यन्त्य०' (२।१।११४) अन्त्यस्वरादिलोपः ।।छा।

**मन्यस्याऽनावादिभ्योऽतिकुत्सने** ।।२।२।६४।।

**[मन्यस्य]** बुधिं (१२६२) - 'मनिंच् ज्ञाने' (१२६३) मन् । मन्यते = मन्यम् । 'य एच्चातः' (५।१।२८) यप्र०, तस्य = मन्यस्य, षष्ठी ङस् । 'टा-ङसोरिन-स्यौ' (१।४।५) स्य ।

**[अनावादिभ्योऽतिकुत्सने]** नौरादिर्येषां ते = नावादयः, न नावादयोऽनावादयः । 'नञत्' (३।२।१२५) न० → अ०, तेभ्यः । 'सो रुः' (२।१।७२) र० । 'अतोऽति रोरुः' (१।३।२०) र० → उ० । 'अवर्णस्येवर्णादिनै०' (१।२।६) ओ । 'एदोतः पदान्तेऽस्य लुक्' (१।२।२७) अलोपः । अतीव कुत्सनं = अतिकुत्सनम्, तस्मिन् = अतिकुत्सने, सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये]** न प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । युष्मद् द्वि० अम् । 'अमा त्वा-मा' (२।१।२४) त्वा । तृण चतुर्थी ङे । 'ङे-ङस्योर्याऽऽतौ' (१।४।६) य० । 'अत आ स्यादौ०' (१।४।१) आ० । तृण द्वि० अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । बुधिं (१२६२) - 'मनिंच् ज्ञाने' (१२६३) मन् । वर्त्त० ए । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[न त्वा शुने मन्ये, न त्वा श्वानं मन्ये]** श्वन् चतुर्थी ङे । 'श्वन्-युवन्-मघोनो ङीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व० → उ० । 'मनिंच् ज्ञाने' (१२६३) मन् । वर्त्त० ए । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[न त्वा तृणं चिन्तयामि]** 'चितुण् स्मृत्याम्' (१६४५) चित् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । वर्त्त० मिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'म-व्यस्याः' (४।२।११३) अ० → आ० ।

**[न त्वा तृणं मन्वे]** युष्मद् द्वितीया अम् । 'अमा त्वा-मा' (२।१।२४) त्वा आदेशः । 'मनूयि बोधने' (१५०७) मन् । वर्त्त० ए । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'इवर्णादे०' (१।२।२१) वत्वम् ।

**[त्वां तृणं मन्ये]** युष्मद द्वितीया अम् । 'लोकात्' (१।१।३) अद् अग्रे विश्लेषियइ । 'त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्' (२।१।११) त्व आदेशः । 'अमौ मः' (२।१।१६) म० । युष्मदस्मदोः (२।१।६) द० → आ० । 'समानानां०' (१।२।१) दीर्घः । मन् वर्त्त० ए । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[हरिमपि अमंसत तृणाय]** मन् अद्यतनी त(अन्त) । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[न त्वा तृणस्य मन्ता]** मन् श्वस्तनी ता ॥छ॥

**हित-सुखाभ्याम्** ॥२।२।६५॥

**[हितसुखाभ्याम्]** हितं च सुखं च = हितसुखे, ताभ्यां = हितसुखाभ्यां, पञ्चमी भ्याम् । 'अत आ स्यादौ०' (१।४।१) आ ।

**[आमयाविने आमयाविनो वा हितम्]** आमयोऽस्याऽस्तीति आमयावी । 'आमयाद् दीर्घश्च' (७।२।४८) विन्प्र० दीर्घ आ । 'हिंट् गति-वृद्धयोः' (१२९५) हि । हिनोति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । द्वि० अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**तद्भद्रा-ऽऽयुष्य-क्षेमा-ऽर्थाऽर्थेनाऽऽशिषि** ॥२।२।६६॥

**[तद्भद्राऽऽयुष्यक्षेमाऽर्थाऽर्थेनाऽऽशिषि]** ते च भद्रं च आयुष्यं च क्षेमं च अर्थश्च = तद्भद्राऽऽयुष्यक्षेमार्थाः, तद्भद्राऽऽयुष्यक्षेमार्था अर्था यस्याऽसौ तद्भद्राऽऽयुष्यक्षेमार्थार्थ(र्थः), तेन = तद्भद्राऽऽयुष्यक्षेमाऽर्थाऽर्थेन । आशिष् सप्तमी ङि ।

**[हितं जीवेभ्यो भूयात्, हितं जीवानां भूयात्]** 'भू सत्तायाम्' (१) भू । आशीः क्यात्प्र० → यात् ।

**[पथ्यं मैत्राय भूयात्, पथ्यं मैत्रस्य भूयात्]** पथिन् । पथोऽनपेतं = पथ्यम् । 'हृद्य-पद्य-तुल्य-मूल्य-वश्य-पथ्य-वयस्य-धेनुष्या-गार्हपत्य-जन्य-धर्म्यम्' (७।१।११) पथ्यं निपातः ।

**[भद्रमस्तु जिनशासनाय, भद्रमस्तु जिनशासनस्य]** 'असक् भुवि' (११०२) अस् । पञ्चमी तुव् → तु ।

**[आयुष्यमस्तु चैत्राय, आयुष्यमस्तु चैत्रस्य]** आयुस् । आयुरेवाऽऽयुष्यम् । 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) ट्यण्प्र० → य । 'नाम्यन्तस्था०' (२।३।१५) षत्वम् । यद्वा आयुः प्रयोजनमस्य । 'स्वर्ग-स्वस्तिवाचनादिभ्यो०' (६।४।१२३) यप्र० ।

**[निरामयं भूयात् साधुभ्यः, निरामयं भूयात् साधूनाम्]** आमयस्याभावः । 'अमव्ययीभावस्याऽतो०' (३।२।२) अम् ।

**[कार्यं भूयात् मैत्राय, कार्यं भूयात् मैत्रस्य]** 'डुकृंग् करणे' (८८८) कृ । क्रियते इति कार्यम् । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र० → य । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

तद्ग्रहणमिति-तर्हि प्रागप्यर्थग्रहणमस्तु, सत्यम्-तदर्थानामाशिषि नियमार्थमिदम् ॥छ॥

**परिक्रयणे** ॥२।२।६७॥

**[परिक्रयणे]** 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री, परिपूर्व० । परिक्रीयते – नियतकालं स्वीक्रियते येन तत् = परिक्रयणम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण०, तस्मिन् ।

**[शताय परिक्रीतः, शतेन परिक्रीतः]** 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री, परिपूर्व० । परिक्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । प्रथमा सि ॥छ॥

**शक्तार्थ-वषड्-नमः-स्वस्ति-स्वाहा-स्वधाभिः** ॥२।२।६८॥

**[शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः]** शक्तोऽर्थो येषां ते = शक्तार्थाः । शक्तार्थाश्च वषट् च नमश्च स्वस्तिश्च स्वाहाश्च स्वधाश्च = शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधा, ताभिः ।

**[शक्तो मैत्रश्चैत्राय]** 'शक्लृंट् शक्तौ' (१३००) शक् । शक्नोति स्म । 'गत्यर्था-ऽकर्मक०' (५।१।११) क्तप्र० → त ।

**[वषडग्नये]** अग्नि चतुर्थी ङे । 'ङित्यदिति' (१।४।२३) ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

नमसादयः सर्वेऽपि अव्ययाः ।।छ।।

**पञ्चम्यपादाने ।।२।२।६९।।**

**[पञ्चम्यपादाने]** पञ्चमी प्रथमा सि । अपादीयते यस्मात् तद् = अपादानं, तस्मिन् = अपादाने, सप्तमी ङि ।

**[गोदाभ्यामागच्छति]** गां ददातीति गोदः । 'आतो डोऽह्वा-वा-मः' (५।१।७६) डप्र० → अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

**[यवेभ्यो गां वारयति]** 'वृग्ट् वरणे' (१२९४) वृ । वृण्वन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । 'नामिनोऽकलि-हलेः' (४।३।५१) आर् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[चौराद् बिभेति]** 'ञिभींक् भये' (११३२) भी । वर्त्त० तिव् । 'हवः शिति' (४।१।१२) भी द्विर्वचनम् । 'ह्रस्वः (४।१।३९) ह्रस्वत्वम् । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) भि० → बि० ।।छ।।

**आङाऽवधौ ।।२।२।७०।।**

**[आङाऽवधौ]** आङ् तृतीया टा । 'डुधांग्क् धारणे च' (११३९) धा, अवपूर्व० । अवधानमवधिः । 'उपसर्गाद् दः किः' (५।३।८७) किप्र० → इ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपस्तस्मिन् = अवधौ, सप्तमी ङि । 'ङिर्डौ' (१।४।२५) ङि → डौ → औ । 'डित्यन्त्यस्वरादेः' (२।१।११४) इलोपः ।

**[आ पाटलिपुत्राद् वृष्टो मेघः]** 'वृषू सेचने' (५२७) वृष् । वर्षति स्म । 卐'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । प्रथमा सि । 'सो रुः' (२।१।७२) र० ।

**[आ कुमारेभ्यो यशो गतं गौतमस्य]** गोतम । गोतमस्याऽपत्यं = गौतमः । 'ऋषि-वृष्ण्यन्धक-कुरुभ्यः' (६।१।६१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः गौ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्य ।।छ।।

**पर्यपाभ्यां वर्ज्ये ।।२।२।७१।।**

**[पर्यपाभ्याम्]** परिश्च अपश्च = पर्यपौ, ताभ्याम् ।

**[वर्ज्ये]** वृज्यते = वर्ज्यम् । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र० → य । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर्, तस्मिन् ।

**[परि परि पाटलिपुत्राद् वृष्टो देवः]** परि पाटलिपुत्रस्तस्मात् । 'वाक्यस्य परिवर्जने' (७।४।८८) द्वित्वम् ।

**[अपशब्दो मैत्रस्य]** अपगतः शब्दात् । तत्पुरुषस्य पूर्वपदप्रधानत्वात् पूर्वपदेन "अप" इत्यनेन सह मैत्रस्य योगोऽस्तीति वर्ज्य इति व्यावृत्तेर्द्व्यङ्गविकलता, अत्र मैत्रशब्दात् पञ्चमी मा भूत् ।।छ।।

**यतः प्रतिनिधि-प्रतिदाने प्रतिना ।।२।२।७२।।**

**[यतः]** यद् । यस्माद् = यतः । 'प्रतिना पञ्चम्याः' (७।२।८७) तस्प्र० । यद्वा 'किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्

卐 धातुपारायणे - 'ज्ञानेच्छा-ऽर्चार्थ०' (५।२।९२)-क्तप्र० → त ।

तस्' (७।२।८९) तस्प्र० । 'आ द्वेरः' (२।१।४१) द० → अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[प्रतिनिधिप्रतिदाने]** प्रतिनिधिश्च प्रतिदानं च = प्रतिनिधिप्रतिदाने । प्रथमा औ । 'औरीः' (१।४।५६) ई । 'अवर्णस्ये०' (१।२।६) ए ।

**[प्रतिना]** प्रति तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० ।

प्रतिदानं गृहीतस्य प्रत्यर्पणमिति कोऽर्थः ? - तुल्यजातीयेनाऽतुल्यजातीयेन वेति शेषः ।

**[प्रद्युम्नो वासुदेवात् प्रति]** प्रकृष्टं द्युम्नं- तेजो यस्याऽसौ । वसुदेवस्याऽपत्यं = वासुदेवः । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।

**[तिलेभ्यः प्रति माषानस्मै प्रयच्छति]** तिल पञ्चमी भ्यस् । इदम् चतुर्थी ङे । 'आ द्वेरः' (२।१।४१) म० → अ० । 'लुगस्यादेत्यपदे' (२।१।११४) अलोपः । 'अनक्' (२।१।३६) अ । 'सर्वादेः स्मै-स्मातौ' (१।४।७) स्मै । 'दां दाने' (७) दा, प्रपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु-पा-घ्रा-ध्मा०' (४।२।१०८) यच्छ आदेशः ।

**[सर्पिषोऽस्मै तैलं प्रति सिक्त्वा व्रजति]** प्रति द्वितीया अम् । सर्वत्र 'अव्ययस्य' (३।२।७) अम्लोपः । 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच् । सेचनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'च-जः क-गम्' (२।१।८६) च० → कत्वम् ।।छ।।

## आख्यातर्युपयोगे ।।२।२।७३।।

**[आख्यातर्युपयोगे]** आख्यातृ सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् । उपयोग सप्तमी ङि । 'अवर्णस्येवर्णादिनै०' (१।२।६) ए ।

**[उपाध्यायादधीते]** 'इंङ्क् अध्ययने' (११०४) इ, उप-आङ्-अधिपूर्व० । उप-समीपे एत्य-आगत्य येभ्यः सकाशादधीयते सः । 'इङोऽपादाने तु टिद् वा' (५।३।१९) घञ्प्र० → अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । 'एदैतोऽयाय्' (१।२।२३) आय्, तस्मात्, 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । वर्त्त० ते । 'समानानां०' (१।२।१) दीर्घः ।

**[आचार्यादागमयति]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - गम्लृं गतौ' (३९६) गम्, आङ्पूर्व० । आगच्छन्तं प्रयुङ्क्ते । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'अमोऽकम्यमि-चमः' (४।२।२६) ह्रस्वः ।

**[श्रावकात् शृणोति]** 'श्रुंट् श्रवणे' (१२९६) श्रु । शृण्वन्ति आगमादिसमस्तशास्त्राणीति श्रावकाः । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । प्रथमा जस् । 'अत आ स्यादौ०' (१।४।१) आ । 'श्रुंट् श्रवणे' (१२९६) श्रु । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र० → नु । 'उ-श्नोः' (४।३।२) गु० ओ । 'श्रौति-कृवु-धिवु०' (४।२।१०८) श्रु० → शृ० । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[प्रत्येकबुद्धादधिगच्छति]** प्रत्येकं निमित्तमाश्रित्य बुद्धः = प्रत्येकबुद्धस्तस्मात् ।।छ।।

## गम्ययपः कर्मा-ऽऽधारे ।।२।२।७४।।

**[गम्ययपः]** गम्यश्चासौ यप् च = गम्ययप्, तस्य = गम्ययपः ।

**[कर्माऽऽधारे]** कर्म च आधारश्च = कर्माऽऽधारं, तस्मिन् = कर्माऽऽधारे, सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[प्रासादात् प्रेक्षते]** 'षद्लृं विशरण-गत्यवसादनेषु' (९६६) षद् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सद्,

प्रपूर्व० । प्रसीदन्ति नयनमनांसि अस्मिन्निति प्रासादः । 'व्यञ्जनाद् घञ्' (५।३।१३२) घञ्प्र० → अ । 'घञ्युपसर्गस्य बहुलम्' (३।२।८६) दीर्घः । पञ्चमी ङसि । 'ङे-ङस्योर्या-ऽऽतौ' (१।४।६) आत् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'ईक्षि दर्शने' (८८२) ईक्ष्, प्रपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'अवर्णस्ये०' (१।२।६) ए ।

**[आसनात् प्रेक्षते]** आसन पञ्चमी ङसि । प्रेक्षते पूर्ववत् ।

**[प्रासादमारुह्य शेते]** 'रुहं जन्मनि ।' (९९८) रुह्, आङ्पूर्व० । आरोहणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः' क्त्वो यप्' (३।२।१५४) यप् । 'शीङ्क् स्वप्ने' (११०५) शी । वर्त्त० ते । 'शीङ एः शिति' (४।३।१०४) ए ।

**[आसने उपविश्य भुङ्क्ते]** 'विशंत् प्रवेशने' (१४१५) विश्, उपपूर्व० । उपवेशनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । वर्त्त० ते । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० → न । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे प्रथमो०' (१।३।५०) ग० → क० । 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१।३।३९) न० → ङ० ।

दृशेर्वर्त्तनादिति-दृशेरिति कोऽर्थः ? दृशिसमानार्थस्य ईक्षेरित्यर्थः ।

अनपक्रामद्धीति-तत इन्द्रियं एतन्नैयायिकमताभिप्रायेणोक्तं, ते हि प्राप्यकारीणीन्द्रियाणि मन्यन्ते ।।छ।।

## प्रभृत्यन्यार्थ-दिक्शब्द-बहिरारादितरैः ।।२।२।७५।।

**[प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः]** प्रभृतिश्च अन्यश्च = प्रभृत्यन्यौ, प्रभृत्यन्यावर्थो(र्थौ) येषां ते = प्रभृत्यन्यार्थाः । दिशि दृष्टाः शब्दाः = दिग्(क्)शब्दाः । प्रभृत्यन्यार्थाश्च दिक्शब्दाश्च वहिश्च आराच्च इतरश्च = प्रभृत्यन्यार्थदिक्शब्दबहिराराद्-दितरास्तैः । 'भिस ऐस्' (१।४।२) ऐस् ।

**[ग्रीष्मादारभ्य]** 'रभिं राभस्ये' (७८५) रभ्, आङ्पूर्व० । आरभ(म्भ)णं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् → य ।

**[ग्रामात् पूर्वस्यां दिशि वसति]** पूर्वा सप्तमी ङि । 'आपो ङितां यै-यास्-यास्-याम्' (१।४।१७) याम् । 'सर्वादेर्डस्पूर्वाः' (१।४।१८) डस्प्र० → अस् (डस्याम्) । 'डित्यन्त्य०' (२।१।११४) आलोपः । 'वसं निवासे' (९९९) वस् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् ।

**[पश्चिमो रामाद् युधिष्ठिरः]** पश्चात् । पश्चाद्भवः = पश्चिमः । 'पश्चादाद्यन्ता-ऽग्रादिमः' (६।३।७५) इमप्र० । 'प्रायोऽव्ययस्य' (७।४।६५) आत् लोपः ।

**[क्रोशाल्लक्ष्यं विध्यति]** 'व्यधंच् ताडने' (११५७) व्यध् । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य । 'ज्या-व्यधः क्ङिति' (४।१।८१) य्वृद् य० → इ० ।

**[प्राग् ग्रामात्]** 'अञ्चू गतौ च' (१०५) अञ्च्, प्रपूर्व० । प्राञ्चतीति क्विप् = प्राग् । 'क्विप्' (५।१।१४८) क्विप्प्र० । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'च-जः क-गम्' (२।१।८६) च० → क० । 'धुटस्तृतीयः' (२।१।७६) क० → ग० ।

**[प्रत्यग् ग्रामात्]** 'अञ्चू गतौ च' (१०५) अञ्च्, प्रतिपूर्व० । प्रत्यञ्चतीति क्विप् = प्रत्यग् । शेषं पूर्ववत् ।

**[उदग् ग्रामात्]** 'अञ्चू गतौ च' (१०५) अञ्च्, उत्पूर्व० । उदञ्चतीति क्विप् = उदग् । शेषं पूर्ववत् ।

**[प्राचीनं ग्रामादाम्राः]** प्रागेव = प्राचीनम् । 'अदिक्स्त्रियां वाऽञ्चः' (७।१।१०७) ईनप्र० । सामान्यभावेन

क्लीबत्वम् ।

[दक्षिणाहि ग्रामात्] दक्षिणा । दक्षिणस्यां दिशि वसति । 'आऽऽही दूरे' (७।२।१२०) आहिप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । प्रथमा सि । अव्यउ ।

[उत्तराहि ग्रामात्] उत्तरस्यां दिशि वसति = उत्तराहि ।

[दक्षिणा ग्रामात्] दक्षिणस्यां दिशि वसति = दक्षिणा ।

[उत्तरा ग्रामात्] उत्तरस्यां दिशि वसति = उत्तरा ।

[न्यग् मैत्रस्याऽवस्थितः] न्यग् मैत्रस्येत्यप्रधानो यथा भवति एवं स्थितः ।

[बहिष्पुरात्] बहिस् प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । 'निर्दुर्वहिराविष्प्रादुश्चतुराम्' (२।३।९) षत्वम् ।

[आराद् ग्रामात् क्षेत्रम्] आरात् प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

[इतरश्चैत्रात्] इतर । प्रथमा सि ॥छ॥

**ऋणाद्धेतोः ॥२।२।७६॥**

[ऋणाद्धेतोः] ऋण पञ्चमी ङसि । हेतु पञ्चमी ङसि । 'ततो हश्चतुर्थः' (१।३।३) ह० → ध० ।

[शताद् बद्धः] 'बन्धंश् बन्धने' (१५५२) बन्ध् । बध्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अधश्चतुर्थात्'० (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध० → द० ।

[सहस्राद् बद्धः] बद्धः पूर्ववत् ॥

**गुणादस्त्रियां नवा ॥२।२।७७॥**

[गुणादस्त्रियां नवा] गुण पञ्चमी ङसि । 'ङे-ङस्योर्याऽऽतौ' (१।४।६) आत् । न स्त्री = अस्त्री । 'नञत्' (३।२।१२५) न० → अ० तस्याम् । 'स्त्रीदूतः' (१।४।२९) दाम् → आम् । 'स्त्रियाः' (२।१।५४) इय् । नवा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

[जाड्याद् बद्धः, जाड्येन बद्धः] जड । जडस्य भावः = जाड्यम् । 'वर्ण-दृढादिभ्यष्ट्यण् च वा' (७।१।५९) ट्यण्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

[पारिख्यात्याद् मुक्तः, पारिख्यात्येन मुक्तः] 'ख्यांक् प्रकथने' (१०७१) ख्या, परिपूर्व० । परिख्यानं = परिख्यातिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति । 卐परिख्यातेर्भावः = पारिख्यात्यम् । 'पतिराजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः ।

[ज्ञानाद् मुक्तः, ज्ञानेन मुक्तः] 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । ज्ञायते-परिच्छिद्यते शब्दादिभावा अनेनेति ज्ञानम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन्, तस्मात् - तेन वा ॥छ॥

**आरादर्थैः ॥२।२।७८॥**

[आरादर्थैः] आरादर्थो येषां ते = आरादर्थास्तैः ।

---

卐 लधुन्यासे - परिख्यातस्य भावः ।

**[दूरं ग्रामात्, दूरं ग्रामस्य]** दूरमित्यत्र 'असत्त्वारादर्थात् टा-ङसि-ङ्यम्' (२।२।१२०) इति विशेषद्वितीया ।।छ।।

**स्तोका-ऽल्प-कृच्छ्र-कतिपयादसत्त्वे करणे** ।।२।२।७९।।

**[स्तोकाऽल्पकृच्छ्रकतिपयात्]** स्तोकं च अल्पं च कृच्छ्रं च 卐 कतिपयं च = स्तोकाऽल्पकृच्छ्रकतिपयम्, तस्मात् ।

**[असत्त्वे करणे]** न सत्त्वं = असत्त्वम् । 'नञत्' (३।२।१२५) न० → अ० । तस्मिन् = असत्त्वे, सप्तमी ङि । करण सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[स्तोकाद् मुक्तः, स्तोकेन मुक्तः]** 'मुच्लृंती मोक्षणे' (१३२०) मुच् । मुच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'च-जः क-गम्' (२।१।८६) च० → क० ।

**[अल्पाद् मुक्तः, अल्पेन मुक्तः]** मुक्तः पूर्ववत् ।

**[कृच्छ्राद् मुक्तः, कृच्छ्रेण मुक्तः]** मुक्तः पूर्ववत् ।

**[कतिपयाद् मुक्तः, कतिपयेन मुक्तः]** मुक्तः पूर्ववत् ।

**[स्तोकेन विषेण हतः]** 'हनंक् हिंसा-गत्योः' (११००) हन् । हन्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति' (४।२।५५) नलोपः । प्रथमा सि ।

**[कृच्छ्रेण भोजनेन निर्विण्णः]** निर्विण्ण इत्यत्र 'निर्विण्णः' (२।३।८९) इत्यनेन णत्वम् ।

स्तोकादीनां असत्त्ववाचित्वादिति- द्रव्यस्ये(यै)व विशेषसंयोगित्वादिति शेषः ।

द्वित्व-बहुत्वासंभवे इति-एकत्वनिबन्धनैकवचनस्यापि असंभवे औत्सर्गिकमेकवचनम् । स्तोकाल्पादिशब्दानां स्तोकत्वाद्यर्थाभिधायकत्वेनासत्त्ववाचित्वात् क्रियां प्रति साधकतमत्वाभावात् करणत्वाभावे कथमनेन पञ्चमीत्याशङ्कायाममीषां पूर्वाचार्यप्रसिद्धया करणत्वमाह-स्तोकस्य चेति स्तोकः ।।छ।।

**अज्ञाने ज्ञः षष्ठी** ।।२।२।८०।।

**[अज्ञाने]** न ज्ञानं = अज्ञानम् । 'नञत्' (३।२।१२५) न० → अ०, तस्मिन् ।

**[ज्ञः]** ज्ञा षष्ठी ङस् । 'लुगाऽऽतोऽनापः' (२।१।१०७) आलोपः ।

**[षष्ठी]** षष् । 'षट्-कति-कतिपयात् थट्' (७।१।१६२) थट्प्र० → थ । 'तवर्गस्य श्चवर्ग०' (१।३।६०) थ० → ठ० । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

वेति निवृत्तं- भिन्नविभक्तिनिर्देशात् ।

**[सर्पिषः सर्पिषोः सर्पिषां वा जानीते]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । वर्त्त० ते । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) आ० → ई० । 'जा ज्ञा-जनोऽत्यादौ' (४।२।१०४) जा । 'ज्ञः' (३।३।८२) आत्मनेपदं अकर्मकत्वात् ।।छ।।

**शेषे** ।।२।२।८१।।

**[शेषे]** शेष सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[राज्ञः पुरुषः]** अत्र स्वस्वामिसम्बन्धः ।

---

P 卐 कतिपयश्च ।

**[उपगोरपत्यम्]** अत्र जन्य-जनकसं० ।

**[पशोः पादः]** अत्र अवयवा-ऽवयविसं० ।

**[वृक्षस्य शाखा]** अत्र आधारा-ऽऽधेयसंधेयसं० ।

**[क्षीरस्य विकारः]** अत्र विकारि-विकारसं० ।

**[गवां समूहः]** अत्र समूहि-समूहसं० ।

**[कुम्भस्य समीपम्]** अत्र समीपि-समीपसं० ।

**[पृथिव्याः स्वामी]** अत्र पाल्य-पालकसं० । स्वम् । स्वमस्याऽस्तीति स्वामी । 'स्वान्मिन्नीशे' (७।२।४९) मिन्प्र० तथा आ = स्वा । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्या०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।

**[न माषाणामश्नीयात्]** अत्र आश्या-ऽऽशनसं० । 'अशश् भोजने' (१५५८) अश् । सप्तमी यात् । 'क्र्यादेः' (३।४।७९) श्नाप्र० ⟶ ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) आ० ⟶ ई० ।

**[सुभाषितस्य शिक्षते]** अत्र शिक्षणीय-शिक्षणसं० ।

**[कर्त्तारः न ते सुखस्य जानते]** अत्र ज्ञेय-ज्ञातृसं० । 'ज्ञः' (३।३।८२) इत्यनेनाऽऽत्मनेपदम् ।

**[न तस्य सायमश्नीयात्]** अत्र भोज्य-भोजकसं० ।

**[अन्नस्य अस्मभ्यं नो देहि]** अत्र दय-दान सं० ।

**[अक्षाणां दीव्यति]** अत्र करणाविवक्षा ।

**[घ्नतः पृष्ठं ददाति]** अत्र संप्रदानस्याऽविवक्षा ।

**[नटस्य शृणोति]** अत्र अपादानाऽविवक्षा ।

**[वृक्षस्य पर्णं पतति]** अत्र अपायाऽविवक्षा ।

**[महतां विभाषते]** अत्र आधाराऽविवक्षा ।

**[अनुदरा कन्या]** न विद्यते उदरं यस्याः सा = अनुदरा । 'आत्' (२।४।१८) आप् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'समानानां०' (१।२।१) दीर्घः ।

**[अलोमिका एडकेति]** न विद्यन्ते लोमिका यस्याः सा = अलोमिका । 'आत्' (२।४।१८) आप् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । एडक 'अजादेः' (२।४।१६) आप् । 'समानानां०' (१।२।१) दीर्घः ।

**[राज्ञः पुरुषः]** अत्र सम्बन्धस्य **द्विष्ठत्वेऽपि** प्रधानात् पुरुषान्न भवति । द्वि स्था (२।२।२०) सूत्रवत् । द्वयोस्तिष्ठतीति । 'स्था-पा-स्ना त्रः कः' (५।१।१४२) कप्र० ⟶ अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । 'गो-ऽम्बा-ऽऽम्ब-सव्या-ऽप-द्वि०' (२।३।३०) षत्वम् । द्विष्ठस्य भावः = द्विष्ठत्वम् । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । तस्मिन् ॥छ॥

**रि-रिष्टात्-स्तादस्तादसतसाता** ॥२।२।८२॥

**[रिरिष्टात्स्तादस्तादसतसाता]** रिश्च रिष्टाच्च स्ताच्च अस्ताच्च अस् च अतस् च आच्च = रिरिष्टात्स्तादस्तादसतसात्, तेन ।

**[उपरि ग्रामस्य]** ऊर्ध्व । ऊर्ध्वे देशे वसति । 'ऊर्ध्वाद् रि-रिष्टातौ उपश्चास्य' (७।२।११४) रिप्र० । अनेनैव ऊर्ध्व०

→ उप आदेशः । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[उपरिष्टाद् ग्रामस्य]** ऊर्ध्व । ऊर्ध्वे देशे वसति । 'ऊर्ध्वाद् रिरिष्टातौ उपश्चास्य' (७।२।११४) रिष्टात्प्र० । अनेनैव ऊर्ध्व० → उप आदेशः । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[परस्ताद् ग्रामस्य]** पर । परस्मिन् देशे वसति । 'परा-ऽवरात् स्तात्' (७।२।११६) स्तात्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[अवरस्ताद् ग्रामस्य]** अवर । अवरस्मिन् देशे वसति । 'पराऽवरात् स्तात्' (७।२।११६) स्तात्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[पुरस्ताद् ग्रामस्य]** पूर्व । पूर्वस्मिन् देशे वसति । 'पूर्वा-ऽवराऽधरेभ्योऽसस्तातौ पुरवधश्चैषाम्' (७।२।११५) अस्तात्प्र०, पूर्व० → पुर् आदेशः ।

**[अवस्ताद् ग्रामस्य]** अवर । अवरस्मिन् देशे वसति । 'पूर्वाऽवरा-ऽधरेभ्योऽसस्तातौ पुरवधश्चैषाम्' (७।२।११५) अस्तात्प्र०, अवर० → अव् आदेशः ।

**[अधस्ताद् ग्रामस्य]** अधर । अधरस्मिन् देशे वसति । 'पूर्वाऽवरा-ऽधरेभ्योऽसस्तातौ पुरवधश्चैषाम्' (७।२।११५) अस्तात्प्र०, अधर० → अध् आदेशः ।

**[पुरो ग्रामस्य]** पूर्वस्मिन् देशे वसति । 'पूर्वाऽवराऽधरेभ्योऽसस्तातौ०' (७।२।११५) अस्प्र० । पुर् आदेशः ।

**[अवो ग्रामस्य]** अवरस्मिन् देशे वसति । 'पूर्वा-ऽवरा-ऽधरेभ्योऽस०' (७।२।११५) अस्प्र० । अव् आदेशः ।

**[अधो ग्रामस्य]** अधरस्मिन् देशे वसति । 'पूर्वा-ऽवरा-ऽधरेभ्योऽस०' (७।२।११५) अस्प्र० । अध् आदेशः ।

**[दक्षिणतो ग्रामस्य]** दक्षिणा । दक्षिणस्यां दिशि वसति । 'दक्षिणोत्तराच्चाऽतस्' (७।२।११७) अतस्प्र० ।

**[उत्तरतो ग्रामस्य]** उत्तरस्यां दिशि वसति । 'दक्षिणोत्तराच्चाऽतस्' (७।२।११७) अतस्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[परतो ग्रामस्य]** परा । परस्यां दिशि वसति । 'दक्षिणोत्तराच्चाऽतस्' (७।२।११७) अतस्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[अवरतो ग्रामस्य]** अवरा । अवरस्यां दिशि वसति । 'दक्षिणोत्तराच्चाऽतस्' (७।२।११७) अतस्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[अधराद् ग्रामस्य]** अधरस्मिन् देशे वसति । 'अधरा-ऽपराच्चाऽऽत्' (७।२।११८) आत्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[दक्षिणाद् ग्रामस्य]** दक्षिणस्मिन् देशे वसति । 'अधरा-ऽपराच्चाऽऽत्' (७।२।११८) आत्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[उत्तराद् ग्रामस्य]** उत्तरस्मिन् देशे वसति । 'अधरा-ऽपराच्चाऽऽत्' (७।२।११८) आत्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[पश्चाद् ग्रामस्य]** अपरस्मिन् देशे वसति । 'अधरा-ऽपराच्चाऽऽत्' (७।२।११८) आत्प्र० । 'पश्चोऽपरस्य दिक्पूर्वस्य चाऽऽति' (७।२।१२४) पश्च आदेशः ।

**[दक्षिणपश्चाद् ग्रामस्य]** दक्षिणा-अपरा । दक्षिणाऽपरस्यां दिशि वसति = दक्षिणपश्चाद् । 'अधरा-ऽपराच्चाऽऽत्' (७।२।११८) आत्प्र० । 'पश्चोऽपरस्य दिक्पूर्वस्य चाऽऽति' (७।२।१२४) पश्च आदेशः ।।छ।।

**कर्मणि कृतः ॥२।२।८३॥**

**[कर्मणि कृतः]** कर्मन् । सप्तमी ङि । 'डुकृंग् करणे' (८८८) कृ । करोतीति क्विप् कृत् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तस्य ।

**[अपां स्रष्टा]** अप् षष्ठी आम् । 'सृजंत् विसर्गे' (१३४९) सज् । सृजतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० । 'अः सृजि-दृशोऽकिति' (४।४।१११) अकारागमः । 'इवर्णादे०' (१।२।२१) रत्वम् । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) सि० → डा० → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) ऋलोपः ।

**[पुरां भेत्ता]** 'भिदूंपी विदारणे' (१४७७) भिद् । भिनत्तीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'लघोरुपान्त्यस्य' (४।३।४) गु० इ० → ए० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द० → त० ।

**[वर्षशतस्य पूरकः]** 'पूरण् आप्यायने' (१७४९) पूर् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । पूरयतीति पूरकः । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[पुत्रपौत्राणां दर्शकः]** पुत्र । पुत्रस्याऽपत्यमनन्तरं = पौत्रम् । 'पूनर्भू-पुत्र-दुहितृ-ननान्दुरनन्तरेऽञ्' (६।१।३९) अञ्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । पुत्रस्य पौत्राः = पुत्रपौत्रास्तेषां इति कार्यं, न पुत्राश्च पौत्राश्च इति द्वन्द्वः, तत्र 'गवाश्वादिः' (३।१।१४४) समासः ।

**[यवानां लावकः]** लुनातीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'नामिनोऽकलि-हलेः' (४।३।५१) लौ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[ओदनस्य भोजकः]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुङ्क्ते = भोजकः । णक-तृचौ' (५।१।४८) णकप्र० → अक । 'लघोरुपा०' (४।३।४) गु० उ० → ओ० ।

**[विश्वस्य ज्ञाता]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । जानातीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१।४।८४) सि० → डा० → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) ऋलोपः ।

**[तीर्थस्य कर्ता]** करोतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[उदकस्य पिबः]** 'पां पाने' (२) पा । पिबतीति पिबः । 'घ्रा-ध्मा-पा-ट्धे-दृशः शः' (५।१।५८) शप्र० । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) पिबादेशः । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[ग्रामस्य गमनम्]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गम्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[गवां दोहः]** 'दुहींक् क्षरणे' (११२७) दुह् । दोह्नं = दोहः । 'भावा-ऽकर्त्रोः (५।३।१८) घञ्प्र० → अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० ।

**[शस्त्रेण भेत्ता]** शस्त्र । तृतीया टा । भिनत्तीति भेत्ता । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'लघोरुपान्त्यस्य' (४।३।४) गु० इ० → ए० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द० → त० ।

**[साधु पक्ता]** 'डुपचींष् पाके' (८९२) पच् । पचतीति । 'णकतृचौ' (५।१।४८) तृच्प्र० → तृ० । 'च-जः क-गम्' (२।१।८६) च० → क० ।

**[कृतपूर्वी कटम्]** कृतः(तं) पूर्वं कटोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । अवर्णेवर्णस्य (७।४।६८)

अलोपः ।

**[भुक्तपूर्वी ओदनम्]** भुक्तः(क्तं) पूर्वमोदनोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[अर्थस्य त्यागी ?]** 'त्यजं हानौ' (१७२) त्यज् । त्यजतीत्येवंशीलः । 'युज-भुज-भज-त्यज-रञ्ज-द्विष-दुष-द्रुह-दुहाऽभ्याहनः' (५।२।५०) घिनण्प्र० → इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) ज० → ग० ।

**[सुखस्य भोगी ?]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुनक्तीत्येवंशीलः । 'युज-भुज-भज-त्यज-रञ्ज-द्विष-दुष-द्रुह-दुहाभ्याहनः' (५।२।५०) घिनण्प्र० → इन् । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) ज० → ग० ।

**[विषयाणां जयी]** 'जिं अभिभवे' (८ ) जि । जयतीत्येवंशीलः । 'जीण्-दृ-क्षि-विश्रि-परिभू-वमा-ऽभ्यमा-ऽव्यथः' (५।२।७२) इन्प्र० । 'नामिनो गुणो०'(४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[वीराणां प्रसविनीति ?]** 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सू, प्रपूर्व० । प्रसूते इत्येवंशीला । 'प्रात् सू-जोरिन्' (५।२।७१) इन्प्र० । 'नामिनो गुणो०' (४।३।१) गु० ओ० । 'औदौतोऽवाव्' (१।२।२४) अव् । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः सर्वत्र ज्ञेयः ।।छ।।

### द्विषो वाऽतृशः ।।२।२।८४।।

**[द्विषो वाऽतृशः]** द्विष् षष्ठी ङस् । वा प्रथमा सि । अतृश् षष्ठी ङस् ।

**[चौरस्य द्विषन्, चौरं द्विषन्]** चौर षष्ठी ङस् । चौर द्वितीया अम् । 'द्विषींक् अप्रीतौ' (११२६) द्विष् । द्वेष्टीति । 'सुग्-द्विषार्हः सत्रि-शत्रु-स्तुत्ये' (५।२।२६) अतृश्प्र० → अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याव्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

### वैकत्र द्वयोः ।।२।२।८५।।

**[वैकत्र द्वयोः]** वा प्रथमा सि । एकस्मिन् = एकत्र । 'सप्तम्याः' (७।२।९४) त्रप्प्र० → त्र । द्वि-ओस् । 'आ द्वेरः' (२।१।४१) इ० → अ० । 'एद् बहुस्भोसि' (१।४।४) अ० → ए० । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[अजाया नेता स्रुघ्नम्, अजाया नेता स्रुघ्नस्य, अथवा अजा नेता स्रुघ्नस्य, अजाया नेता स्रुघ्नस्य]** अजा षष्ठी ङस् । 'आपो ङितां यै-यास्-यास्-याम्' (१।४।१७) यास् । 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७)नी । नयतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए० । प्रथमा सि । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) सि० → डा → आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[पयसो दोहको गाम्, पयसो दोहको गोः, गोर्दोहकः पयः, गोर्दोहकः पयसः]** 'दुहींक् क्षरणे' (११२७) दुह् । दोग्धीति दोहकः । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'लघोरु०' (४।३।४) गु० उ० → ओ० ।।छ।।

### कर्तरि ।।२।२।८६।।

**[कर्तरि]** 'डुकृंग् करणे' (८८८) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ० । सप्तमी ङि । 'अङौं च' (१।४।३९) अर् ।

**[भवत आसिका]** 'भांक् दीप्तौ' (१०६१) भा । भातीति । 'भातेर्डवतुः' (उणा० ८८६) डवतुप्र० → अवत्० । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः । षष्ठी ङस् । 'आसिक् उपवेशने' (१११९) आस् । आसितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः । 'अस्याऽयत् - तत् - क्षिपकादीनाम्' (२।४।१११) इ ।

**[भवतः शायिका]** 'शीङ्क् स्वप्ने' (११०५) शी । शयितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'नामिनो०' (४।३।५१) ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[भवतः स्वापः]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्ट्यै०' (२।३।९८) स्वप् । स्वपनं = स्वापः । 'भावा-ऽकर्त्रोः (५।३।१८) घञ्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[भवत आसना]** 'आसिक् उपवेशने' (१११९) आस् । आसनं = आसना । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप्प्र० → आ ।

**[भवतोऽग्रगामिका]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । अग्रे गच्छतीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'आत्' (२।४।१८) आप् । 'अस्याऽयत्-तत्०' (२।४।१११) इ ।

**[त्वया शय्यते]** 'शीङ्क् स्वप्ने' (११०५) शी । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'क्ङिति यि शय्' (४।३।१०५) शय् आदेशः ।।छ।।

**द्विहेतोरस्त्र्यणकस्य वा ।।२।२।८७।।**

**[द्विहेतोरस्त्र्यणकस्य वा]** द्वयोर्हेतुर्द्विहेतुस्तस्य । अश्च णकश्च = अणकम्, स्त्रियामणकं = स्त्र्यणकम्, न स्त्र्यणकमस्त्र्यणकम् । 'नञत्' (३।२।१२५) न० → अ०, तस्य । वा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[विचित्रा सूत्रस्य कृतिराचार्यस्याऽऽचार्येण वा]** 'डुकृंग् करणे' (८८८) कृ । करणं = कृतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति । प्रथमा सि । 'सो रुः' (२।१।७२) र० ।

**[आश्चर्यमोदनस्य नाम पाकोऽतिथीनां च प्रादुर्भाव इति]** 'डुपचींष् पाके' (८९२) पच् । पचनं = पाकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च० → क० । प्रथमा सि । 'भू सत्तायाम्' (१) भू, प्रादुस्पूर्व० । प्रादुर्भवनं = प्रादुर्भावः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ ।' 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[चिकीर्षा मैत्रस्य काव्यानाम्]** 'डुकृंग् करणे' (८८८) कृ । कर्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० → स । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'ऋतां क्ङितीर्' (४।४।११६) इर् → किर् । 'सन्-यङश्च' (४।१।३) किर् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'क-ङश्च-ञ्' (४।१।४६) क० → च० । 'नाम्यन्त०' (२।३।१५) स० → ष० । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । चिकीर्षणं = चिकीर्षा । 'शंसि-प्रत्ययात्' (५।३।१०५) अप्र० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[भेदिका चैत्रस्य काष्ठानाम्]** 'भिदूंपी विदारणे' (१४७७) भिद् । भेदनं = भेदिका । 'भावे' (५।३।१२२) णकप्र० → अक । 'आत्' (२।४।१८) आप् । 'अस्याऽयत्०' (२।४।१११) इ ।

**[भेदिका चैत्रस्य मैत्रस्य काष्ठनाम्]** भिद् । भिन्दन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । भेदयितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'आत्' (२।४।१८) आप् । 'अस्याऽयत्-तत्०' (२।४।१११) इ ।

**[आश्चर्य इन्द्रियाणां जयो यूना]** 'जिं अभिभवे' (८ ) जि । जयनं = जयः । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० ।।छ।।

## कृत्यस्य वा ।।२।२।८८।।

**[कृत्यस्य]** 'डुकृंग् करणे' (८८८) कृ । क्रियते । 'कृ-वृषि-मृजि-शंसि--गुहि-दुहि-जपो वा (५।१।४२) क्यप्प्र० → य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः, तस्य । 'तव्या-ऽनीयौ' (५।१।२७) तव्य-अनीय, 'य एच्चातः' (५।१।२८) य-क्यप्-घ्यण् पञ्च कृत्याः समाख्याता हेमसूरिमहामुनेः ।

**[भवतः कार्यः कटः] [भवता कार्यः कटः]** 'डुकृंग् करणे' (८८८) कृ । क्रियते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र० → य । 'नामिनोऽकलि-हलेः' (४।३।५१) आर् ।

**[भवतः कर्तव्यः कटः] [भवता कर्तव्यः कटः]** क्रियते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० ।

**[भवतः करणीयः कटः] [भवता करणीयः कटः]** क्रियते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[भवतो देयः कटः] [भवता देयः कटः]** 'डुदांग्क् दाने' (११३८) दा । दीयते = देयः । 'य एच्चातः (५।१।२८) यप्र०, आ० → ए० ।

**[भवतः कृत्यः कटः] [भवता कृत्यः कटः]** कृत्यः पूर्ववत् ।

**[गेयो माणवको गाथानाम्]** कैं (३६) - 'गैं शब्दे' (३७) गै । 'आत् सन्ध्यक्षरस्य' (४।२।१) गा । गीयते = गेयः । 'भव्य-गेय-जन्य-रम्या-ऽऽपात्या-ऽऽप्लाव्यं नवा' (५।१।७) गेयनिपातः ।

**[प्रवचनीयो गुरुर्द्वादशाङ्गस्य]** 'वचंक् भाषणे' (१०९६) वच्, प्रपूर्व० । प्रवक्तीति । 'प्रवचनीयादयः' (५।१।८) अनीयप्र० ।।छ।।

## नोभयोर्हेतोः ।।२।२।८९।।

**[नोभयोर्हेतोः]** न प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । उभ卐 षष्ठी ओस् । हेतु षष्ठी ङस् । 'ङित्यदिति' (१।४।२३) ओ । 'एदोद्भ्यां ङसि-ङसो रः' (१।४।३५) र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[नेतव्या ग्राममजा मैत्रेण]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७)नी । नीयते इति नेतव्या । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'आत्' (२।४।१८) आप् । 'समानानां तेन०' (१।२।१) दीर्घः । 'नामिनो गुणो०' (४।३।१) गु० ए० ।

**[क्रष्टव्या ग्रामं शाखा चैत्रेण]** 'कृषींत् विलेखने' (१३१९) कृष् । कृष्यते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'स्पृशादि-सृपो वा' (४।४।११२) अकारागमः । 'इवर्णादे०' (१।२।२१) रत्वम् । 'तवर्गस्य०' (१।३।६०) त० → ट० ।

**[जेतव्यः शतं मैत्रश्चैत्रेण]** 'जिं अभिभवे' (८ ) जि । जीयते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'नामिनो गुणो०' (४।३।१) गु० इ० → ए० ।

---

P 卐 सप्तमी ओस् ।

[उपस्थानीयः पुत्रः पितुः] उपतिष्ठते । 'प्रवचनीयादयः' (५।१।८) अनीयप्र० ॥छ॥

**तृन्नुदन्ता-ऽव्यय-क्वस्वाना-ऽतृश्-शतृ-ङि-णकच्-खलर्थस्य ॥२।२।९०॥**

**[तृन्नृदन्ताऽव्ययक्वस्वानाऽतृश्शतृङिणकच्खलर्थस्य]** उत् अन्ते यस्याऽसौ उदन्तः । खल् अर्थो यस्याऽसौ खलर्थः । तृन् च उदन्तश्च ❋अव्ययश्च क्वसुश्च आनश्च अतृश् च शता च ङिश्च णकच् च खलर्थश्च = तृन्नृदन्ताऽव्ययक्वस्वानाऽतृश्शतृङिणकच्खलर्थम्, तस्य ।

**[वदिता जनाऽपवादान्]** 'वदुङ् स्तुत्यभिवादनयोः' (७२१) वद् । वन्दते इत्येवंशीलः । 'तृन् शील-धर्म-साधुषु' (५।२।२७) तृन्प्र० → तृ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१।४।८४) डा० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । जन-अप 'वदुङ् स्तुत्यभिवादनयोः' (७२१) वद् । अपवदनमपवादः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । जनानामपवादाः = जनाऽपवादास्तान् ।

**[कन्यामलङ्करिष्णुः]** 'डुकृंग् करणे' (८८८) कृ, अलंपूर्व० । अलङ्करोतीत्येवंशीलः । 'भ्राज्यलङ्कृग्-निराकृग्-भू-सहि-रुचि-वृति-वृधि-चरि-प्रजना-ऽपत्रप इष्णुः' (५।२।२८) इष्णुप्र० । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

**[रिपून् जिष्णुः]** 'जिं अभिभवे' (८ ) जि । जयतीत्येवंशीलः । 'भू-जेः ष्णुक्' (५।२।३०) ष्णुक्प्र० ।

**[शरान् क्षिप्णुः]** 'क्षिपींत् प्रेरणे' (१३१७) क्षिप् । क्षिपतीत्येवंशीलः । 'त्रसि-गृधि-धृषि-क्षिपः क्नुः' (५।२।३२) क्नुप्र० । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[ओदनं बुभुक्षुः]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोक्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० → स । 'सन्-यङश्च' (४।१।३) द्विर्वचनु । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) । भु० → बु० । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'ष-ढोः कस्सि' (२।१।६२) ष० → क० । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० । क-षसंयोगे क्ष । बुभुक्षतीत्येवंशीलः । 'सन्-भिक्षाऽऽशंसेरुः' (५।२।३३) उप्र० ।

**[देवान् वन्दारुः]** 'वदुङ् स्तुत्यभिवादनयोः' (७२१) वद् । 'उदितः०' (४।४।९८) वन्द् । वन्दते इत्येवंशीलः । 'शॄ-वन्देरारुः' (५।२।३५) आरुप्र० ।

**[धारुर्वत्सो मातरम्]** 'ट्धें पाने' (२८ ) धे । 'आत् सन्ध्यक्षरस्य (४।२।१) धा । धयतीत्येवंशीलः । 'दा-ट्धे-सि-शद-सदो रुः' (५।२।३६) रुप्र० ।

**[श्रद्धालुस्तत्त्वम्]** 'डुधांग्क् धारणे च' (११३९) धा, श्रत्पूर्व० । श्रद्दधातीत्येवंशीलः । 'शीङ्-श्रद्धा-निद्रा-तन्द्रा-दयि-पति-गृहि-स्पृहेरालुः' (५।२।३७) आलुप्र० । 'समानानां०' (१।२।१) दीर्घः । प्रथमा सि । तत्त्व द्वितीया अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[कटं कृत्वा]** 'डुकृंग् करणे' (८८८) कृ । करणं पूर्वं = कृत्वा । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[पयः पायं पायं व्रजति]** 'पां पाने' (२ ) पा । आभीक्ष्ण्यं पानं पूर्वम् । 'ख्णम् चाऽऽभीक्ष्ण्ये' (५।४।४८) ख्णम्प्र० → अम् । 'आत ऐः कृञ्ञौ (४।३।५३) आ० → ऐ । 'एदैतोऽयाय् (१।२।२३)' आय् । 'भृशा-ऽऽभीक्ष्ण्या-ऽविच्छेदे द्विः प्राक् तमबादेः' (७।४।७३) द्विर्वचनम् ।

---

P ❋ अव्ययं च ।

**[ओदनं भोक्तुं व्रजति]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोजनाय । 'क्रियायां क्रियार्थायां तुम्-णकच् भविष्यन्ती' (५।३।१३) तुम्प्र० । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे प्रथमो०' (१।३।५०) ग० → क० । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० ।

**[ओदनं पेचिवान्]** 'डुपचींष् पाके' (८९२) पच् । पेचे । 'तत्र क्वसु-कानौ तद्वत्' (५।२।२) क्वसुप्र० → वस् । अनादेशाऽऽदेरेकव्यञ्जनमध्येऽतः' (४।१।२४) ए । 'घसेकस्वराऽऽतः क्वसोः' (४।४।८२) इट् । प्र० सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'न्स्महतोः' (१।४।८६) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[तत्त्वं विद्वान्]** 'विदक् ज्ञाने' (१०९९) विद् । वेत्तीति । 'वा वेत्तेः क्वसुः' (५।२।२२) क्वसुप्र० → वस् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः ।

**[कटं चक्राणः]** चक्रे = चक्राणः । 'तत्र क्वसु-कानौ तद्वत्' (५।२।२) कानप्र० → आन । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) कृ सउं द्विर्वचनम् । 'ऋतोऽत्' (४।१।३८) कृ० → क० । 'क-ङश्च-ञ्' (४।१।४६) क० → च० । 'इवर्णादि०' (१।२।२१) रत्वम् ।

**[वचनमनूचानः]** 'वचंक् भाषणे' (१०९६) वच्, अनुपूर्व० । अनूवाच । 'तत्र क्वसु-कानौ तद्वत्' (५।२।२) कानप्र० → आन । 'वेयिवद०' (५।२।३) निपातः । 'यजादि-वचेः०' (४।१।७९) य्वृत् व० → उ० ।

**[मलयं पवमानः]** 'पूङ् पवने' (६००) पू । पवते = पवमानः । 'पूङ्-यजः शानः' (५।२।२३) शानप्र० → आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[कतीह कवचमुद्वहमानाः]** 'वहीं प्रापणे' (९९६) वह्, उत्पूर्व० । उद्वोढुं शक्ताः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र० → आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[कतीह शत्रून् निघ्नानाः]** 'हनंक् हिंसा-गत्योः' (११००) हन्, निपूर्व० । निहन्तुं शक्ताः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र० । 'गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक्' (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[कतीह वपुर्भूषयमाणाः]** 'भूष अलङ्कारे' (१७५६) भूष् । 'चुरादिभ्यो०' (३।४।१७) णिच्प्र० → इ । भूषयतीत्येवंशीलाः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र० → आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए० । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[ओदनं पचमानः]** 'डुपचींष् पाके' (८९२) पच् । पचते = पचमानः । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[चैत्रेण पच्यमानः]** पच्यते = पच्यमानः । 'शत्रानशा०' (५।२।२०) आनश्प्र० → आन । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[कटं करिष्यमाणः]** 'डुकृंग् करणे' (८८८) कृ । करिष्यतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन, स्य आदिः । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नामिनो गुणो०' (४।३।१) गु० अर् । 'नाम्यन्तस्था०' (२।३।१५) षत्वम् । 'रषृवर्णान्नो ण०' (२।३।६३) णत्वम् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[अधीयंस्तत्त्वार्थम्]** 'इङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अकृच्छ्रेणाधीते । 'धारीङोऽकृच्छ्रेऽतृश्' (५।२।२५) अतृश्प्र० → अत् । 'धातोरिवर्णो०' (२।१।५०) इय् । 'समानानां०' (१।२।१) दीर्घः । प्रथमा सि । 'ऋदुदितः' (१।४।७०)

नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[धारयन्नाचाराङ्गम्]** 'धृंग् धारणे' (८८७) धृ । धरन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । 'नामिनोऽकलि-हलेः' (४।३।५१) आर् । अकृच्छ्रेण धारयतीति । 'धारीङोऽकृच्छ्रेऽतृश्' (५।२।२५) अतृश्प्र० → अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए० । 'एदैतोऽयाय्' (१।२।२३) अय् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[कटं कुर्वन्]** 'डुकृंग् करणे' (८८८ ) कृ । करोतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'नामिनो गुणो०' (४।३।१) गु० अर् । 'अतः शित्युत्' (४।२।८९) अ० → उ० । 'इवर्णादे०' (१।२।२१) वत्वम् ।

**[कटं करिष्यन्]** कृ । करिष्यतीति । 'शत्रानशावेष्यति०' (५।२।२०) शतृप्र० → अत् -स्य आदिः । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

**[परीषहान् सासहिः]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सह्, परिपूर्व० । परिस(ष)ह्यन्ते । 'स्थादिभ्यः कः' (५।३।८२) कप्र० → अ । 'घञ्युपसर्गस्य बहुलम्' (३।२।८६) दीर्घः । सह् । भृशं पुनः पुनर्वा सहते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० → य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । सासह्यते इत्येवंशीलः । 'ङौ सासहि-वावहि-चाचलि-पापतिः' (५।२।३८) सासहिनिपातः ।

**[कटं चक्रिः]** कृ । भृशं पुनः पुनर्वा करोति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ऋतोऽत्' (४।१।३८) कृ० → क० । 'क-ङश्च-ञ्' (४।१।४६) क० → च० । क्रियते इत्येवंशीलः । 'सस्त्रि-चक्रि-दधि-जज्ञि-नेमिः' (५।२।३९) चक्रिनिपातः ।

**[दधिश्चित्तम्]** 'डुधांग्क् धारणे च' (११३९) धा । भृशं पुनः पुनर्वा दधाति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) धा द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) ध० → द० । 'बहुलं लुप्' (३।४।१४) यङ्लोपः त्रिषूदाहरणेषु । दधातीत्येवंशीलः । 'सस्त्रि-चक्रि-दधि-जज्ञि-नेमिः' (५।२।३९) दधिनिपातः ।

**[एधानाहारको व्रजति]** 'हृंग् हरणे' (८८५) हृ, आङ्पूर्व० । आहरिष्यतीति । 'क्रियायां क्रियार्थायां तुम्-णकच् भविष्यन्ती' (५।३।१३) णकच्प्र० → अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

**[कटं कारको व्रजति]** 'डुकृंग् करणे' (८८८) कृ । करिष्यतीति । 'क्रियायां क्रियार्थायां०' (५।३।१३) णकच्प्र० → अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[वर्षशतस्य पूरकः]** 'पूरण् आप्यायने' (१७४९) पूर् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । पूरयतीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[पुत्रपौत्रस्य दर्शकः]** पुत्र । पुत्रस्याऽपत्यमनन्तरम् । 'पुनर्भू-पुत्र-दुहितृ-ननान्दुरनन्तरेऽञ्' (६।१।३९) अञ्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । पुत्रस्य पौत्रः = पुत्रपौत्रस्तस्य । पश्यतीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[ईषत्करः कटो भवता]** ईषत् 'डुकृंग् करणे' (८८८ ) कृ । ईषदनायासेन क्रियते । 'दुः-स्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थात् खल्' (५।३।१३९) खल्प्र० → अ । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

[सुज्ञानं तत्त्वं भवता] 'ज्ञांश् अवबोधने' (१५४०) ज्ञा, सुपूर्व० । सुष्ठु अनायासेन ज्ञायते । 'शासू-युधि-दृशि-धृषि-मृषा-ऽऽतोऽनः' (५।३।१४१) अनप्र० ।।छ।।

## क्तयोरसदाधारे ।।२।२।९१।।

[क्तयोरसदाधारे] Pक्तश्च क्तवांश्च = क्तौ । 'समानामर्थेनैकः शेषः' (३।१।११८) एकशेषः । तयोः । स(सं)श्च आधारश्च = सदाधारम्, न सदाधारं = असदाधारम्, 'नञत्' (३।२।१२५) न० → अ०, तस्मिन् ।

[कटः कृतो मैत्रेण] 'डुकृंग् करणे' (८८८ ) कृ । कर्तुमारब्धः । 'आरम्भे' (५।१।१०) क्तप्र० → त ।

[कटं कृतवान्] करोति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र० → तवत् ।

[गतो ग्रामं चैत्रः] गन्तुमारब्धः । क्तप्र० → त । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति०' (४।२।५५) मलोपः ।

[ग्रामं गतवान्] गम्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र० → तवत् । 'यमि-रमि-नमि०' (४।२।५५) मलोपः ।

[राज्ञां ज्ञातः] 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । ज्ञायते स्म । 'ज्ञानेच्छाऽर्चाऽर्थ-जीच्छील्यादिभ्यः क्तः' (५।२।९२) क्तप्र० → त ।

[राज्ञां बुद्धः] 'बुधिं ज्ञाने' (१२६२) बुध् । बुध्यते स्म । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० → त ।

[राज्ञां मतः] बुधिं (१२६२) - 'मनिंच् ज्ञाने' (१२६३) मन् । मन्यते स्म । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० → त । 'यमि-रमि-नमि-गमि-हनि-मनि०' (४।२।५५) नलोपः ।

[राज्ञामिष्टः] 'यजीं देवपूजा-सङ्गतिकरण-दानेषु' (९९१) यज् । इज्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० → त । 'यजादि-वचेः किति' (४।१।७९) य्वृद् य० → इ० । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० ।

[राज्ञां पूजितः] 'पूजण् पूजायाम्' (१५८६) पूज् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । पूज्यते स्म । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० → त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

[कान्तो हरिश्चन्द्र इव प्रजानाम्] 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । काम्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० → त । 'अहन्पञ्चमस्य क्वि-क्ङिति' (४।१।१०७) दीर्घः ।

[शीलितो मैत्रेण] 'शीलण् उपधारणे' (१९१३) शील् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । शील्यते स्म । क्तप्र० → त । 'स्ताद्यशितो०' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

[रक्षितश्चैत्रेण] 'रक्ष पालने' (५६७) रक्ष् । रक्षति स्म । 'गत्यर्था०' (५।१।११) क्तप्र० (?) ('ज्ञानेच्छाऽर्चाऽर्था०' (५।२।९२) क्तप्र० → त) । 'स्ताद्यशितो०' (४।४।३२) इट् ।

[इदमोदनस्य भुक्तम्] 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुज्यते स्माऽस्मिन्निति । 'अद्यर्थाच्चाऽऽधारे' (५।१।१२) क्तप्र० → त । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे०' (१।३।५०) ग० → क० ।

[इदं सक्तूनां पीतम्] 'पां पाने' (२ ) पा । पीयते स्माऽस्मिन्निति । 'अद्यर्थाच्चाऽऽधारे' (५।१।१२) क्तप्र० →

---

P 卐 क्तावयवयोगात् क्तवतुरपि क्तः । क्तश्च क्तश्च = क्तौ । 'स्यादावसंख्येयः' (३।१।११९) एकशेषः, तयोः ।

त । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ० → ई० ।

**[इदमहेः सृप्तम्]** 'सृप्लृं गतौ' (३४१) सृप् । सृप्यते स्माऽस्मिन्निति । 'अद्यर्थाच्चा०' (५।१।१२) क्तप्र० → त ।

**[इदमेषामासितम्]** 'आसिक् उपवेशने' (१११९) आस् । आस्यते स्माऽस्मिन्निति । 'अद्यर्थाच्चाऽऽधारे' (५।१।१२) क्तप्र० → त । 'स्ताद्यशितोऽत्रो०' (४।४।३२) इट् ॥छ॥

**वा क्लीबे** ॥२।२।९२॥

**[वा क्लीबे]** वा प्रथमा सि । क्लीब सप्तमी ङि ।

**[छात्रस्य हसितम्, छात्रेण हसितम्]** 'हसे हसने' (५४५) हस् । हसनं = हसितम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त ।

**[मयूरस्य नृत्तम्, मयूरेण नृत्तम्]** 'नृतैच् नर्तने' (११५२) नृत् । नर्तनं = नृत्तम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त ।

**[कोकिलस्य व्याहृतम्, कोकिलेन व्याहृतम्]** 'हृंग् हरणे' (८८५ ) हृ, वि-आङ्पूर्व० । विशेषेणाऽऽहरणं = व्याहृतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त ।

**[इहाहेः सृप्तम्, इहाऽहिना सृप्तम्]** 'सृप्लृं गतौ' (३४१) सृप् । सर्पणं = सृप्तम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त ।

**[चैत्रेण कृतम्]** 'डुकृंग् करणे' (८८८) कृ । क्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ॥छ॥

**अकमेरुकस्य** ॥२।२।९३॥

**[अकमेरुकस्य]** न कमि = अकमि । 'नञत्' (३।२।१२५) न० → अ०, तस्मात् । उक षष्ठी ङस् ।

**[आगामुकं वाराणसीं रक्ष आहुः]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम्, आङ्पूर्व० । आगच्छतीत्येवंशीलम् । 'शॄ-कम-गम-हन-वृष-भू-स्थ उकण्' (५।२।४०) उकण्प्र० → उक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[भोगानभिलाषुकः]** 'लषी कान्तौ' (९२७) लष्, अभिपूर्व० । अभिलषतीत्येवंशीलः । 'लष-पत-पदः' (५।२।४१) उकण्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रथमा सि ।

**[दास्याः कामुकः]** 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । कामयत इत्येवंशीलः । 'शॄ-कम-गम-हन-वृष-भू-स्थ उकण्' (५।२।४७) उकण्प्र० → उक । 'णेरनिटि' (४।३।८३) णिङ्लोपः ॥छ॥

**एष्यदृणेनः** ॥२।२।९४॥

**[एष्यदृणेनः]** एष्यच्च ऋणं च = एष्यदृणं(णे), तयोरिन् = एष्यदृणेन्, तस्य = एष्यदृणेनः, षष्ठी ङस् ।

**[ग्रामं गमी]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गमिष्यतीति । 'गमेरिन्' (उणा० ९१९) इन्प्र० ।

**[ग्राममागामी]आ-गम् । आगमिष्यतीति** । 'आङ्श्च णित्' (उणा० ९२०) णिद् इन्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[शतं दायी]** 'डुदांग्क् दाने' (११३८) दा । शतं ददातीत्येवंशीलः । 'णिन् चाऽऽवश्यकाऽधमर्ण्ये' (५।४।३६) णिन्प्र० । 'आत ऐः कृञ्औ' (४।३।५३) आ० ⟶ ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[सहस्रं दायी]** 'डुदांग्क् दाने' (११३८) दा । सहस्रं ददातीत्येवंशीलः । 'णिन् चाऽऽवश्यकाऽधमर्ण्ये' (५।४।३६) णिन्प्र० । 'आत ऐः कृञ्औ' (४।३।५३) आ० ⟶ ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[कारी मेऽसि कटम्]** कृ । करोषीत्येवंशीलः । 'णिन् चाऽऽवश्यकाऽधमर्ण्ये' (५।४।३६) णिन्प्र० ⟶ इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[अवश्यंकारी कटस्य]** अवश्यं करोतीति । 'णिन् चाऽऽवश्यकाऽधम०' (५।४।३६) णिन्प्र० ⟶ इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[साधुदायी वित्तस्य]** 'डुदांग्क् दाने' (११३८) दा । साधु ददातीति । 'साधौ' (५।१।१५५) णिन्प्र० । 'आत ऐः कृञ्औ' (४।३।५३) आ० ⟶ ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । साधु 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः ।।छ।।

**सप्तम्यधिकरणे** ।।२।२।९५।।

**[सप्तम्यधिकरणे]** सप्तमी प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 卐अधिक्रियते - नियुज्यते तस्मिन्नित्य-धिकरणम्, तस्मिन् ।।छ।।

**नवा सुजर्थैः काले** ।।२।२।९६।।

**[नवा सुजर्थैः काले]** नवा प्रथमा सि । सुजर्थो येषां ते = सुजर्थास्तैः = सुजर्थैः । काल सप्तमी ङि ।

**[द्विरह्नि भुङ्क्ते, द्विरह्नो भुङ्क्ते]** द्वि । द्वौ वारावस्येति द्विः । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अव्ययस्य' (३।२।७) अम्लोपः । अहन् सप्तमी ङि । अहन् षष्ठी ङस् । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । वर्त्त० ते । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० ⟶ न । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । 'च-जः क-गम्' (२।१।८६) ज० ⟶ ग० । 'अघोषे प्रथमो०' (१।३।५०) ग० ⟶ क० । 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१।३।३९) न० ⟶ ङ० ।

**[मासे पञ्चकृत्वो भुङ्क्ते, मासस्य पञ्चकृत्वो भुङ्क्ते]** पञ्चन् । पञ्च वारा अस्य । 'वारे कृत्वस्' (७।२।१०९) कृत्वस्प्र० । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । भुङ्क्ते पूर्ववत् ।

**[बहुधाऽह्नि भुङ्क्ते, बहुधाऽह्नो भुङ्क्ते]** बहु । बहुभिः प्रकारैः (?) (बहव आसन्ना वारा अस्य) । 'बहोर्धाऽऽसन्ने' (७।२।११२) धाप्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । भुङ्क्ते पूर्ववत् ।

**[द्विः कांस्यपात्र्यां भुङ्क्ते]** कांस्यस्य पात्री = कांस्यपात्री, तस्याम् ।।छ।।

**कुशला-ऽऽयुक्तेनाऽऽसेवायाम्** ।।२।२।९७।।

**[कुशलाऽऽयुक्तेनाऽऽसेवायाम्]** कुशलश्च आयुक्तश्च = कुशलाऽऽयुक्तम्, तेन = कुशलाऽऽयुक्तेन । आसेवनं = आसेवा, तस्यामासेवायाम् ।

**[आयुक्तस्तपश्चरणे, आयुक्तस्तपश्चरणस्य]** 'युजूंपी योगे' (१४७६) युज्, आङ्पूर्व० । आयुज्यते स्म । 'क्त-क्तवतू'

P 卐 अधिक्रियतेऽनेनेत्यधिकरणम्, तस्मिन् ।

(५।१।१७४) क्तप्र० । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग० → क० ।

**[कुशलश्चित्रकर्मणि, न च करोति]** 'डुकृंग् करणे' (८८८ ) कृ । वर्त्त० तिव् । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'नामिनो गुणो०' (४।३।१) अर् । 'उ-श्नोः' (४।३।२) उ० → ओ० ।

**[आयुक्तो गौः शकटे-आकृष्य युक्त इत्यर्थः]** गो प्रथमा सि । ओत औ (१।४।७४) ओ० → औ० ॥छा॥

### स्वामीश्वरा-ऽधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैः ॥२।२।९८॥

**[स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैः]** स्वामी च ईश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च प्रसूतश्च = स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतास्तैः ।

**[गोषु स्वामी, गवां स्वामी]** स्व । स्वमस्याऽस्तीति । 'स्वान्मिन्नीशे' (७।२।४९) मिन्प्र० - पूर्वस्य दीर्घः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।

**[गोष्वीश्वरः, गवामीश्वरः]** 'ईशिक् ऐश्वर्ये' (११९६) ईश् । ईष्टे । 'स्थेश-भास-पिस-कसो वरः' (५।२।८१) वरप्र० ।

**[गोषु दायादः, गवां दायादः]** दाय 'डुदांग्क् दाने' (११३८) दा, आङ्पूर्व० । दायमादत्ते । 'दश्चाऽऽङः' (५।१।७८) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

**[गोषु साक्षी, गवां साक्षी]** साक्षात् । साक्षाद् द्रष्टा = साक्षी । 'साक्षाद् द्रष्टा' (७।१।१९७) इन्प्र० । 'प्रायोऽव्य-यस्य' (७।४।६५) आल्लोपः ।

**[गोषु प्रसूतः, गवां प्रसूतः]** 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, प्रपूर्व० । प्रसूयते स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ॥छा॥

### व्याप्ये क्तेनः ॥२।२।९९॥

**[व्याप्ये क्तेनः]** व्याप्य सप्तमी ङि । क्ताद् इन् = क्तेन्, तस्य । व्याप्योपादानात्, तेन वा ? (हि) अधिकारभेदः, पृथग्योगादिति वेति निवृत्तम् ।

**[अधीती व्याकरणे]** अधीतं व्याकरणमनेन । 'इष्टादेः' (७।१।१६८) इन्प्र० । एवं सर्वत्र ।

**[आम्नाती द्वादशाङ्गे]** 'म्नां अभ्यासे' (६  ) म्ना, आङ्पूर्व० । आम्नायते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ।

**[परिगणिती ज्योतिषि]** 'गणण् संख्याने' (१८७४) गण, परिपूर्व० । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । परिगण्यते स्म । 'गत्यर्था-ऽकर्मक०' (५।१।११) क्तप्र० → त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[इष्टी यज्ञे]** 'यजीं देवपूजा-सङ्गतिकरण-दानेषु (९९१) यज् । इज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'यजादि-वचेः किति' (४।१।७९) य्वृत् य० → इ० । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । इष्टो यज्ञोऽनेन । 'इष्टादेः' (७।१।१६८) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[कृतपूर्वी कटम्]** कृतः(तं) पूर्वं कटोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[भुक्तपूर्वी ओदनम्]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुज्यते स्माऽस्मिन्निति । 'अद्यर्थाच्चाऽऽधारे' (५।१।१२) क्तप्र० । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे प्रथमो०' (१।३।५०) ग० → क० । भुक्तः(क्तं) पूर्वमोदनोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० ।

**[उपश्लिष्टो गुरून् मैत्रः]** 'श्लिषंच् आलिङ्गने' (१२१०) श्लिष्, उपपूर्व० । उपश्लिष्यते स्म । 'श्लिप-शीङ्-स्था-ऽऽस-वस-जन-रुह-जॄ-भजेः क्तः' (५।१।९) क्तप्र० → त । 'तवर्गस्य श्ववर्ग०' (१।३।६०) त० → ट० ।

**[मासमधीती व्याकरणे]** अधीत । अधीतमस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।।छ।।

## तद्युक्ते हेतौ ।।२।२।१००।।

**[तद्युक्ते हेतौ]** तेन = व्याप्येन युक्तस्तद्युक्तस्तस्मिन् । हेतु सप्तमी ङि । 'डिर्डौ' (१।४।३९) डौ० → औ० । 'डित्यन्त्य०' (२।१।११४) उलोपः ।

चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति, सीम्नि卐 पुष्पलको हतः ।।१।।

**[हन्ति]** 'हनंक् हिंसा-गत्योः' (११००) हन् । वर्त्त० तिव् । 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१।३।३९) न० → न० ।

**[हतः]** हन् । हन्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'यमि-रमि-नमि०' (४।२।५५) नलोपः ।

सीमा मर्यादा-वृषणश्च पुष्पलकः कीलकोऽरण्यविड(डा)लश्च ।

**[वेतनेन धान्यं लुनाति]** 'लूग्श् छेदने' (१५१९) लू । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । 'प्वादेर्ह्रस्वः' (४।२।१०५) ह्रस्वः ।।छ।।

## अप्रत्यादावसाधुना ।।२।२।१०१।।

**[अप्रत्यादावसाधुना]** प्रतिरादिर्यस्याऽसौ प्रत्यादिः, न प्रत्यादिरप्रत्यादिः । 'नञत्' (३।२।१२५) न० → अ०, तस्मिन् । न साधु(:) = असाधुः । 'नञत्' (३।२।१२५) न० → अ०, तेन = असाधुना । तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० ।

**[असाधुर्मैत्रो मातरि]** मातृ सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् ।।छ।।

## साधुना ।।२।२।१०२।।

**[साधुना]** साधु तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० ।

**[साधुर्मैत्रो राजनि]** राजन् सप्तमी ङि । 'ई-ङौ वा' (२।१।१०९) अनोऽस्य लुक् ।

**[साधुर्मातरि]** मातृ सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् ।।छ।।

## निपुणेन चाऽर्चायाम् ।।२।२।१०३।।

**[निपुणेन चाऽर्चायाम्]** निपुण तृतीया टा । च प्रथमा सि । अर्चा सप्तमी ङि ।

---

卐 प्रजने स्यादुपसरः कीलः पुष्पलकः शिवः । (अभिधानचिन्तामणिनाममालायाम् - १२७४)
पुष्कलकः - शब्दरत्नमहोदधौ ।
पुष्पलकः - The Students Sanskrit English Dictanory |

**[मातरि निपुणः]** मातृ । सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् ।

**[पितरि साधुः]** पितृ । सप्तमी ङि । 'अर्डौ च' (१।४।३९) अर् ।।छ।।

**स्वेशेऽधिना ।।२।२।१०४।।**

**[स्वेशेऽधिना]** स्वस्य ईशः = स्वेशस्तस्मिन् । अधि तृतीया टा । 'टः पुंसि ना' (१।४।२४) टा० → ना० ।

**[अधि मगधेषु श्रेणिकः]** मगधानां श्रेणिकोऽधिष्टा - स्वामी तेऽधि मगधास्तेषु = अधि मगधेषु, सप्तमी सुप् ।

**[अधि श्रेणिके मगधाः]** श्रेणिको मगधेषु अधि=स्वामी स अधि श्रेणिकस्तस्मिन्, सप्तमी ङि । मगध प्रथमा जस् ।।छ।।

**उपेनाऽधिकिनि ।।२।२।१०५।।**

**[उपेनाऽधिकिनि]** उप तृतीया टा । अधिक । अधिकं विद्यते यस्याऽसौ अधिकी । 'अतोऽनेकस्वरात्' (७।२।६) इन् । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्मिन् ।

**[उप खार्यां द्रोणः]** खार्यामधिको द्रोणोऽधि खारी, तस्यां अधि खार्यां, सप्तमी ङि । द्रोण । प्रथमा सि ।।छ।।

**यद्भावो भावलक्षणम् ।।२।२।१०६।।**

**[यद्भावः]** यस्य भावः = यद्भावः । प्रथमा सि ।

**[भावलक्षणम्]** 卐 भावस्य लक्षणं = भावलक्षणम् ।

**[गोषु दुह्यमानासु गतः, दुग्धास्वागतः]** 'दुहींक् क्षरणे' (११२७) दुह् । दुह्यते = दुह्यमाना । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'अतो म आने' (४।४।११४) मोऽन्तः । दुह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'भ्वादेर्दादेर्घः' (२।१।८३) ह० → घ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) घ० → ग० । 'आत्' (२।४।१८) आप् ।

**[देवाऽर्चनायां क्रियमाणायां गतः, कृतायामागतः]** देव 'अर्च(र्चि)ण् पूजायाम्' (१९५४) अर्च् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० । अर्चयतीति । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० → अर्चना । 'णेरनिटि' (४।३।८३) णिच्लोपः । देवस्याऽर्चना = देवाऽर्चना, तस्याम् ।

**[आम्रेषु कलायमात्रेषु गतः, पक्वेषु आगतः]** आम्रस्य फलानि । 'दोरप्राणिनः' (६।२।४९) मयट्प्र० । 'फले' (६।२।५८) लुप् । कलाय-त्रिपुटिधान्यविशेषो मानमेषां स्यात् । 'मात्रट्' (७।१।१४५) मात्रटप्र०, तेषु । 'डुपचींष् पाके' (८९२) पच् । पच्यते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'क्षै-शुषि-पचो म-क-वम्' (४।२।७८) त० → व० । 'च-जः क-गम्' (२।१।८६) च० → क०, तेषु ।

**[ऋद्धेषु भुञ्जानेषु दरिद्रा आसते]** 'दरिद्राक् दुर्गतौ' (१०९२) दरिद्रा । दरिद्रातीति । 'अच्' (५।१।४९) अच्प्र० → अ । 'अशित्यस्सन्णकज्-णकाऽनटि' (४।३।७०) आलोपः । प्रथमा जस् । 'हेतु-कर्तृ-करणेत्थम्भूतलक्षणे' (२।२।४४) इति तृतीया प्राप्नोति परं तदपवादोऽयं सूत्रः कृतः ।

**[ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते]** दरिद्रा पूर्ववत् साध्यः ।।छ।।

**गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ।।२।२।१०७।।**

**[गते गम्येऽध्वनोऽन्तेनैकार्थ्यम्]** गत सप्तमी ङि । अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५)

---

P 卐 भावोऽस्य लक्षते येन तद् भावलक्षणम् ।

- 'गम्लृं गतौ' (३९६) गम् । 'शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात्' (५।१।२९) यप्र०, तस्मिन् = गम्ये । अध्वन् षष्ठी ङस् । अन्त तृतीया टा । एकोऽर्थो यस्याऽसौ एकार्थः, एकार्थस्य भावः कर्म वा = ऐकार्थ्यम् । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० ऐ ।

**[वा]** वा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु वा योजनेषु]** 卐 गवीधवः सन्त्यस्मिन् । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । प्र० जस् (?) पञ्चमी ङसि । संकाश । संकाशेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । चतुर् । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० → इ० । 'वाः शेषे' (१।४।८२) उ० → वा० आदेशः ।

**[लोकमध्याल्लोकान्तमुपर्यधश्च सप्त रज्जूनामनन्ति]** 'म्नां अभ्यासे' (६) म्ना, आङ्पूर्व० । वर्त्त० अन्ति । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) मन् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[कार्तिक्या आग्रहायणी मासे]** 'कृतैत् छेदने' (१३२५) कृत् । कृन्ततीति । 'कृति-पुति-लति-भिदिभ्यः कित्' (उणा० ७६) कित् तिकप्र० । कृत्तिकाभिश्चन्द्रयुक्ताभिर्युक्ता पूर्णमासी = कार्त्तिकी । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आर् । 'अवर्णे०' (७।४।६८) आलुक् । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अग्रं हायनस्य । 'द्वि-त्रि-चतुष्पूरणा-ऽग्रादयः' (३।१।५६) इत्यनेन समासः । 'पूर्वपदस्थान्नाम्न्यगः' (२।३।६४) न० → ण० । अग्रहायणमेवाऽऽग्रहायणी । 'प्रज्ञादिभ्योऽण्' (७।२।१६५) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ । 'अवर्णे०' (७।४।६८) अलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । मास सप्तमी ङि ।।छ।।

## षष्ठी वाऽनादरे ।।२।२।१०८।।

**[षष्ठी वाऽनादरे]** षष्ठी प्रथमा सि । वा प्रथमा सि । 'दृंङ्त् आदरे' (१४६६) दृ, आङ्पूर्व० । आद्रियते = आदरः । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० । 'नामिनो गुणो०' (४।३।१) गु० अर् । न आदरोऽनादरः । 'अन् स्वरे' (३।२।१२९) अन्, तस्मिन् ।

**[रुदतो लोकस्य प्राव्राजीत्, रुदति लोके प्राव्राजीत्]** 'रुदृक् अश्रुविमोचने' (१०८७) रुद् । रोदितीति । 'शत्रानशा०' (५।२।२०) शतृप्र० → अत्, तस्य । धृज (१३०) - धृजु (१३१) - ध्वज (१३२) - ध्वजु (१३३) - ध्रज (१३४) - ध्रजु (१३५) - वज (१३६) - 'व्रज गतौ' (१३७) व्रज्, प्रपूर्व० । अद्यतनी दि । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'वद-व्रज-लृः' (४।३।४८) वृद्धिः व्रा । 'सः सिजस्तेर्दि-स्योः' (४।३।६५) ईत् । 'स्ताद्यशितो०' (४।४।३२) इट् । 'इट ईति' (४।३।७१) सिज्लोपः । 'समानानां०' (१।२।१) दीर्घः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[क्रोशतो बन्धुवर्गस्य प्राव्राजीत्, क्रोशति बन्धुवर्गे प्राव्राजीत्]** 'क्रुशं आह्वान-रोदनयोः' (९८६) क्रुश् । क्रोशतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० ।।छ।।

## सप्तमी चाऽविभागे निर्धारणे ।।२।२।१०९।।

**[सप्तमी चाऽविभागे]** सप्तमी प्रथमा सि । च प्रथमा सि । न विभागोऽविभागः । 'नञत्' (३।२।१२५) न० → अ०, तस्मिन् = अविभागे । सप्तमी ङि ।

**[निर्धारणे]** 'धृंग् धारणे' (८८७) धृ । धरमाणं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'नामिनोऽकलि-

P 卐 गवीधवोऽत्र सन्ति, गवीधुभिर्निर्वृत्तः, गवीधूनां निवासः, गवीधूनामदूरभवो वा ।

हलेः' (४।३।५१) वृ० आर् । निर्धार्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण०, तस्मिन् ।

**[क्षत्रियः(याः) पुरुषाणां पुरुषेषु वा शूरतमः(माः)]** क्षत्रस्याऽपत्यं क्षत्रियः । 'क्षत्रादियः' (६।१।९३) इयप्र० । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । इमे शूराः २, इमेऽमीषां मध्ये प्रकृष्टाः शूराः = शूरतमाः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम ।

**[शालयः शूकधान्यानां शूकधान्येषु पथ्यतमाः]** इमे पथ्याः २, इमेऽमीषां मध्ये प्रकृष्टाः पथ्याः = पथ्यतमाः ।

**[कृष्णा गवां गोषु वा संपन्नक्षीरतमा]** संपन्नं क्षा(क्षी)रं यस्याः सा = संपन्नक्षीरा । प्रकृष्टा संपन्नक्षीरा = संपन्नक्षीरतमा । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । 'आत्' (२।४।१८) आप् ।

**[धावन्तो गच्छतां गच्छत्सु वा शीघ्रतमाः]** 'सृ गतौ' (२५ ) सृ । धावन्तीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् । 'वेगे सर्त्तेर्धाव्' (४।२।१०७) धाव् आदेशः । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । प्रथमा जस् । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'गम्लृं गतौ' (३९६) गम् । गच्छन्तीति । 'शत्रानशा०' (५।२।२०) शतृप्र० → अत् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'गमिषद्यमश्छः' (४।२।१०६) म० → छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ० → च० । 'लुगस्या०' (२।१।११३) अलोपः, 卐 इमे शीघ्राः २, इमेऽमीषां मध्ये प्रकृष्टाः शीघ्राः = शीघ्रतमाः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम ।

**[माथुराः पाटलिपुत्रकेभ्य आढयतराः]** मथुरा । मथुरायां भवाः = माथुरा(:) । रोपान्त्यबाधकः 'कोपान्त्याच्चाऽण्' (६।३।५६) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । पाटलिपुत्रे भवाः । 'रोपान्त्यात्' (६।३।४२) अकञ्प्र० → अक । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । प्रकृष्टा आढयाः = आढ्यतराः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० → तर । प्रथमा जस् ।

**[पञ्चालाः कुरुभ्यः संपन्नतराः]** पञ्चालस्य राज्ञोऽपत्यानि । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'बहुष्वस्त्रियाम्' (६।१।१२४) अञ्लोपः । कुरो राज्ञोऽपत्यानि । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः' (६।१।११८) ञ्यप्र० । अनेनैव ('बहुष्वस्त्रियाम्' (६।१।१२४)) ञ्यलोपः । 'पदिंच् गतौ' (१२५७) पद्, संपूर्व० । संपद्यन्ते स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द०–त० → न० । प्रकृष्टाः संपन्नाः = संपन्नतराः । प्रकृष्टे तरप् ('द्वयोर्विभज्ये च तरप्' (७।३।६) तरप् → तर) । प्रथमा जस् ।

**[गोभ्यः कृष्णाः संपन्नक्षीरतमाः]** संपन्नं क्षीरं यस्याः सा = संपन्नक्षीरा । प्रकृष्टा संपन्नक्षीरा = संपन्नक्षीरतमा । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । प्रथमा जस् ॥छ॥

### क्रियामध्येऽध्वकाले पञ्चमी च ॥२।२।११०॥

**[क्रियामध्ये]** 卐卐क्रियाया मध्यं = क्रियामध्यम्, तस्मिन् ।

**[अध्वकाले]** अध्वा च कालश्च = अध्वाकालम्, तस्मिन् ।

**[पञ्चमी]** पञ्चमी प्रथमा सि ।

**[च]** च प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[इहस्थोऽयमिष्वासः क्रोशाल्लक्ष्यं विध्यति, क्रोशे वा लक्ष्यं विध्यति]** इह स्था (२।२।२०) सूत्रवत् । इह तिष्ठतीति

---

P 卐 प्रकृष्टाः शीघ्राः = शीघ्रतमाः ।

P 卐卐 क्रिययोः ।

इहस्थः । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० → अ । 'इडेत्पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । इदम् । प्रथमा सि । 'अयमियं पुंस्त्रियोः सौ' (२।१।३८) अयम् । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'असूच् क्षेपणे' (१२२१) अस् । इषून् अस्यतीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० → अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'इवर्णादे०' (१।२।२१) व० । 'व्यधंच् ताडने' (११५७) व्यध् । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य । 'ज्या-व्यधः क्ङिति' (४।१।८१) य्वृद् य० → इ० ।

**[अद्य भुक्त्वा मुनिर्द्व्यहात् भोक्ता, द्व्यहे वा भोक्ता]** इदम् । अस्मिन् अह्नि । 'सद्यो-ऽद्य-परेद्यव्यह्नि' (७।२।९७) अद्यनिपातु । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोजनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । द्वि-अहन् । द्वयोरह्नोर्भवः (समाहारः) 'द्विगोरन्नह्नोऽट्' (७।३।९९) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपस्तस्मात् तस्मिन् वा । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । श्वस्तनी ता । अथवा भुङ्क्ते इति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'लघोरुपान्त्यस्य' (४।३।४) गु० उ० → ओ० । 'च-जः क-गम्' (२।१।८६) ज० → ग० । 'अघोषे प्रथमो०' (१।३।५०) ग० → क० ।।छ।।

## अधिकेन भूयसस्ते ।।२।२।१११।।

**[अधिकेन]** अधिक तृतीया टा ।

**[भूयसस्ते]** भूयस् [१]पञ्चमी ङसि । तद् । सा च सा च = ते । 'त्यदादिः' (३।१।१२०) एकशेषः । प्रथमा औ । 'आ द्वेरः' (२।१।४१) द० → अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः । 'औता' (१।४।२०) ए ।।छ।।

## तृतीयाऽल्पीयसः ।।२।२।११२।।

**[तृतीयाऽल्पीयसः]** तृतीया प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । अल्पीयस् षष्ठी ङस् ।

## पृथग्-नाना पञ्चमी च ।।२।२।११३।।

**[पृथग्नाना]** पृथग् च नाना च = पृथग्नाना ।[२] तृतीया टा । 'अव्ययस्य' (३।२।७)[३] टालोपः ।।छ।।

## ऋते द्वितीया च ।।२।२।११४।।

**[ऋते]** ऋते तृतीया टा । 'अव्ययस्य' (३।२।७) टालोपः ।

**[द्वितीया च]** द्वि । द्वयोः पूरणी = द्वितीया । 'द्वेस्तीयः' (७।१।१६५) तीयप्र० । 'आत्' (२।४।१८) आप् । च प्रथमा सि ।

**[नह्यङ्गं विक्रियते रागमृते]** 'डुकृंग् करणे' (८८८ ) कृ, विपूर्व० । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'रिः श-क्या-ऽऽशीर्ये' (४।३।११०) क्रि ।

**[ऋते धर्मात् कुतः सुखम्]** किम् । कस्मात् = कुतः । 'इतोऽतः कुतः' (७।२।९०) तस्प्र० कुतस्निपातः । सुख । द्वितीया अम् ।।छ।।

## विना ते तृतीया च ।।२।२।११५।।

**[विना ते]** विना [४]तृतीया टा । 'अव्ययस्य' (३।२।७)[५] टालोपः । तद् । सा च सा च = ते । 'त्यदादिः' (३।१।१२०)

---

P (१) षष्ठी ङस् । P (२) भ्याम् । P (३) भ्याम् लोपः । P (४) प्रथमा सि । P (५) सिलोपः ।

एकशेषः । प्रथमा औ । 'आ द्वेरः' (२।१।४१) द० → अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप् । 'औता' (१।४।२०) ए ।

**[याच्ञां विना विद्धि]** 'विदक् ज्ञाने' (१०९९) विद् । पञ्चमी हि । 'हु-धुटो हेर्धिः' (४।२।८३) हि०→धि० ॥छ॥

**तुल्यार्थैस्तृतीया-षष्ठ्यौ** ॥२।२।११६॥

**[तुल्यार्थैः]** तुल्योऽर्थो येषां ते = तुल्यार्थास्तैः = तुल्यार्थैः । तृतीया भिस् ।

**[तृतीयाषष्ठ्यौ]** तृतीया च षष्ठी च = तृतीयाषष्ठ्यौ ।

तुल्यादयो हि धर्मिवाचकाः, तुला-उपमादयस्तु तुल्यत्वादिधर्मवचना इति न तुल्यार्थाः ॥छ॥

**द्वितीया-षष्ठ्यावेनेनाऽनञ्चेः** ॥२।२।११७॥

**[द्वितीयाषष्ठ्यावेनेनाऽनञ्चेः]** द्वितीया च षष्ठी च = द्वितीयाषष्ठ्यौ । एन तृतीया टा । 'टा-ङसोरिन-स्यौ' (१।४।५) इन । न अञ्चिरनञ्चिः । 'अन् स्वरे' (३।२।१२९) अन् । 卐 तस्मात् ।

**[पूर्वेण ग्रामम्, पूर्वेण ग्रामस्य]** पूर्वा । पूर्वस्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[अपरेण ग्रामम्, अपरेण ग्रामस्य]** अपरा । अपरस्यामन्तर्वर्त्तिन्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[दक्षिणेन विजयार्धम्, दक्षिणेन विजयार्धस्य]** दक्षिणा । दक्षिणस्यामदूरवर्त्तिन्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[उत्तरेण हिमवन्तम्, उत्तरेण हिमवतः]** उत्तरा । उत्तरस्यामदूरवर्त्तिन्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[प्राग् ग्रामात्]** 'अञ्चू गतौ च' (१०५ ) अञ्च्, प्रपूर्व० । प्राञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'अञ्चः' (२।४।३) ङीप्र० । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अच्० → च्० प्राग्दीर्घः । प्राच्यामदूरवर्त्तिन्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेर्गौणस्या-ऽक्विपस्तद्धितलुक्यगोणी-सूच्योः' (२।४।९५) ङीनिवृत्तिः । 'चजः क-गम्' (२।१।८६) च० → क० । 'धुटस्तृतीयः' (२।१।७६) क० → ग० ।

**[प्रत्यग् ग्रामात्]** 'अञ्चू गतौ च' (१०५) अञ्च्, प्रतिपूर्व० । प्रत्यञ्चतीति क्विप् । शेषं पूर्ववत् । प्रतीच्यामदूरवर्त्तिन्यां दिशि वसति ।

**[उदग् ग्रामात्]** 'अञ्चू गतौ च' (१०५) अञ्च्, उत्पूर्व० । उदञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'अञ्चः' (२।४।३) ङीप्र० । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अच्→च्० । उदीच्यामदूरवर्त्तिन्यां दिशि वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेर्गौणस्या०' (२।४।९५) ङीनिवृत्तिः । 'च-जः क-गम्' (२।१।८६) च० → क० । 'धुटस्तृतीयः' (२।१।७६) क०→ग० ॥छ॥

---

P 卐 तस्य ।

**हेत्वर्थैस्तृतीयाद्याः** ।।२।२।११८।।

**[हेत्वर्थैः]** हेतुरर्थो येषां ते = हेत्वर्थास्तैः = हेत्वर्थैः ।।

**[तृतीयाद्याः]** तृतीया आद्या यासां तास्तृतीयाद्याः ।।छ।।

**सर्वादेः सर्वाः** ।।२।२।११९।।

**[सर्वादेः सर्वाः]** सर्व आदिर्यस्याऽसौ सर्वादिः, 卐 तस्मात् । सर्वा प्रथमा जस् ।।छ।।

**असत्त्वारादर्थाट्टा-ङसि-ङ्यम्** ।।२।२।१२०।।

**[असत्त्वारादर्थात्]**卐卐 न विद्यते सत्त्वं यस्याऽसौ, 'नञत्' (३।२।१२५) न० → अ० । आरादर्थो यस्याऽसौ आरादर्थः, असत्त्वश्च आरादर्थश्च, तस्मात् ।

**[टाङसिङ्यम्]** टाश्च ङसिश्च ङिश्च अम् च = टाङसिङ्यं, प्रथमा जस्, सूत्रत्वाल्लोपः ।

**[दूरः पन्थाः]** पथिन् । प्रथमा सि । 'थो न्थ्' (१।४।७८) थ० → न्थ्० । एः (१।४।७७) इ०→आ० । पथिन्-मथिनृभुक्षः सौ (१।४।७६) न० → आ० । 'समानानां०' (१।२।१) दीर्घः । 'सो रुः' (२।१।७२) र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[दूराय पथे देहि]** पथिन् चतुर्थी ङे । 'इन् ङी-स्वरे लुक्' (१।४।७९) इन्लोपः ।

**[दूरस्य पथः]** पथिन् षष्ठी ङस् । 'इन् ङी-स्वरे लुक्' (१।४।७९) इन्लोपः ।।छ।।

**जात्यारव्यायां नवैकोऽसंख्यो बहुवत्** ।।२।२।१२१।।

**[जात्याख्यायाम्]** जातेराख्या = जात्याख्या, तस्याम् ।

**[नवैकोऽसंख्यः]** नवा प्रथमा सि । एक प्रथमा सि । 'सो रुः' (२।१।७२) र० ।+ न विद्यते संख्या यत्राऽसौ । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वत्वम् । 'नञत्' (३।२।१२५) न० → अ० । प्रथमा सि ।

**[बहुवत्]** बहु । बहुरिव । 'स्यादेरिवे' (७।१।५२) वत्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[संपन्नो यवः, संपन्ना यवाः]** 'पदिंच् गतौ' (१२५७) पद्, संपूर्व० । संपद्यन्ते स्म ।' 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द०–त० → न० ।

**[संपन्नो व्रीहिः, संपन्ना व्रीहयः]** 'पदिंच् गतौ' (१२५७) पद्, संपूर्व० । संपद्यन्ते स्म । शेषं पूर्ववत् ।

**[काश्यपप्रतिकृतिः काश्यपः]** कश्यं पिबतीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० → अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । कश्यपस्याऽपत्यं = काश्यपः । 'शिवादेरण्' (६।१।६०) अण्प्र० → अ (?) । ('विदादेर्वृद्धे' (६।१।४१) अञ्प्र०) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । काश्यपस्य प्रतिकृतिः = काश्यपः । प्रथमा सि । 'सो रुः' (२।१।७२) र० ।

**[कलिङ्गेष्वक्षिणी शुभे]** अक्षि । औ । 'औरीः' (१।४।५६) ई । 'अनाम्स्वरे नोऽन्तः' (१।४।६४) नोऽन्तः । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ।

**[एके व्रीहयः संपन्नाः सुभिक्षं कुर्वन्ति]** 'डुकृंग् करणे' (८८८ ) कृ । वर्त्त० अन्ति । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'नामिनो०' (४।३।१) गु० अर् । 'अतः शित्युत्' (४।२।८९) अ० → उ० । 'इवर्णादे०' (४।२।२१) वत्वम् ।।छ।।

---

P 卐 तस्य ।   P + न विद्यते संख्या यस्याऽसौ ।

P 卐卐 न सत्त्वमसत्त्वम्, आरादर्थो यस्य तदारादर्थम्, असत्त्वे आरादर्थमसत्त्वारादर्थम्, तस्मात् ।

**अविशेषणे द्वौ चास्मदः ॥२।२।१२२॥**

**[अविशेषणे]** न विद्यते विशेषणं यत्र तद् = अविशेषणम् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[द्वौ चास्मदः]** द्वि प्रथमा औ । च प्रथमा सि । अस्मद् प्रथमा जस् ।

**[आवां ब्रूवः, वयं ब्रूमः]** अस्मद् । औ । 'अमौ मः' (२।१।१६) म० । 'युष्मदस्मदोः' (२।१।६) द०→आ० । 'मन्तस्य युवा-ऽऽवौ द्वयोः' (२।१।१०) आवादेशः ।

**[अहं ब्रवीमि, वयं ब्रूमः]** 'ब्रूंग्क् व्यक्तायां वाचि' (११२५) ब्रू । वर्त्त० मिव् । 'ब्रूतः परादिः' (४।३।६३) ईत् । 'नामिनो गुणो०' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ॥छ॥

**फल्गुनी-प्रोष्ठपदस्य भे ॥२।२।१२३॥**

**[फल्गुनीप्रोष्ठपदस्य]** फल्गुनी च प्रोष्ठपदा च = फल्गुनीप्रोष्ठपदम् । 'क्लीबे' (२।४।९७) ह्रस्वत्वम्, तस्य ।

**[भे]** भ सप्तमी ङि ।

**[कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः]** किम् । कस्मिन् काले = कदा । 'किम्-यत्-तत्-सर्वैका-ऽन्यात् काले दा' (७।२।९५) दाप्र० । 'किमः कस्तसादौ च' (२।१।४०) किम्→क० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । फल्गुन 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । फल्गुनीभ्यां चन्द्रयुक्ताभ्यां युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० - 'लुप् त्वप्रयुक्ते' अण्लोपः । पूर्वा औ ।

**[कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः]** किम् । कस्मिन् काले = कदा । 'किम्-यत्-तत्-सर्वैका-ऽन्यात् काले दा' (७।२।९५) दाप्र० । 'किमः कस्तसादौ च' (२।१।४०) किम् → क० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । पूर्वा औ । प्रोष्ठस्येव पादौ यस्याः सा = प्रोष्ठपदा । 'आत्' (२।४।१८) आप् ।

**[फल्गुनीषु जाते फल्गुन्यौ माणविके]** फल्गुनीषु जातः । 'जाते' (६।३।९८) अण्प्र० । 'बहुलमन्येभ्यः' (६।३।१०९) अण्लोपः ॥छ॥

**गुरावेकश्च ॥२।२।१२४॥**

**[गुरौ]** गुरु सप्तमी ङि । 'ङिर्डौ' (१।४।२५) ङि → डौ०→औ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) उलुक् ।

**[स कारुणिक उपाध्यायः, ते कारुणिका उपाध्यायाः]** करुणा । करुणया चरति = कारुणिकः । 'चरति' (६।४।११) इकण्प्र० → इक । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[अयं तपस्वी, इमे तपस्विनः]** तपस् । तपो विद्यते यस्याऽसौ तपस्वी । 'अस्-तपो-माया-मेधा-स्रजो विन्' (७।२।४७) विन्प्र० । सि-जस् ।

**[इह भवानाह, इह भवन्तस्त्वाहुः]** 'ब्रूंग्क् व्यक्तायां वाचि' (११२५) ब्रू । वर्त्त० तिव् - अन्ति । 'ब्रूगः पञ्चानां पञ्चाऽऽहश्च' (४।२।११८) ब्रू → आहु आदेशः । तिव्०→णव्०, अन्ति→उस् ॥छ॥

*षष्ठः पादः समाप्तः ॥छ॥*

|| अर्हम् ||

# || अथ द्वितीयाऽध्यायस्य तृतीयः पादः ||

## नमस्-पुरसो गतेः क-ख-प-फि रः सः ||२|३|१||

**[नमस्पुरसः]** (१) नमश्च पुरश्च = नमस्पुरस्, तस्य ।

**[करवपफि]** कश्च खश्च पश्च फश्च = (२) कखपफ्, तस्मिन् ।

**[नमस्कृत्य]** नमस् 'डुकृंग् करणे' (८८८ ) कृ । (३) नमः करणं पूर्वम् । 'प्राक्काले' (५|४|४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३|२|१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४|४|११३) तोऽन्तः । 'सो रुः' (२|१|७२) र० । अनेन र० → स० ।

**[नमस्कर्ता]** नमस्करोतीति । 'णक-तृचौ' (५|१|४८) तृच्प्र० । 'नामिनो गुणो०' (४|३|१) गु० अर् । 'र्हादर्ह०' (१|३|३१) द्वित्वम् ।

**[नमस्कर्तुम्]** नमस्करणाय । 'क्रियायां क्रियार्थायां०' (५|३|१३) तुम्प्र० । 'नामिनो गुणो०' (४|३|१) गु० अर् ।

**[नमस्कर्तव्यम्]** नमः क्रियते । 'तव्या-ऽनीयौ' (५|१|२७) तव्यप्र० । 'नामिनो गुणो०' (४|३|१) गु० अर् ।

**[पुरस्कृत्य]** पुरस् । पुरः करणं पूर्वम् । 'प्राक्काले' (५|४|४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३|२|१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४|४|११३) तोऽन्तः । अनेन र०→स० । 'पुरोऽस्तमव्ययम्' (३|१|७) गतिसंज्ञात्वम् ।

**[पुरस्कर्ता]** पुरः करोतीति । 'णक-तृचौ' (५|१|४८) तृच्प्र०→तृ । 'नामिनो गुणो०' (४|३|१) गु० अर् । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१|४|८४) डा० । 'डित्यन्त्यस्वरादेः' (२|१|११४) अन्त्यस्वरादिलोपः ।

**[पुरस्कर्तुम्]** पुरः करणाय । 'क्रियायां क्रियार्थायां०' (५|३|१३) तुम्प्र० ।

**[पुरस्कर्तव्यम्]** 'डुकृंग् करणे' (८८८ ) कृ । पुरः क्रियते । 'तव्या-ऽनीयौ' (५|१|२७) तव्यप्र० ।

**[पुरस्वादः]** 'खादृ भक्षणे' (२९४ ) खाद् । पुरः खादनम् । 'भावाऽकर्त्रोः' (५|३|१८) घञ्प्र० । 'ञ्णिति' (४|३|५०) उपान्त्यवृद्धिः ।

**[पुरस्पातः]** पुरस् 'पत्लृ गतौ' (९६२ ) पत् । पुरः पतनम् । 'भावाऽकर्त्रोः' (५|३|१८) घञ्प्र० । 'ञ्णिति'

---

P १. नमांश्च पुराश्च ।

P २. कखपफम् ।

P ३. अनमो नमः करणं पूर्वम् । 'प्राक्काले' (५|४|४७) क्त्वाप्र० । 'साक्षादादिश्च्व्यर्थे' (३|१|१४) इति गतिसंज्ञात्वम् ।

(४।३।५०) उपान्त्यवृद्धिः ।

**[पुरस्पतनम्]** पुरः पत्यते = पुरःपतनम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[पुरस्फक्कः]** पुरस् 'फक्क नीचैर्गतौ' (५०) फक्क् । पुरः फक्कनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० ।

**[पुरस्फक्कनम् ]** पुरः फक्क्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[नमः कृत्वा]** नमःशब्दाद् द्वितीया अम् ।

**[तिस्रः पुरः करोति]** त्रि । द्वितीया शस् → अस् । 'त्रि-चतुरस्तिसृ-चतसृ स्यादौ' (२।१।१) तिसृ आदेशः । 'ऋतो रः स्वरेऽनि' (२।१।२) र० । पुर् द्वितीया शस् → अस्, पुरःशब्दः पुरीवाचकः शसन्तः ॥छ॥

## तिरसो वा ॥२।३।२॥

**[तिरसो वा]** तिरस् षष्ठी ङस् । वा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[तिरस्कृत्य, तिरःकृत्य]** तिरस् 'डुकृंग् करणे' (८८८) कृ । तिरः करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'कृगो नवा' (३।१।१०) गतिसंज्ञा ।

**[तिरस्कर्ता, तिरःकर्ता]** तिरः करोतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० ।

**[तिरस्कर्तुम्, तिरःकर्तुम्]** तिरः करणाय । 'क्रियायां क्रियार्थाया०' (५।३।१३) तुम्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[तिरः कृत्वा काष्ठं गतः]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गच्छति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति' (४।२।५५) मलोपः ॥छ॥

## पुंसः ॥२।३।३॥

**[पुंस्कोकिलः]** पुमांश्चासौ कोकिलश्च । 'पदस्य' (२।१।८९) सलोपः । 'पुमोऽशिट्यघोषेऽख्यागि रः' (१।३।९) म० → र० - अनुस्वारश्च । अनेन र० → स० ।

**[पुंस्खननम्]** पुम्स् 卐 'खनूग् विदारणे' (९१३) खन् । पुंसा खन्यते = पुंस्खननम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'पुमोऽशिट्यघोषेऽख्यागि रः' (१।३।९) म० → र० - अनुस्वारश्च ।

**[पुंस्पाकः]** पुम्स् 'डुपचींष् पाके' (८९२) पच् । पचनं = पाकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च० → क० । पुंसः पाकः । 'पदस्य' (२।१।८९) सलोपः । 'पुमोऽशिट्यघोषेऽख्यागि रः' (१।३।९) म० → र० - अनुस्वारश्च । अनेन र० → स० ।

**[पुंस्फलम्]** पुंसः फलं = पुंस्फलम् । 'पदस्य' (२।१।८९) सलोपः । 'पुमोऽशिट्यघोषेऽख्यागि रः' (१।३।९) म० → र० - अनुस्वारश्च ।

**[पुंस्काम्यति]** पुम्स् । पुमांसमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

---

卐 धातुपारायणे - 'खनूग् अवदारणे ।

**[पुंस्कः]** पुम्स् । कुत्सितोऽल्पोऽज्ञातो वा पुमान् = पुंस्कः । 'कुत्सिताऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क ।

**[पुंस्पाशः]** निन्द्यः पुमान् = पुंस्पाशः । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश । 'पदस्य' (२।१।८९) सलोपः । 'पुमोऽशिट्यघोषेऽख्यागि रः' (१।३।९) म० → र० - अनुस्वारश्च । अनेन र० → स० ।।छ।।

**शिरोऽधसः पदे समासैक्ये ।।२।३।४।।**

**[शिरोऽधसः]** शिरश्च अधश्च = शिरोऽधस्, तस्य ।

**[समासैक्ये]** समासस्य ऐक्यं = समासैक्यम्, तस्मिन् ।

**[शिरस्पदम्]** (१) शिरसः पदं = शिरस्पदम् । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[अधस्पदम्]** अधसः पदं = अधस्पदम् । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[शिरःखण्डम्]** शिरसः खण्डम् ।

**[परमशिरःपदम्]** परमं च तत् शिरश्च = परमशिरः,(२) परमशिरसः पदं = परमशिरःपदम् ।

**[परमाधःपदम्]** परमं च तद् अधश्च = परमाधस्, परमाधसः पदं = परमाधःपदम् ।।छ।।

**अतः कृ-कमि-कंस-कुम्भ-कुशा-कर्णी-पात्रेऽनव्ययस्य ।।२।३।५।।**

**[कृकमिकंसकुम्भकुशाकर्णीपात्रे]** कृश्च कमिश्च कंसश्च कुम्भश्च कुशा च कर्णी च पात्रं च = कृकमिकंसकुम्भकुशाकर्णीपात्रम्, तस्मिन् ।

**[अनव्ययस्य]** न अव्ययं = अनव्ययम् । 'अन् स्वरे' (३।२।१२९) अन्, तस्य ।

**[अयस्कृत्]** अयस् 'डुकृंग् करणे' (८८८) कृ । अयः करोतीति क्विप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'सो रुः' (२।१।७२) र० । अनेन र० → स० । 'ङस्युक्तं कृता' (३।१।४९) समासः ।

**[अयस्कारः]** अयः करणम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । अनेन र० → स० ।

**[अयस्कृतम्]** अयः क्रियते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । अनेन र० → स० ।

**[यशस्कामः]** यशस् 'कमूङ् कान्तौ' (७८९) कम् । यशः कामयते । 'शीलि-कामि-भक्ष्याचरीक्षि-क्षमो णः' (५।१।७३) णप्र० ।

卐**[अयस्कामः]** अयस् 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अयः कामयते । 'कर्मणोऽण्' (५।१।७२) अण्प्र० → अ । 'णेरनिटि' (४।३।८३) णिङ्लोपः ।

**[अयस्कंसः]** 'कसुकि गति-सा(शा)तनयोः' (११२०) कस् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । कंसनं = कंसः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । अयसः कंसः । प्रथमा सि । 'सो रुः' (२।१।७२) र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[अयस्कुम्भः]** 'कुभुङ् चलने' ( ) कुभ् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । कुम्भनं = कुम्भः । 'भावा-

P. (१) शिरसि पदम् । P. (२) परमशिरसि पदम् । 卐 बृहद्वृतौ - पयस्कामः ।

ऽकर्त्रोः' (५।३।१८) घञ्प्र० । अयसः कुम्भः ।

**[पयस्कुम्भकपालानि]** पयःकुम्भश्च कपालानि च = पयस्कुम्भकपालानि । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० → इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[अयस्कुशा]** अयसः कुशा ।

**[पयस्कुशा]** पयसः कुशा । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[अयस्कर्णी]** 卐अयसः कर्णी । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[पयस्कर्णी]** +पयसः कर्णी । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[अयस्पात्रम्]** अयसः पात्रम् ।

**[पयस्पात्रम्]** पयसः पात्रम् ।

**[अयस्कुम्भी]** अयसः कुम्भी ।

**[पयस्पात्री]** पयसः पात्री ।

**[शुनस्कर्णः]** शुनः कर्णः । 'भ्रातुष्पुत्र-कस्कादयः' (२।३।१४) शुनस् निपातः ।

**[गीःकारः]** गिरः करणम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[धूःकारः]** धुरः करणम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[भाःकरणम्]** भाः क्रियते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

**[वाःपात्रम्]** वारः पात्रम् ।

**[भास्करः]** भाः करोतीति । 'अच्' (५।१।४९) अच्प्र० → अ । 'नामिनो गुणो०' (४।३।१) गु० अर् । 'भ्रातुष्पुत्र-कस्कादयः' (२।३।१४) इत्यनेन निपातः ।

**[स्वःकारः]** स्वर् । स्वः करोतीति । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'नामिनो०' (४।३।५१) वृ० आर् ।

**[प्रातःकामः]** प्रातर् 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रातः कामयते । 'कर्मणोऽण्' (५।१।७२) अण्प्र० । 'णेरनिटि' (४।३।८३) णिङ्लोपः ।

**[उपपयःकारः]** उप पयस् । पयसः समीपं = उपपयः । उपपयः करोतीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० → अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[परमयशःकामः]** परमं च तद् यशश्च = परमयशः । परमयशः कामयते । 'कर्मणोऽण्' (५।१।७२) अण्प्र० । 'णेरनिटि' (४।३।८३) णिङ्लोपः ॥छ॥

**प्रत्यये ॥२।३।६॥**

**[पयस्पाशम्]** निन्द्यं पयः = पयस्पाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[यशस्पाशम्]** निन्द्यं यशः = यशस्पाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[पयस्कल्पम्]** ईषदपरिसमाप्तं पयः = पयस्कल्पम् । 'अतमबादेरीषदसमाप्ते कल्पप्-देश्यप्-देशीयर्' (७।३।११)

---

卐 मध्यमवृत्तौ - श. म. न्यासानुसन्धाने - अय इव कर्णौ यस्याः सा ।

\+ मध्यमवृत्तौ - श. म. न्यासानुसन्धाने - पय इव कर्णौ यस्याः सा ।

कल्पप्प्र० → कल्प ।

**[यशस्कल्पम्]** ईषदपरिसमाप्तं यशः = यशस्कल्पम् । 'अतमबादेरीषदसमाप्ते०' (७।३।११) कल्पप्प्र० → कल्प ।

**[पयस्कम्]** पयस् । कुत्सितं पयः = पयस्कम् । 'कुत्सिता-ऽल्पाऽज्ञाते' (७।३।३३) कप्प्र० → क । अनेन र० → स० ।

**[यशस्कम्]** यशस् । कुत्सितं यशः = यशस्कम् । 'कुत्सिता-ऽल्पाऽज्ञाते' (७।३।३३) कप्प्र० → क । अनेन र० → स० ।

**[स्वःपाशम्]** स्वर् । निन्द्यं स्वः = स्वःपाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[प्रातःकल्पम्]** प्रातर् । ईषदपरिसमाप्तं प्रातः = प्रातःकल्पम् । 'अतमबादेरीषदसमाप्ते०' (७।३।११) कल्पप्प्र० → कल्प ।

**[पयःपाशः]** पयसः पाशः ।

**[पयःकल्पः]** पयसः कल्पः ।

**[पयःकम्]** पयसि कं = पयःकं शिरः ।।छ।।

**रोः काम्ये ।।२।३।७।।**

**[पयस्काम्यति]** पयस् । पय इच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे (२।१।११३) अलोपः । 'सो रुः' (२।१।७२) र० । अनेन र० → स० ।

**[यशस्काम्यति]** यशस् । यश इच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'लुगस्या०' (२।१।११३) अलोपः । 'सो रुः' (२।१।७२) र० । अनेन र० → स० ।

**[द्वाःकाम्यति]** द्वार् । द्वारिच्छति । 'अमाव्ययात्०' (३।४।२३) काम्यप्र० ।

**[वाःकाम्यति]** वार् । वारिच्छति । 'अमाव्ययात्०' (३।४।२३) काम्यप्र० ।

**[अहःकाम्यति]** अहन् । अहरिच्छति । 'रो लुप्यरि' (२।१।७५) न० → र० । 'अमाव्ययात्०' (३।४।२३) काम्यप्र० ।

**[अधःकाम्यति]** अधस् । अधरिच्छति । 'अमाव्ययात्०' (३।४।२३) काम्यप्र० ।।छ।।

**नामिनस्तयोः षः ।।२।३।८।।**

**[तयोः]** तद् (२) । सश्च सश्च = तौ, तयोः (२) । 'त्यदादिः' (३।१।१२०) एकशेषः ।

**[सर्पिष्पाशम्]** सर्पिस् । निन्द्यं सर्पिः = सर्पिष्पाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[यजुष्पाशम्]** यजुस् । निन्द्यं यजुः = यजुष्पाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[धनुष्पाशम्]** धनुस् । निन्द्यं धनुः = धनुष्पाशम् । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[गीष्पाशा]** निन्द्या गीः = गीष्पाशा । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[धूष्पाशा]** निन्द्या धूः = धूष्पाशा । 'निन्द्ये पाशप्' (७।३।४) पाशप्प्र० → पाश ।

**[सर्पिष्कल्पम्]** ईषदपरिसमाप्तं सर्पिः = सर्पिष्कल्पम् । 'अतमबादेरीषदसमाप्ते कल्पप्-देश्यप्-देशीयर्' (७।३।११) कल्पप्प्र० → कल्प ।

**[धनुष्कल्पम्]** ईषदपरिसमाप्तं धनुः = धनुष्कल्पम् । 'अतमबादेरीषदसमाप्ते०' (७।३।११) कल्पप्प्र० → कल्प ।

**[गीष्कल्पा]** ईषदपरिसमाप्ता गीः = गीष्कल्पा । 'अतमबादेरीषदसमाप्ते०' (७।३।११) कल्पप्प्र० → कल्प ।

**[सर्पिष्कम्]** कुत्सितं सर्पिः = सर्पिष्कम् । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्र० ।

**[सार्पिष्कः]** सर्पिस् । सर्पिषा संस्कृतः । 'संस्कृते' (६।४।३) इकण्प्र० । 'ऋवर्णोवर्ण-दोसिसुसशश्वदकस्मात्त इकस्येतो लुक्' (७।४।७१) इकस्य इलोपः । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।

**[धानुष्कः]** धनुस् । धनुः प्रहरणमस्य । 'प्रहरणम्' (६।४।६२) इकण्प्र० । 'ऋवर्णोवर्ण-दोसिसुसशश्वकस्मात्त०' (७।४।७१) इकस्य इलोपः । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः ।

**[सर्पिष्काम्यति]** सर्पिरिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० ।

**[अयस्कल्पम्]** ईषदपरिसमाप्तं अयः = अयस्कल्पम् । 'अतमबादेरीषदसमाप्ते०' (७।३।११) कल्पप्प्र० → कल्प ।

**[भिन्द्युः पापानि]** 'भिदृंपी विदारणे' (१४७७) भिद् । सप्तमी युस् । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० → न । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः ।

卐 **[गीᳲकाम्यति]** गिरमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० । 'पदान्ते' (२।१।६४) दीर्घः । 'रः कख-पफयोः ᳲक - ᳳपौ (१।३।५) ᳲक ।

+ **[धूᳲकाम्यति]** धुरमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) काम्यप्र० । 'पदान्ते' (२।१।६४) दीर्घः । 'रः कख-पफयोः ᳲक - ᳳपौ' (१।३।५) ᳲ क ॥छ॥

## निर्दुर्बहिराविष्प्रादुश्चतुराम् ॥२।३।९॥

**[निर्दुर्बहिराविष्प्रादुश्चतुराम्]** निश्च निश्च = निरौ, दुश्च दुश्च = दुरौ । 'समानामर्थेनैकः शेषः' (३।१।११८) एकशेषः । निरौ च दुरौ च वहिश्च आविश्च प्रादुश्च चत्वारश्च = निर्दुर्बहिराविष्प्रादुश्चतुरः, तेषाम् ।

**[निष्कृतम्]** निर् 'डुकृंग् करणे' (८८८) कृ । निःक्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[निष्पीतम्]** निर् 'पां पाने' (२ ) पा । निःपीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) ई → पी ।

**[दुष्कृतम्]** दुःक्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[दुष्पीतम्]** दुःपीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[बहिष्कृतम्]** बहिस् 'डुकृंग् करणे' (८८८ ) कृ । बहिःक्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[बहिष्पीतम्]** बहिःपीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[आविष्कृतम्]** आविस् 'डुकृंग् करणे' (८८८ ) कृ । आविःक्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ।

**[आविष्पीतम्]** आविःपीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ।

**[प्रादुष्कृतम्]** प्रादुःक्रियते स्म । क्तप्र० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

---

卐 बृहद्वृत्तौ - गीःकाम्यति ।  + बृहद्वृत्तौ - धूःकाम्यति ।

प्रादुष्कृतमिति - अत्र अन्ये तु निबन्धकाराः प्रादुष्पीतमित्यप्यधीयते, तच्च न युक्तं, तथाह्युद्योतकरः - प्रादुष्पीतमित्य-सदेतदुदाहरणं विरोधात्, प्रादुःशब्दस्य कृभ्वस्तिविषय एवोपलम्भादिति ।

**[चतुष्कण्टकम्]** चतुर्-कण्टक । चतुर्णां कण्टकानां समाहारः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[चतुष्पात्रम्]** चतुर्-पात्र । चतुर्णां पात्राणां समाहारः = चतुष्पात्रम् । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[नि३ ष्कुल !]** निर्-कुल । निर्गतं कुलं यस्याऽसौ निष्कुलः, तस्य संबोधनं । 'आमन्त्र्ये' (२।२।३२) सि । 'अदेतः स्यमोर्लुक्' (१।४।४४) सिलोपः । 'दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत्' (७।४।९९) प्लुतः ।

**[दु३ ष्पुरुष !]** दुर्-पुरुष । दुष्टः पुरुषो यस्याऽसौ दुष्पुरुषः, तस्य संबोधनं । 'आमन्त्र्ये' (२।२।३२) सि । 'अदेतः स्यमोर्लुक्' (१।४।४४) सिलोपः । 'दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत्' (७।४।९९) प्लुतः ।

**[नैष्कुल्यम्]** निष्कुलस्य भावः = नैष्कुल्यम् । 'पति-राजान्तगुणाङ्गराजादिभ्यः कर्मणि च' (७।१।६०) य्यण्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० नै । अनेन र० → ष० ।

**[दौष्कुल्यम् ?]** दुष्कुलस्य भावः = दौष्कुल्यम् । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० दौ । अनेन र० → ष० ।।छ।।

## सुचो वा ।।२।३।१०।।

**[द्विष्करोति, द्वि ≍ करोति, द्विःकरोति]** द्वि । द्वौ वारावस्य द्विः । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र०→स० ।

**[त्रिष्खनति, त्रि ≍ खनति, त्रिःखनति]** त्रि । त्रयो वारा अस्य त्रिः । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० → स० । अनेन विकल्पे र० → ष० ।

**[चतुष्पचति, चतु ≍ पचति, चतुःपचति]** चतुर् । चत्वारो वारा अस्य । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० → स० । 'रात् सः' (२।१।९०) सलोपः । अनेन विकल्पे र० → ष० ।

**[चतुष्फलति, चतु ≍ फलति, चतुःफलति]** चतुर् । चत्वारो वारा अस्य । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० → स० । 'रात् सः' (२।१।९०) सलोपः । अनेन विकल्पे र० → ष० ।।छ।।

## वेसुसोऽपेक्षायाम् ।।२।३।११।।

**[वेसुसोऽपेक्षायाम्]** वा । इस् च उस् च = इसुस्, तस्य । अप 'ईक्षि दर्शने' (८८२ ) ईक्ष् । अपेक्षणमपेक्षा । 'क्तेटो गुरोर्व्यञ्जनात्' (५।३।१०६) अप्र० । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः, तस्याम् ।

**[सर्पिष्फेनायते]** सर्पिस् । द्वि०अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । फेन इवाऽऽचरति । 'क्यङ्' (३।४।२६) क्यङ्प्र० → य (?) ('फेनोष्म-बाष्प-धूमादुद्वमने' (३।४।३३) क्यङ्प्र०) । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[धनुष्खण्डयति]** धनुस् । द्वि० अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । 'खडुण् भेदे' (१६२८) खड् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० → इ । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[परमसर्पिष्करोति]** परमं च तत् सर्पिश्च = परमसर्पिः, अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । अनेन र०

→ ष० ।

**[परमधनुष्पतति]** परमं च तद् धनुश्च = परमधनुः, अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । अनेन र०→ष० ।

卐 **[परमसर्पि ≍ कुण्डम्]** परमं च तत् सर्पिश्च = परमसर्पिः । परमसर्पिषः कुण्डम् । 'रः कख-पफयोः ≍ क - ≍ पौ' (१।३।५) ≍ क । 'कुणत् शब्दोपकरणयोः' (१३६६) कुण् । 'कु-गु-हु-नी-कुणि-तुणि-पुणि-मुणि-शुन्यादिभ्यः कित्' (उणा० १७०) किद् डिप्र० । प्रथमा सि । 'अतः स्यमोऽम्'(१।४।५७)अम् ।।छ।।

**नैकार्थेऽक्रिये ।।२।३।१२।।**

**[एकार्थे]** एकोऽर्थो यस्य तद् = एकार्थम्, तस्मिन् ।

**[अक्रिये]** न विद्यते क्रिया प्रवृत्तिनिमित्तं यस्याऽसावक्रियः । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः । 'नञत्' (३।२।१२५) न० → अ०, तस्मिन् ।

**[सर्पि ≍ कालकम्]** सर्पिस् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । कालमेव = कालकम् । 'कालात्' (७।३।१९) कप्र० ।

**[यजु ≍ पीतकम्]** पीत । पीतेन रक्तं = पीतकम् । 'नील-पीताद-कम्' (६।२।४) कप्र० ।

**[सर्पिष्कुम्भे, सर्पि ≍ कुम्भे]** 'सर्पिस् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । कुम्भ सप्तमी ङि । 'वेसुसोऽपेक्षायाम्' (२।३।११) विकल्पे र० → ष० ।

**[धनुष्प्राप्तम्, धनुःप्राप्तम्]** 'आप्लृंट् व्याप्तौ' (१३०७) आप्, प्रपूर्व० । प्राप्यते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । 'वेसुसोऽपेक्षायाम्' (२।३।११) विकल्पे र० → ष० ।।छ।।

**समासेऽसमस्तस्य ।।२।३।१३।।**

**[समासे]** समसनं = समासस्तस्मिन् ।

**[असमस्तस्य]** समस्यते स्मेति समस्तं, न समस्तं = असमस्तम् । 'नञत्' (३।२।१२५) न० → अ०, तस्य ।

**[सर्पिष्कुम्भः]** सर्पिषः कुम्भः = सर्पिष्कुम्भः ।

**[सर्पिष्कृत्य]** सर्पिस् 'डुकृंग् करणे' (८८८ ) कृ । असर्पिषः करणं पूर्वम् । कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्वे च्विः' (७।२।१२६) च्विप्र० । 'अप्रयोगीत्' (१।१।३७) च्विलोपः । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[सर्पिष्पानम्]** सर्पिषः पानं = सर्पिष्पानम् । अत्र 'पानस्य भावकरणे' (२।३।६९) इत्यनेन णत्वे प्राप्ते 'षात् पदे' (२।३।९२) इत्यनेन निषेधः ।

**[सर्पिष्फलम्]** सर्पिषः फलम् ।

**[धनुष्कृत्य]** धनुस् । अधनुषः करणं पूर्वम् । 'कृ-भ्वस्तिभ्यां कर्मकर्तृभ्यां० (७।२।१२६) च्विप्र० । 'अप्रयोगीत्' (१।१।३७) च्विलोपः । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[धनुष्खण्डम्]** धनुषः खण्डम् ।

---

卐 बृहद्वृत्तौ - परमसर्पिःकुण्डम् ।

**[धनुष्पृष्ठम्]** धनुषः पृष्ठम् ।

**[धनुष्फलम्]** धनुषः फलम् ।

**[तिष्ठ्तु सर्पिः, पिब त्वमुदकम्]** गुणबाधनार्थं 'श्रौति-कृवु-धिवु०' (४।२।१०८) इत्यादिना पिबादेशः सस्वरः क्रियते ।

**[परमसर्पिःकुण्डम्]** परमं च तत् सर्पिश्च = परमसर्पिः, परमसर्पिषः कुण्डं = परमसर्पिःकुण्डम् ।

**[इन्द्रधनुःखण्डम्]** इन्द्रस्य धनुः = इन्द्रधनुः, इन्द्रधनुषः खण्डं = इन्द्रधनुःखण्डम् ।

**[बहुसर्पिष्कुण्डम्]** सर्पिषः कुण्डं = सर्पिष्कुण्डं, बहुसर्पिष्कुण्डं यत्र तत् ।

**[बहुसर्पिष्पात्रम्]** ईषदूनं सर्पिः = बहुसर्पिः । 'नाम्नः प्राग् बहुर्वा' (७।३।१२) बहुप्र० नाम्नः प्राक् । बहुसर्पिषः पात्रम् ।।छ।।

## भ्रातुष्पुत्र-कस्कादयः ।।२।३।१४।।

**[भ्रातुष्पुत्रकस्कादयः]** भ्रातुष्पुत्रश्च कस्कश्च = भ्रातुष्पुत्रकस्कौ, भ्रातुष्पुत्रकस्कावादी येषां ते । प्रथमा जस् ।

**[भ्रातुष्पुत्रः]** भ्रातुः पुत्रः = भ्रातुष्पुत्रः । 'ऋतां विद्या-योनिसंबन्धे' (३।२।३७) अलुक्(प्)समासः ।

**[परमसर्पिष्कुण्डिका]** 'कुणत् शब्दोपकरणयोः' (१३६६) कुण् । कुण्यते । 'पञ्चमाड्डः' (उणा० १७०) डप्र० । ह्रस्वं कुण्डं = कुण्डिका । 'कुत्सिताऽल्पा-ऽज्ञाते' (७।३।३३) कप्र० (?) ('ह्रस्वे' (७।३।४६) कप्प्र० —> क) । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ । परमं च तत् सर्पिश्च = परमसर्पिः, परमसर्पिषः कुण्डिका = परमसर्पिष्कुण्डिका ।

**[परमधनुष्कपालम्]** परमं च तद् धनुश्च = परमधनुः, परमधनुषः कपालं = परमधनुष्कपालम् ।

**[परमबर्हिष्पूलः]** परमाश्च ते बर्हिणश्च = परमबर्हिणः, परमबर्हिणां पूलः = परमबर्हिष्पूलः ।

**[परमयजुष्पात्रम्]** परमं च तद् यजुश्च = परमयजुः, परमयजुषः पात्रं = परमयजुष्पात्रम् ।

**[कस्कः]** किम् । प्रथमा सि । 'किमः कस्तसादौ च' (२।१।४०) कादेशः । 'सो रुः' (२।१।७२) र० । 'वीप्सायाम्' (७।४।८०) द्विर्वचनम् । अनेन र० —> स० ।

**[कौतस्कुतः]** कस्मात् = कुतः । 'किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित् तस्' (७।२।८९) तस्प्र० । 'इतोऽतः कुतः' (७।२।९०) निपातनम् । 'वीप्सायाम्' (७।४।८०) द्विर्वचनम् । कुतः कुतः आगतः । 'तत आगते' (६।३।१४९) अण्प्र० । द्विर्वचने कृते 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः कौ । 'प्रायोऽव्ययस्य' (७।४।६५) अस्लोपः ।

**[सद्यस्कालः]** सद्यस्तत्क्षणादेव कालो यस्याऽसौ ।

**[साद्यस्क्रः]** 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । सद्यः क्रयणं = सद्यस्क्रीः । क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तत्र भवः = साद्यस्क्रः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) ईलोपः ।।छ।।

## नाम्यन्तस्था-कवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि ।।२।३।१५।।

**[नाम्यन्तस्थाकवर्गात्]** नामी च अन्तस्थाश्च कवर्गश्च = 卐 नाम्यन्तस्थाकवर्गस्तस्मात् ।

**[पदान्तः]** पदस्य अन्तः = पदान्तस्तस्मिन्, सप्तमी ङि । +सूत्रत्वात् लोपः ।

P 卐 नाम्यन्तस्थाकवर्गम् । P + 'अव्ययस्य' (३।२।७) ङिलोपः ।

**[शिड्नान्तरे]** शिट् च नश्च = शिट्(ड्)नौ, शिट्(ड्)नाभ्यामन्तरं = शिट्(ड्)नान्तरम्, तस्मिन् ।

**[आशिषा]** 'शासूक् अनुशिष्टौ' (१०९५) शास्, आङ्पूर्व० । आशासनमाशीः । 'क्रुत्-संपदादिभ्यः क्विप्' (५।३।११४) क्विप्प्र० । 'आङः' (४।४।१२०) इस्० = शिस्० । तेन = आशिषा, तृतीया टा । अनेन ष० ।

卐 **[सिषेव]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिव् । परोक्षा णव् । 'द्विर्धातुः परोक्षा ङे प्राक्०' (४।१।१) द्विः । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'लघोरुपा०' (४।३।४) गु० ए ।

**[शिष्यते]** 'शासूक् अनुशिष्टौ' (१०९५) शास् । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'इसासः शासोऽङ्-व्यञ्जने' (४।४।११८) इस् ।

**[चिचीषति]** 'चिंग्ट् चयने' (१२९०) चि । चेतुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् ।

**[सुष्वाप]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वप् । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे प्राक्०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्वपेर्यङ्-ङे च' (४।१।८०) व० → उ० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[लुलूषति]** 'लूग्श् छेदने' (१५१९) लू । लवितुमिच्छति । 'तुमर्हादिच्छा०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् ।

**[अनैषीत्]** 'णींग् प्रापणे' (८८४ )णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । अद्यतनी दि । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'सः सिजस्तेर्दिस्योः' (४।३।६५) ईत् । 'सिचि परस्मै समानस्याऽङिति' (४।३।४४) वृ० नै । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अकौषीत्]** 'कुंक् शब्दे' (१०८६) कु । अद्यतनी दि । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'सः सिजस्तेर्दि-स्योः' (४।३।६५) ईत् । 'सिचि परस्मै समानस्याऽङिति' (४।३।४४) वृ० कौ । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[सर्पिष्मान्]** सर्पिर्विद्यते यस्य । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् ।

**[यजुष्मान्]** यजुर्विद्यते यस्य । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् ।

**[दोष्मान्]** दोर्विद्यते यस्याऽसौ । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । अनेन सर्वत्र षत्वम् ।

**[पुपूर्षति]** 'पृश् पालन-पूरणयोः' (१५३२) पृ । पर्तु(परितु)मिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'ओष्ठ्यादुर्' (४।४।११७) उर् । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[पिपक्षति]** 'डुपचींष् पाके' (८९२ ) पच् । पक्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'च-जः क-गम्' (२।१।८६) च० → क० । अनेन स० → ष० । क-षसंयोगे क्ष ।

**[अपाङ्षु]** 'अञ्चू गतौ च' (१०५) अञ्च्, अपपूर्व० । अपाञ्चन्तीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । सप्तमी सुप् । 'पदस्य' (२।१।८९) चलोपः । 'युजञ्च-क्रुञ्चो नो ङः' (२।१।७१) न० → ङ० ।

---

卐 मध्यमवृत्तौ - बृहद्वृत्तौ च सिषेवे ।

**[क्रुङ्षु]** 'क्रुञ्च गतौ' (१०१) क्रुञ्च् । क्रुञ्चतीति क्विप् । 'क्विप्' (५।१।१४८) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । सप्तमी सुप् । 'पदस्य' (२।१।८९) चलोपः । 'युजञ्च-क्रुञ्चो नो ङः' (२।१।७१) न० → ङ० ।

**[बह्वार्शीषि कुलानि]** बह्व्य आशिषो येषु कुलेषु तानि । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० → इ० । 'घुटां प्राक्' (१।४।६६) नोऽन्तः । 'न्स्महतोः' (१।४।८६) दीर्घः । अनेन षत्वम् ।

**[सिसाधयिषति]** राधं (१३०४) - 'साधंट् संसिद्धौ' (१३०५) साध् । साध्नुवन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । साधयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङ्श्च' (४।१।३) द्विर्वचनु । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) सा० → स० । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । अनेन षत्वम् ।।छ।।

## समासेऽग्नेः स्तुतः ।।२।३।१६।।

**[अग्निष्टुत्]** अग्नि 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) स्तु । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः' (न्यायसंग्रहः १/२९) स्तु । अग्निं स्तौतीति क्विप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । अनेन षत्वम् ।

**[अग्निष्टुतौ]** अग्निं स्तुतः इति क्विप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । अप्रयोगीत् (१।१।३७) क्विप्लोपः । प्रथमा औ । अनेन षत्वम् ।

**[अग्निष्टुतः]** अग्निं स्तुवन्तीति क्विप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा जस् । अनेन षत्वम् ।।छ।।

## ज्योतिरायुर्भ्यां च स्तोमस्य ।।२।३।१७।।

**[ज्योतिरायुर्भ्याम्]** ज्योतिस्-आयुस् । ज्योतिश्च आयुश्च = ज्योतिरायुषौ, ताभ्याम् ।

**[ज्योतिःष्टोमः]** ज्योतिषां स्तोमः ।

**[आयुःष्टोमः]** आयुषां स्तोमः ।

**[अग्निष्टोमः]** अग्नीनां स्तोमः । अनेन सर्वत्र षत्वम्

**[ज्योतिः स्तोमं दर्शयति]** 'दृशृं प्रेक्षणे' (४९५) दृश् । पश्यन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० → इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । ।।छ।।

## मातृ-पितुः स्वसुः ।।२।३।१८।।

**[मातृपितुः]** माता च पिता च = मातृपितृ, तस्मात् । 'ऋतो डुर्' (१।४।३७) डुर् → उर् ।

**[स्वसुः]** 'असूच् क्षेपणे' (१२२१) अस्, सुपूर्व० । सुष्ठु अस्यति - क्षिपति भ्रातृजाया । 'सोरसेः' (उणा० ८५३) ऋप्र०, तस्य ।

**[मातृष्वसा]** मातृ-स्वसृ । मातुः स्वसा । प्रथमा सि । 'ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) डा०→आ० । 'डित्यन्त्यस्वरादेः' (२।१।११४) ऋलोपः ।

**[पितृष्वसा]** पितृ-स्वसृ । पितुः स्वसा । प्रथमा सि । 'ऋदुशनस् पुरुदंशो०' (१।४।८४) डा०→आ० ।

'डित्यन्त्यस्वरादेः' (२।१।११४) ऋलोपः ॥छ॥

**अलुपि वा** ॥२।३।१९॥

**[अलुपि]** न विद्यते स्यादीनां लुप् यत्र सः = अलुप् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[मातुःष्वसा, मातुःस्वसा]** मातुः स्वसा । 'स्वसृ-पत्योर्वा' (३।२।३८) अलुप्समासः ।

**[पितुःष्वसा, पितुःस्वसा]** पितुः स्वसा ॥छ॥

**नि-नद्याः स्नातेः कौशले** ॥२।३।२०॥

**[निनद्याः]** निश्च नदी च = निनदी, तस्याः ।

**[कौशले]** कुशल । 卐 कुशलस्य, भावः = कौशलम् । 'युवादेरण्' (७।१।६७) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्मिन् ।

**[निष्णः कटकरणे]** नि 'ष्णांक् शौचे' (१०६४)ष्णा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्ना । निस्नातीति । 'उपसर्गादातो डोऽश्यः' (५।१।५६) डप्र० → अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

**[निष्णातः कटकरणे]** निस्नाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ।

**[नदीष्णः प्रतरणे]** नदीं(द्यां) स्नातीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० । 'इडेत् पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । प्रतीर्यते इति प्रतरणम् । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[नदीष्णातः प्रतरणे]** नदीं(द्यां) स्नाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त ।

**[यः स्रोतसा ह्रियते]** इं (११) - दुं (१२) - द्रुं (१३) - शुं (१४) - 'स्रुं गतौ' (१५) स्रु । स्रवतीति । 'स्रुरीभ्यां तस्' (उणा० ९७८) तस्प्र० । 'नामिनो गुणो०' (४।३।१) गु० ओ, तेन । 'हृंग् हरणे' (८८५) हृ । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'रिः श-क्या-ऽऽशीर्ये' (४।३।११०) रि = ह्रि ॥छ॥

**प्रतेः स्नातस्य सूत्रे** ॥२।३।२१॥

**[सूत्रे]** 卐卐 'षूङौच् प्राणिप्रसवे' (१२४२) षू । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सू । सूयतेऽर्थानिति सूत्रम् । 'सू-मू-खन्युषिभ्यः कित्' (उणा० ४४९) कित् त्रट्प्र० → त्र, तस्मिन् ।

**[प्रतिष्णातं सूत्रम्]** प्रतिस्नाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । अनेन षत्वम् ।

**[प्रतिस्नातृ सूत्रम्]** प्रतिस्नातीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ ।

**[प्रतिस्नायकं सूत्रम्]** प्रतिस्नातीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक । 'आत ऐः कृञ्चौ' (४।३।५३) आ० → ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ॥छ॥

**स्नानस्य नाम्नि** ॥२।३।२२॥

**[प्रतिष्णानं सूत्रमित्यर्थः]** प्रतिस्नातीति । 'नन्द्यादिभ्योऽनः' (५।१।५२) अनप्र० । प्रतिस्नात्यनेन । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र० । प्रतिस्नायते । 'भुजि-पत्यादिभ्यः कर्मा-ऽपादाने' (५।३।१२८) अनट्प्र० → अन । अनेन षत्वम् ॥छ॥

---

P 卐 कुशलस्य भावः कर्म वा ।

卐卐 उणादौ-'षूत् प्रेरणे' ।

**वेः स्त्रः ॥२।३।२३॥**

**[विष्टरो वृक्षः]** वि 'स्तॄग्श् आच्छादने' (१५२१) स्तॄ । विस्तृणातीति । 'अच्' (५।१।४९) अच्प्र० → अ । 'नामिनो गुणो०' (४।३।१) गु० अर् । अनेन स० → ष० ।

**[विष्टरमासनम्]** विस्तीर्यते इति । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० → अ । नामिनो गुणो० (४।३।१) गु० अर् । अनेन स० → ष० ।

**[विष्टारपङ्क्तिश्छन्दः]** विस्तीर्यते विष्टारः । 'छन्दोनाम्नि' (५।३।७०) घञ्प्र० → अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।

**[विस्तारः पटस्य]** विस्तरणं = विस्तारः । 'वेरशब्दे प्रथने' (५।३।६९) घञ्प्र० → अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् ।।छ।।

**अभिनिष्टानः ॥२।३।२४॥**

**[अभिनिष्टानः]** अभि-निभ्यां विशिष्टः स्तानः = अभिनिष्टानः ।

**[अभिनिष्टानो वर्णः]** 卐 अभिनिस् अग्रे 'तनूयी विस्तारे' (१४९९) तन् । अभि-निस्तन्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'व्यत्यये लुग् वा' (१।३।५६) रलोपोऽनेन निपातः ।।छ।।

**गवि-युधेः स्थिरस्य ॥२।३।२५॥**

**[गवियुधेः]** गविश्च युधिश्च, तस्य(?) । (तस्मात्) ।

**[गविष्ठिरः]** गवि स्थिरः । अनेन ष० । सूत्रनिर्देशाद् अलुप्समासः ।

**[युधिष्ठिरः]** युधि स्थिरः । 'अद्-व्यञ्जनात् सप्तम्या बहुलम्' (३।२।१८) अलुप्समासः । अनेन षत्वे 'तवर्गस्य श्चवर्ग०' (१।३।६०) थ० → ठ० ।।छ।।

**एत्यकः ॥२।३।२६॥**

**[एति]** एत् सप्तमी ङि ।

**[अकः]** न क् = अक्, तस्मात् ।

**[हरिषेणः]** हरि-सेना । हरिः सेनायां यस्य । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः । अनेन षत्वम् ।

**[श्रीषेणः]** श्रीः सेनायां यस्य । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । अनेन षत्वम् ।

**[वायुषेणः]** वायुः सेनायां यस्य । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । अनेन षत्वम् ।

**[मातृषेणः]** माता सेनायां यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । अनेन षत्वम् ।

**[हरिसिंहः]** हरिश्चासौ सिंहश्च ।

---

P 卐 'स्तन शब्दे' (३२३) स्तन् । अभि-निस्तन्यते । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० ।
मध्यमवृत्तौ - अभिनिः स्तन्यते । धातुपारायणे - श० म० न्यासानुसन्धाने - अभिनिस्तन्यते ।

**[विष्वक्सेनः]** 卐 विष्वक् सेनायां यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[शतभिषक्सेनः]** शतभिषक् सेनायां यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[सर्वसेनः]** सर्वा सेना यस्य । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[महासेनः]** महत्-सेना । महती सेना यस्याऽसौ । 'जातीयैकार्थेऽच्वेः' (३।२।७०) डाप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।।छ।।

**भादितो वा ।।२।३।२७।।**

**[भात्]** भ पञ्चमी ङसि ।

**[इतर्]** इत् पञ्चमी ङसि ।

**[वा]** वा प्रथमा सि ।

**[रोहिणिषेणः, रोहिणिसेनः]** रोहिणी सेनायां यस्याऽसौ । 'ङ्यापो बहुलं नाम्नि' (२।४।९९) ह्रस्वः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[रेवतिषेणः, रेवतिसेनः]** रेवती सेनायां यस्याऽसौ । 'ङ्यापो बहुलं नाम्नि' (२।४।९९) ह्रस्वः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[भरणिषेणः, भरणिसेनः]** भरणी सेनायां यस्याऽसौ । 'ङ्यापो बहुलं नाम्नि' (२।४।९९) ह्रस्वः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[पुनर्वसुषेणः]** पुनर्वसू सेनायां यस्याऽसौ । 'परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्' (३।२।४९) पुंवद्भावः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । 'एत्यकः' (२।३।२६) स० → ष० ।

**[शतभिषक्सेनः]** शतभिषक् सेनायां यस्याऽसौ ।।छ।।

**वि-कु-शमि-परेः स्थलस्य ।।२।३।२८।।**

**[विकुशमिपरेः]** विश्च कुश्च शमिश्च परिश्च = विकुशमिपरि, तस्मात् ।

**[स्थलस्य]** स्थल षष्ठी ङस् ।

**[विष्ठलम्]** विगतं वीनां वा पक्षिणां स्थलं = विष्ठलम् ।

**[कुष्ठलम्]** कुत्सितं कोः पृथिव्या वा स्थलं = कुष्ठलम् ।

**[शमिष्ठलम्]** शमीनां स्थलं = शमिष्ठलम् । 'ङ्यापो बहुलं नाम्नि' (२।४।९९) ह्रस्वः ।

**[परिष्ठलम्]** परिगतं स्थलं = परिष्ठलम् ।

**[भूमिस्थलम्]** भूम्याः भूमेः वा स्थलम् ।।छ।।

---

P 卐 विषु अञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अञ्चः' (२।४।३) ङीः । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अकारलोपः - पूर्वस्य दीर्घत्वम् । विषूची सेना यस्य । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । 'परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्' (३।२।४९) पुंवद्भावः । 'च-जः क-गम्' (२।१।८६) च० → क० । 'धुटस्तृतीयः' (२।१।७६) क० → ग० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग०→ क० । यद्वा विष्वक् सेना[यां] यस्य । विष्वक्शब्दोऽव्ययस्तदा ।

## कपेर्गोत्रे ।।२।३।२९।।

**[कपिष्ठलिः पुत्रः]** 卐 कपिती (रिति) स्थलं यस्याऽसौ । कपिष्ठलस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

गोत्रमिह **लौकिकं** गृह्यते । लोक । लोकेन ज्ञातम् । 'लोक-सर्वलोकाज्ज्ञाते' (६।४।१५७) इकण्प्र० → इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

## गो-ऽम्बा-ऽऽम्ब-सव्या-ऽप-द्वि-त्रि-भूम्यग्नि-शेकु-शङ्कु-क्वङ्गु-मञ्जि-पुञ्जि-बर्हिः-परमे-दिवेः स्थस्य ।।२।३।३०।।

**[गोऽम्बाऽऽम्बसव्याऽपद्वित्रिभूम्यग्निशेकुशङ्कुक्वङ्गुमञ्जिपुञ्जिबर्हिःपरमेदिवेः]** गोश्च अम्वा च आम्वश्च सव्यश्च अपश्च द्विश्च त्रिश्च भूमिश्च अग्निश्च शेकुश्च शङ्कुश्च कुश्च अङ्गुश्च मञ्जिश्च पुञ्जिश्च बर्हिश्च परम(मे)श्च दिविश्च = गोऽम्बाऽऽम्बसव्या-ऽपद्वित्रिभूम्यग्निशेकुशङ्कुक्वङ्गुमञ्जिपुञ्जिबर्हिःपरमेदिवि, तस्मात् ।

**[स्थस्य]** स्थ षष्ठी ङस् ।

**[गोष्ठम्]** गो स्था (२।२।२०) सूत्रवत् । + गावस्तिष्ठन्तीति । 'स्थाऽऽदिभ्यः कः' (५।३।८२) कप्र० → अ । 'इडेत् – पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः ।

**[अम्बष्ठः]** अम्बायां तिष्ठतीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० → अ । 'ङ्यापो वहुलं नाम्नि' (२।४।९९) ह्रस्वः । 'इडेत्० (४।३।९४) आलोपः ।

**[आम्बष्ठः]** अम्बायां भवः = आम्बः । 'भवे' (६।३।१२३) अण्प्र० । आम्वे - अपह्नवे तिष्ठतीति ।

**[सव्यष्ठः]** 'षूत् प्रेरणे' (१३३२) षू । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सू । सुवति दक्षिणभावम् । 'स्था-छा-मा-सा-सू-मन्यनि-कनि-षसि-पलि-कलि-शलि-शकीर्ष्य-सहि-बन्धिभ्यो यः' (उणा० ३५७) यप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'य्यक्ये' (१।२।२५) अव् । सव्ये तिष्ठतीति ।

**[अपष्ठः]** अपतिष्ठतीति । 'उपसर्गादातो डोऽश्यः' (५।१।५६) डप्र० → अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

**[द्विष्ठः]** द्वयोः तिष्ठतीति ।

**[त्रिष्ठः]** त्रिषु तिष्ठतीति ।

**[भूमिष्ठः]** भूमौ तिष्ठतीति ।

**[अग्निष्ठः]** अग्नौ तिष्ठतीति ।

**[शेकुष्ठः]** 'शीङ्क् स्वप्ने' (११०५) शी । शेते इति । 'कै-शी-शमि-रमिभ्यः कुः' (उणा० ७४९) कुप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ई० → ए० । शेकौ तिष्ठतीति ।

**[शङ्कुष्ठः]** 'शमू उपशमे' (१२३०) शम् । शाम्यतीति । 'कै-शी-शमि-रमिभ्यः कुः' (उणा० ७४९) कुप्र० । शङ्कौ तिष्ठतीति ।

**[कुष्ठः]** कौ = पृथिव्यां तिष्ठतीति ।

**[अङ्गुष्ठः]** 'अम गतौ' (३९२) अम् । अमति = गच्छति अंगभावः । 'फलि-वल्यमेर्गुः' (उणा० ७५८) गुप्र० ।

---

P 卐 कपेरिव स्थलं यस्याऽसौ ।

P + गावस्तिष्ठन्त्यस्मिन्निति ।

अङ्गौ तिष्ठतीति ।

**[मञ्जिष्ठः]** 'मञ्ज सौन्दर्ये च' (सौत्रधातुः २१) मञ्ज् । पदि-पठि-पचि-स्थलि-हलि-कलि-बलि-वलि-वल्लि-पल्लि-कटि-चटि-वटि-बधि-गाध्यर्चि-वन्दि-नन्द्यवि-वशि-वाशि-काशि-छर्दि-तन्त्रि-मन्त्रि-खण्डि-मण्डि-चण्डि-यत्यञ्जि-मस्यसि-वनि-ध्वनि-सनि-गमि-तमि-ग्रन्थि-श्रन्थि-जनि-मण्यादिभ्यः (उणा० ६०७) इप्र० । मञ्जौ तिष्ठतीति ।

**[पुञ्जिष्ठः]** 'पूङ् पवने' (६००) पू । 'पुवः पुन् च' (उणा० १२८) जक्प्र० → ज० - पुन् आदेशः । पुञ्ज इवाऽऽचरति । 'कर्तुः क्विप्०' (३।४।२५) क्विप्प्र० । पुञ्जतीति । 'स्वरेभ्य इः' (उणा० ६०६) इप्र० । पुञ्जौ तिष्ठतीति ।

**[बर्हिष्ठः]** बर्हिषि तिष्ठतीति । 'व्यत्यये लुग् वा' (१।३।५६) रलोपः ।

**[परमेष्ठः]** परमे = परमपदे तिष्ठतीति ।

**[दिविष्ठः]** दिवि = स्वर्गे तिष्ठतीति ।

'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) थ०→ठ० ॥छ॥

## निर्दुस्सोः सेध-सन्धि-साम्नाम् ॥२।३।३१॥

**[निर्दुस्सोः]** निश्च दुश्च सुश्च = निर्दुस्सुः, तस्मात् ।

**[सेधसन्धिसाम्नाम्]** सेधश्च सन्धिश्च साम च = सेधसन्धिसामानि, तेषाम् ।

**[निःषेधः]** 'षिधू गत्याम्' (३२०) षिध् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिध् । सेधनं = सेधः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । (१) निर्गतः सेधात् । 'प्रात्यव-परि-निरादयो गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः प्रथमाद्यन्तैः' (३।१।४७) समासः ।

**[दुःषेधः]** दुष्टः सेधः । 'दुर्निन्दा-कृच्छ्रे' (३।१।४३) समासः ।

**[सुषेधः]** शोभनः सेधः । 'सुः पूजायाम्' (३।१।४४) समासः ।

**[निःषन्धिः]** (२) निर्गतः सन्धिः ।

**[दुःषन्धिः]** दुष्टः सन्धिः ।

**[सुषन्धिः]** शोभनः सन्धिः ।

**[निःषाम]** (३) निर्गतं साम ।

**[दुःषाम]** दुष्टं साम ।

**[सुषाम]** शोभनं साम ।

अनेन सर्वत्र स०→ष० ॥छ॥

## प्रष्ठोऽग्रगे ॥२।३।३२॥

**[प्रष्ठोऽग्रगे]** प्रात् स्थः = प्रष्ठः । अग्रे गच्छतीति । 'नाम्नो गमः खड्-डौ च विहायसस्तु विहः' (५।१।१३१) डप्र० ।

**[प्रष्ठोऽग्रगामी]** प्र 'ष्ठां गतिनिवृत्तौ' (५ ) ष्ठा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । 'निमित्ताऽभावे

---

P (१) निश्चितः सेधः । P (२) निश्चितः सन्धिः । P (३) निश्चितं साम ।

नैमित्तिकस्याऽप्यभावः' (न्यायसं० १।२९) स्था । प्रकर्षेणाऽग्रे तिष्ठतीति । 卐 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० → अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) थ० → ठ० ।।छ।।

## भीरुष्ठानादयः ।।२।३।३३।।

**[भीरुष्ठानादयः]** भीरुष्ठानमादिर्येषां ते ।

**[भीरुष्ठानम्]** भीरूणां स्थानम् ।

**[अङ्गुलिषङ्गः]** अङ्गुलीनां सङ्गः ।

**[अङ्गुलिषङ्गा यवागूः]** । अङ्गुलीनां सङ्गो विद्यते यस्याः सा ।

**[सव्येष्ठ]** सव्ये तिष्ठतीति । 'सव्यात् स्थः' (उणा० ८५५) डिद् ऋप्र० । 'तत्पुरुषे कृति' (३।२।२०) सप्तम्यलुप् । प्रथमा सि । सव्येष्ठ = सारथिः ।

**[परमेष्ठी]** परमे पदे तिष्ठतीति । 'परमात् कित्' (उणा० ९२५) किद् इन्प्र० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । गणपाठसामर्थ्यादलुप् ।

**[गौरिषक्थम्]** गौर्या इव सक्थिनी यस्य । 'सक्थ्यक्ष्णः स्वाङ्गे' (७।३।१२६) टः । 'ङ्यापो बहुलं नाम्नि' (२।४।९९) ह्रस्वः ।

**[प्रतिष्णिका]** प्रतिस्नात्यस्यामिति । 'स्थाऽऽदिभ्यः कः' (५।३।८२) कप्र० → अ । यद्वा कुत्सिता प्रतिस्ना = प्रतिष्णिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र० → क । 'आत्' (२।४।१८) आप् । अस्याऽयत्-तत्-क्षिपकादी० (२।४।१११) इ ।

**[नौषेचिका]** 卐卐नावः सेचिकाम् ।

**[दुन्दुभिषेवणः]** +दुन्दुभेः सेवनां । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।।छ।।

## ह्रस्वान्नाम्नस्ति ।।२।३।३४।।

**[सर्पिष्टा]** सर्पिस् । सर्पिषो भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र० → त० । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । 'आत्' (२।४।१८) आप् ।

**[यजुष्टा]** यजुस् । यजुषो भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र० → त० । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । 'आत्' (२।४।१८) आप् ।

**[सर्पिष्ट्वम्]** सर्पिषो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० ।

**[यजुष्ट्वम्]** यजुषो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० ।

---

卐 श० म० न्यासानुसन्धाने - प्रतिष्ठते प्रष्ठः । 'उपसर्गादातो डोऽश्यः' (५।१।५६) डप्र०, न तु 'स्था- पा०' (५।१।१४२) इति कः, तस्य नामपूवाद्धातोर्विहितत्वात् ।

卐卐 मध्यमवृत्तौ - नावं सिञ्चतीति ।

\+ मध्यमवृत्तौ - दुन्दुभिं सेवते ।

**[सर्पिष्टः]** सर्पिषः = सर्पिष्टः ।卐 'आद्यादिभ्यः' (७।२।८४) तसुप्र० → तस् । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० ।

**[यजुष्टः]** यजुषः = यजुष्टः卐卐 'आद्यादिभ्यः' (७।२।८४) तसुप्र० → तस् । अनेन स० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० ।

**[निष्ट्यः]** निर् । निर्गतो वर्णाश्रमेभ्यः = निष्ट्यः । 'निसो गते' (६।३।१८) त्यच्प्र० → त्य । 'च-ट-ते स-द्वितीये' (१।३।७) स० । अनेन ष० ।

**[चतुष्टयः]** चतुर् । चतुर्णां वर्णानां समाहारः (?) (चत्वारोऽवयवा यस्य) । 'अवयवात् तयट्' (७।१।१५१) तयट्प्र० → तय । 'च-ट-ते स-द्वितीये' (१।३।७) र० → स० । अनेन स० → ष० ।

**[सर्पिष्टरम्]** द्वयोर्मध्ये प्रकृष्टं सर्पिः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० → तर । 'सो रुः' (२।१।७२) र० । 'च-ट-ते०' (१।३।७) स० । अनेन ष० ।

**[वपुष्टरम्]** वपुस् । द्वयोर्मध्ये प्रकृष्टं वपुः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० → तर । 'सो रुः' (२।१।७२) स० → र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० । अनेन ष० ।

**[सर्पिष्टमम्]** प्रकृष्टं सर्पिः = सर्पिष्टमम् । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । 'सो रुः' (२।१।७२) स० → र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० । अनेन स० → ष० ।

**[वपुष्टमम्]** प्रकृष्टं वपुः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । 'सो रुः' (२।१।७२) स० → र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० । अनेन स० → ष० ।

**[गीस्त्वम्]** गिरो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० ।

**[धूस्त्वम्]** धुरो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० ।

**[गीस्तरा]** द्वयोर्मध्ये प्रकृष्टा गीः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० → तर । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[धूस्तमा]** प्रकृष्टा धूः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । 'च-ट-ते सद्वितीये' (१।३।७) र०→स० ।

**[उच्चैस्तराम्]** उच्चैस् । उच्चैरेव = उच्चैस्तराम् । 'क्वचित् स्वार्थे' (७।३।७) तरप्प्र० → तर । 'किं-त्याद्येऽव्ययादसत्त्वे तयोरन्तस्याऽऽम्' (७।३।८) आम् ।

**[उच्चैस्तमाम्]** प्रकृष्टमुच्चैरुच्चैस्तमाम् । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । किं-त्याद्येऽव्ययादसत्त्वे० (७।३।८) आम् ।

**[तेजस्ता]** तेजसो भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र० → त । 'आत्' (२।४।१८) आप् । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[तेजस्त्वम्]** तेजसो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[पयस्ता]** पयसो भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र० → त । 'आत्' (२।४।१८) आप् । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

---

卐 – 卐卐 मध्यमवृत्तौ - बृहद्वृत्तौ - श० म० न्या० 'अहीय-रुहोऽपादाने' (७।२।८८) तसुप्र० → तस् ।

**[पयस्त्वम्]** पयसो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[तेजस्तरम्]** द्वयोर्मध्ये प्रकृष्टं तेजः = तेजस्तरम् । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र० । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[तेजस्तमम्]** प्रकृष्टं तेजस्तेजस्तमम् । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० । 'सो रुः' (२।१।७२) र० । 'च-ट-ते सद्वितीये' (१।३।७) र० → स० ।

**[भिन्द्युस्तराम्]** 'भिदृंपी विदारणे' (१४७७) भिद् । सप्तमी युस् । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० →न । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । तराम् प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[सर्पिस्तरः]** सर्पिस् 'तृ प्लवन-तरणयोः' (२७) तृ । सर्पिषस्तरणम् । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० → अ । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

**[सर्पिस्तमः]** प्रकृष्टं सर्पिः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र० → तम । सर्पिषस्तमनं = सर्पिस्तमः ।

**[सर्पिस्साद् भवति]** सर्पिस् अग्रे भवति । सर्पिषः आयत्तं भवति । 'व्याप्तौ स्सात्' (७।२।१३०) सात्प्र० । 'सो रुः' (२।१।७२) र० । 'श-ष-से श-ष-सं वा' (१।३।६) र० → स० ।।छ।।

**निसस्तपेऽनासेवायाम् ।।२।३।३५।।**

**[निसस्तपेऽनासेवायाम्]** निस् षष्ठी ङस् । तप सप्तमी ङि । न आसेवा = अनासेवा । 'अन् स्वरे' (३।२।१२९) अन्, तस्याम् ।

**[निष्टपति सुवर्णम्]** निस् 'तपं सन्तापे' (३३३) तप् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । अनेन स० → ष० ।

**["निष्टप्तं रक्षो निष्टप्ता अरातयः"]** निस्तप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । प्रथमा जस् ।

**[निरतपत्]** निस्-तप् । ह्यस्तनी दिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[निस्तातप्ति, निस्तातपीति]** निस्-तप् । पुनरर्थे आसेवा स्यात्, अत्र भृशं निस्तपतीति वाक्यं कार्यम्, 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्वित्वम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत्→ई । वर्त्त० तिव् ।।छ।।

**घस्-वसः ।।२।३।३६।।**

**[घस्वसः]** घस् च वस् च = घस्वस्, तस्य ।

**[जक्षतुः]** 'घस्लृं अदने' (५४४) घस् । परोक्षा अतुस् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) घ० → ग० । 'ग-होर्जः' (४।१।४०) ग०→ज० । 'गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक्' (४।२।४४) अलोपः । 'अघोषे प्रथमोऽशिटः' (१।३।५०) घ०→क० । अनेन स०→ष० । क-षसंयोगे क्ष ।

**[जक्षुः]** 'घस्लृं अदने' (५४४ ) घस् । परोक्षा उस् । शेषं 'जक्षतुः' वत् ।

**[जक्षिवान्]** 'घस्लृं अदने' (५४४ ) घस् । जघास । 'तत्र क्वसु-कानौ तद्वत्' (५।२।२०) क्वसुप्र० । 'घसेकस्वराऽऽतः क्वसोः' (४।४।८२) इट् ।

**[ऊषतुः, ऊषुः]** 'वसं निवासे' (९९९) वस् । परोक्षा अतुस्-उस् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जन०' (४।१।४४) अनादिव्यञ्जनलोपः । 'समानानां० (१।२।१) दीर्घः । अनेन ।

**[उषितः]** 'वसं निवासे' (९९९) वस् । वसति स्म । 'श्लिष-शीङ्-स्थाऽऽस-वस-जन-रुह-जॄ-भजेः क्तः' (५।१।९) क्तप्र० । 'क्षुध-वसस्तेषाम्' (४।४।४३) इट् । 'यजादि-वचेः किति' (४।१।७९) य्वृद् व०→उ० । अनेन ।

**[उषितवान्]** वस् । वसति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०→तवत् । शेषं 'उषितः' वत् ।

**[बहूंषि]** बहु-वस् । बहवो जना वसन्ति येषु तानि क्विप् । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०→इ० । 'धुटां प्राक्' (१।४।६६) नोऽन्तः । 'न्स्महतोः' (१।४।८६) दीर्घः ।

**[जघास]** 'घस्लृं अदने' (५४४ ) घस् । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽ-नादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) घ०→ग० । 'ग-होर्जः' (४।१।४०) ग०→ज० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।।छ।।

**णि-स्तोरेवाऽस्वद-स्विद-सहः षणि ॥२।३।३७॥**

**[णिस्तोः]** णिश्च स्तुश्च = णिस्तु, तस्य ।

**[अस्वदस्विदसहः]** स्वदश्च स्विदश्च सह् च = स्वदस्विदसह्, न स्वदस्विदसह् = अस्वदस्विदसह्, तस्य ।

**[षणि]** षत्वभूतः सन् = षण्, तस्मिन् ।

**[सिषेवयिषति]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिव् । सीव्यन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । सेवयितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) सेव् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादि-व्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । अनेन ष० ।

**[सुष्वापयिषति]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्टयै०' (२।३।९८) स्वप् । स्वपन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । स्वापयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्वपो णावुः' (४।१।६२) उ = सु । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नामिनो गुणो०' (४।३।१) ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[सिषेधयिषति]** 'षिधू गत्याम्' (३२० ) षिध् । 'षः सोऽष्टयै०' (२।३।९८) सिध् । सेधन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र० → इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । सेधयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।३।१) ह्रस्वत्वम् । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[तुष्टूषति]** 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्टयै०' (२।३।९८) स्तु । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः'

(न्यायसं० १।२९) स्तु । स्तवितु(स्तोतु)मिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् ।

**[सिस्वादयिषति]** 'ष्वदि आस्वादने' (७२९) ष्वद् । 'षः सोऽष्टयै०' (२।३।९८) स्वद् । स्वदमानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । स्वादयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनु । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितो०' (४।४।३२) इट्→इ० । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[सिस्वेदयिषति]** 'ष्विदांच् गात्रप्रक्षरणे' (११७८) ष्विद् । 'षः सोऽष्टयै०' (२।३।९८) स्विद् । स्वेदमानं प्रयुङ्क्ते । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र० → इ । 'लघोरुपा०' (४।३।४) गु० ए । स्वेदयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विः । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[सिसाहयिषति]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्टयै०' (२।३।९८) सह् । सहमानं प्रयुङ्क्ते । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । साहयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[सुसूषति]** 'षुंगट् अभिषवे' (१२८६) षु । 'षः सोऽष्टयै०' (२।३।९८) सु । सोतुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[सिसिक्षति]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै०' (२।३।९८) सिच् । सेक्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'च-जः क-गम्' (२।१।८६) च०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । क-षसंयोगे क्ष ।

**[सिसेविषति]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्टयै०' (२।३।९८) सिव् । सेवितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

**[असीषिचत्]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै०' (२।३।९८) सिच् । सिच(ञ्च)मानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । अद्यतनी दि→त्० । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र० → अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'उपान्त्यस्याऽसमानलोपि-शास्वृदितो ङे' (४।२।३५) ह्रस्वत्वम् । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातो०' (४।४।२९) अट् ।

**[तुष्टाव]** 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्टयै०' (२।३।९८) स्तु । 'निमित्ताऽभावे०' (न्यायसं० १।२९) स्तु । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[सिषेव]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्ट्यै०' (२।३।९८) सिव् । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

**[सुष्वाप]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वप् । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'भू-स्वपोरदुतौ' (४।१।७०) उ० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[सुषुप्सति]** स्वप् । स्वपितु(प्तु)मिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्वपेर्यङ्-ङे च' (४।१।८०) य्वृत् व०→उ० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः ।

**[तिष्ठासति]** 'ष्ठां गतिनिवृत्तौ' (५ ) ष्ठा । 'षः सोऽष्ट्यै०' (२।३।९८) स्था । 'निमित्ताऽभावे०' (न्यायसंग्रहः १।२९) स्था । स्थातुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'सन्यस्य' (४।१।५९) इ । 'द्वितीय०' (४।१।४२) थि०→ति० ।

**[व्यतिसुषुपिषे]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वप्, व्यतिपूर्व० । परोक्षा से । 'भू-स्वपोरदुतो' (४।१।७०) व०→उ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । नाम्यन्तस्था० (२।३।१५) स०→ष० ।

**[प्रतीषिषति]** 卐 'इंङ्क् अध्ययने' (११०४) इ, प्रतिपूर्व० । प्रत्येतुमिच्छति । तुमर्हादिच्छायां० (३।४।२१) सन्प्र० । प्रतीषितुमिच्छति । सन्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'अतः' (४।३।८२) अलोपः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अधीषिषति]** 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अध्येतुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । अधीषितुमिच्छति । सन्प्र० । 'स्ताद्यशि०' (४।४।३२) इट् । 'अतः' (४।३।८२) अलोपः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[सोषुपिषते]** स्वप् । भृशं पुनः पुनर्वा स्वपिति । 'व्यञ्जनादेरेकस्वराद् भृशा-ऽऽभीक्ष्ण्ये यङ् वा' (३।४।९) यङ्प्र० । 'स्वपेर्यङ् ङे च' (४।१।८०) य्वृत् व०→उ० । 'सन्-यङश्च' (४।१।३) द्वित्वम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० सो । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । सोषुपितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । वर्त्त० ते ।

**[सेषिविषते]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिव् । भृशं पुनः पुनर्वा सीव्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङ्श्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० सि०→से० । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । सेषिवितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । वर्त्त० ते ।।छ।।

**सञ्जेर्वा** ।।२।३।३८।।

इकारान्तनिर्देशादिति - अत एवात्र प्रकरणे इकार उच्चारणार्थो न क्वचिदपि विहितः ।

---

卐 श० म० न्या० सं० -

प्रतीषिषतीति - अत्र 'इंण्क् गतौ' इति लिख्यते, तस्य च ज्ञानार्थत्वात् 'सनीङश्च' (४।४।२५) इति न गम्वादेशः ।

'इंक् स्मरणे', 'इंङ्क अध्ययने' इत्यनयोस्तु अज्ञान इति विशेषणं नासम्भवात्, अतोऽनयोर्गम्वादेशः प्राप्नोतीत्येतौ न लिख्येते, 'इंण्क् गतौ' इत्यस्याप्यज्ञानार्थत्वविवक्षायामादेशप्राप्तिः ।

'इं' इत्यस्य तु ज्ञानार्थत्वविवक्षायामविवक्षायामपि नादेशः ।

**[सिषञ्जयिषति, सिसञ्जयिषति]** 'षञ्जं सङ्गे' (१७३) षञ्ज् । 'षः सोऽष्ट्यै०' (२।३।९८) सञ्ज् । सजन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । सञ्जयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।।छ।।

## उपसर्गात् सुग्-सुव-सो-स्तु-स्तुभोऽट्यप्यद्वित्वे ।।२।३।३९।।

**[उपसर्गात्]** उपसर्ग पञ्चमी ङसि ।

**[सुग्सुवसोस्तुस्तुभः]** सुग् च सुवश्च सोश्च स्तुश्च स्तुभ् च = सुग्सुवसोस्तुस्तुभ्, तस्य ।

**[अद्वित्वे]** न द्वित्वं = अद्वित्वम् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[अभिषुणोति]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सु, अभिपूर्व० । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'उ-श्नोः' (४।३।२) गु० ओ । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० ।

**[परिषुणोति]** परि-सु । वर्त्त० तिव् । शेषं 'अभिषुणोति' वत् ।

**[अभिषावयति]** अभिषुण्वन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२३) आव् ।

**[परिषावयति]** परिषुण्वन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अग्रे 'अभिषावयति'वत् ।

**[अभ्यषुणोत्]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, अभिपूर्व० । ह्यस्तनी दिव्→त् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'उ-श्नोः' (४।३।२) गु० ओ । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यषुणोत्]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, परिपूर्व० । ह्यस्तनी दिव्→त् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'उ-श्नोः' (४।३।२) गु० ओ । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिसौति]** 'षुंक् प्रसवैश्वर्ययोः' (१०७८) षु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सु, अभिपूर्व० । वर्त्त० तिव् । 'उत और्विति व्यञ्जनेऽद्वेः' (४।३।५९) औ = सौ ।

**[अभिसवति]** 'सुं प्रसवैश्वर्ययोः' (१७) सु । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[अभिषुवति]** 'षूत् प्रेरणे' (१३३२) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, अभिपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र० → अ । 'धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये' (२।१।५०) उव् ।

**[परिषुवति]** 'षूत् प्रेरणे' (१३३२) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, परिपूर्व० । शेषं 'अभिषुवति' वत् ।

**[अभ्यषुवत्]** 'षूत् प्रेरणे' (१३३२) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, अभिपूर्व० । ह्यस्तनी दिव्→त् । 'तुदादेः शः' (३।४।८१) शप्र०→अ । 'धातोरिवर्णोवर्णस्येयुव्०' (२।१।५०) उव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यषुवत्]** सू, परिपूर्व० । ह्यस्तनी दिव्→त् । शेषं 'अभ्यषुवत्' वत् ।

**[अभिसूते]** 'षूङैक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, अभिपूर्व० । वर्त्त० ते ।

**[अभिसूयते]** 'षूङौच् प्राणिप्रसवे' (११४२) षू । 'षः सोऽष्ट्यै०' (२।३।९८) सू, अभिपूर्व० । वर्त्त० ते । 'दिवादेः

श्यः' (३।४।७२) श्यप्र०→य ।

**[अभिष्यति]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, अभिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य । 'ओतः श्ये' (४।२।१०३) ओलोपः ।

**[परिष्यति]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, परिपूर्व० । शेषं 'अभिष्यति' वत् ।

**[अभ्यष्यत्]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, अभिपूर्व० । ह्यस्तनी दिव्→त् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य । 'ओतः श्ये' (४।२।१०३) ओलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यष्यत्]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, परिपूर्व० । ह्यस्तनी दिव्→त् । शेषं 'अभ्यष्यत्' वत्

**[अभिष्टौति]** 'ष्टुंगक् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्ट्यै०' (२।३।९८) स्तु । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः' (न्यायसं० १।२९) स्तु, अभिपूर्व० । वर्त्त० तिव् । 'उत औविति व्यञ्जनेऽद्वेः' (४।३।५९) औ । अनेन स०→ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०→ट० ।

**[परिष्टौति]** स्तु, परिपूर्व० । वर्त्त० तिव् । शेषं 'अभिष्टौति' वत् ।

**[सुष्टुतम्]** सुष्ठु अतिशयेन स्तूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[दुःष्टवम्]** दुःखेन स्तूयते । 'दुः-स्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थात् खल्' (५।३।१३९) खल्प्र०→अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[अभ्यष्टौत्]** स्तु, अभिपूर्व० । ह्यस्तनी दिव्→त । 'उत औविति व्यञ्जनेऽद्वेः' (४।३।५९) औ । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यष्टौत्]** स्तु, परिपूर्व० । ह्यस्तनी दिव् → त् । शेषं 'अभ्यष्टौत्' वत् ।

**[अभिष्टोभते]** ष्टभुङ् (७७९) - स्कभुङ् (७८०) - 'ष्टुभूङ् स्तम्भे' (७८१) ष्टुभ् । 'षः सोऽष्ट्यै०' (२।३।९८) स्तुभ्, अभिपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[परिष्टोभते]** स्तुभ्, परिपूर्व० । शेषं 'अभिष्टोभते' वत् ।

**[अभ्यष्टोभत]** स्तुभ्, अभिपूर्व० । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यष्टोभत]** स्तुभ्, परिपूर्व० । ह्यस्तनी त । शेषं 'अभ्यष्टोभत' वत् ।

**[सुस्तुतम्]** शोभनं स्तुतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[अभिस्तुतम्]** अतिशयेन स्तुतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त ।

**[अभिसावकीयति]** अभिसावकमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र० । 'क्यनि' (४।३।११२) ई । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभिसुसूषति]** 'षुंगट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सु, अभिपूर्व० । अभिषोतुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'सन्-

यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभ्यसुसूषत्]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, अभिपूर्व० । अभिषोतुमैच्छत् । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । ह्यस्तनी दिव्→त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[परिसुसूषति]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, परिपूर्व० । परिषोतुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत्वम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[पर्यसुसूषत्]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, परिपूर्व० । परिषोतुमैच्छत् । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः०' (४।१।१०४) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । ह्यस्तनी दिव्→त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिसिषासति]** 'षोंच् अन्तः(न्त)कर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, अभिपूर्व० । 'आत् सन्ध्यक्षरस्य' (४।२।१) आ = सा । अभिषातुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'सन्यस्य' (४।१।५९) इ । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[अभ्यसिषासत्]** 'षोंच् अन्तः(न्त)कर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो, अभिपूर्व० । 'आत् सन्ध्यक्षरस्य' (४।२।१) सा । अभिषातुमैच्छत् । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'सन्यस्य' (४।१।५९) इ । ह्यस्तनी दिव्→त् । 'कर्त्तर्यन०' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभ्यसूसवत्]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, अभिपूर्व० । अभिषुण्वन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'उपान्त्यस्याऽसमानलोपि-शास्वृदितो ङे' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिसुसाव]** अभि-सु । परोक्षा णव्→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[अभिसोसूयते]** सु । भृशं पुनः पुनर्वा अभिसुनोति । 'व्यञ्जनादेरेकस्वराद् भृशा-ऽऽभीक्ष्ण्ये यङ् वा' (३।४।९) यङ्प्र० → य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ओ । वर्त्त० ते ।

**[अभ्यसीसयत्]** 'षोंच् अन्तः(न्त)कर्मणि' (११५०) षो । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सो । 'आत् सन्ध्यक्षरस्य' (४।२।१) सा, अभिपूर्व० । अभिस्यन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'आत ऐः कृञ्जौ'

(४।३।५३) ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'असमानलोपे सन्वल्लघुनि ङे' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिसेसीयते]** सो, अभिपूर्व० । भृशं पुनः पुनर्वा अभिष्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'ईर्व्यञ्जने० (४।३।९७) ई । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ए । वर्त्त० ते । 'कर्त्तर्य०' (३।४।७१) शव् ।

**[अभिसिसासति]** सो, अभिपूर्व० । अभिषातुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'सन्यस्य' (४।१।५९) इ ।

**[अभितोस्तूयते]** 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्ट्यै०' (२।३।९८) स्तु । 'निमित्ताऽभावे०' (न्यायसं० १।२९) स्तु, अभिपूर्व० । भृशं पुनः पुनर्वा अभिष्टौति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । 'सन्-यङ्श्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ओ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[अभितुस्ताव]** स्तु, अभिपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[अभ्यतुस्तवत्]** स्तु, अभिपूर्व० । अभिष्टुवन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभितुस्तुभे]** 'ष्टुभुङ् स्तम्भे' (७८१) ष्टुभ् । 'षः सोऽष्ट्यै०' (२।३।९८) स्तुभ्, अभिपूर्व० । परोक्षा ए । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः ।

**[अभितोस्तुभ्यते]** स्तुभ्, अभिपूर्व० । भृशं पुनः पुनर्वा अभिष्टोभते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ओ । वर्त्त० ते ।

**[अभ्यतुस्तुभत्]** अभिस्तोभमानं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः०' (३।४।५८) ङप्र० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।।छ।।

**स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि ।।२।३।४०।।**

**[स्थासेनिसेधसिचसञ्जाम्]** स्थाश्च सेनिश्च सेधश्च सिचश्च सञ्ज् च = स्थासेनिसेधसिचसञ्जः, तेषाम् ।

**[अधिष्ठास्यति]** 'ष्ठां गतिनिवृत्तौ' (५ ) ष्ठा । 'षः सोऽष्ट्यै०' (२।३।९८) स्था । 'निमित्ताऽभावे०' (न्यायसंग्रह १।२९) स्था, अधिपूर्व० । भविष्यन्ती स्यति ।

**[प्रतिष्ठास्यति]** स्था, प्रतिपूर्व० । भविष्यन्ती स्यति ।

**[अधितष्ठौ]** स्था० अधिपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षाङे०' (४।१।१) स्था द्विर्वचनम् । 'अघोषे शिटः' (४।१।४५) सलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) थ०⟶त० । 'आतो णव औ' (४।२।१२०) औ । 'ऐदौत् सन्ध्यक्षरैः' (१।२।१२) औ । अनेन स०⟶ष० ।

**[प्रतितष्ठौ]** स्था० प्रतिपूर्व० । शेषं 'अधितष्ठौ' वत् ।

**[अध्यष्ठात्]** अधि-स्था । अद्यतनी दि⟶त् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'पिबैति-दा-भू-स्थः सिचो लुप् परस्मै न चेट्' (४।३।६६) सिज्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः । अनेन स०⟶ष० ।

**[अध्यष्ठास्यत्]** अधि-स्था । क्रियातिपत्तिः स्यत् । 'अड् धातोरादि०' (४।४।२९) अडागमः । अनेन स०⟶ष० ।

**[अभिषेणयति]** सेना अभिपूर्व० । सेनया अभियातीति । 'णिज्-बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र० । 'त्रन्त्यस्वरादेः' (७।४।४३) अन्त्यस्वरादिलोपः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[अभिषिषेणयिषति]** अभिषेणयितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) सेनयद्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नाम्यन्तस्था०' (२।३।१५) ष० पूर्वस्य । अनेन ष० तृतीयं (यः) ।

**[अभ्यषेणयत्]** अभिसेनि । ह्यस्तनी दिव्⟶त् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभ्यषिषेणयिषत्]** अभिषेणयितुमैच्छत् । 'तुमर्हादिच्छायां० (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । ह्यस्तनी दिव्⟶त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रतिषिषेधिषति]** 'षिधू गत्याम्' (३२०) षिध् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिध्, प्रतिपूर्व० । प्रतिषेधितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'नाम्यन्तस्था०' (२।३।१५) ष० ।

**[प्रत्यषेधत्]** सिध्, प्रतिपूर्व० । ह्यस्तनी दिव्⟶त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रत्यषिषेधिषत्]** प्रतिषेधितुमैच्छत् । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङ्श्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्ताद्यशितो०' (४।४।३२) इट्⟶इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'नाम्यन्तस्था०' (२।३।१५) ष० । ह्यस्तनी दिव⟶त् । 'कर्त्तर्यनद्भ्यः' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिषिञ्चति]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच्, अभिपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०⟶अ । 'मुचादि-तृफ-दृफ-गुफ०' (४।४।९९) नोऽन्तः ।

**[सुषिक्तं नाम किं तवात्र]** अभि(?)(सु)सिच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । अभि(?)(सु)सेचनं वा । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०⟶त । 'च-जः क-गम्' (२।१।८६) च०⟶क० ।

**[अभिषिषिक्षति]** अभि-सिच् । अभिषेक्तुमिच्छति । 'तुमर्हादिच्छा०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'च-जः क-गम्' (२।१।८६) च०—>क० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । क-षसंयोगे क्ष । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभ्यषिञ्चत्]** सिच्, अभिपूर्व० । ह्यस्तनी दिव् —> त् । 'तुदादेः शः' (३।४।८१) शप्र०—>अ । 'मुचादि-तृफ-दृफ-गुफ०' (४।४।९९) नोऽन्तः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभ्यषिषिक्षत्]** सिच्, अभिपूर्व० अभिषेक्तुमैच्छत् । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'च-जः क-गम्' (२।१।८६) च०—>क० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । क-षसंयोगे क्ष । ह्यस्तनी दिव्—>त् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'लुगस्यादे०' (२।१।११३) अलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिषजति]** 'षञ्जं सङ्गे' (१७३) षञ्ज् । 'षः सोऽष्ट्यै-ष्ठिव०' (२।३।९८) सञ्ज्, अभिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'दंश-सञ्जः शवि' (४।२।४९) नलोपः ।

**[अभिषषञ्ज]** सञ्ज्, अभिपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः ।

**[अभिषिषङ्क्षति]** सञ्ज्, अभिपूर्व० । अभिषङ्क्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'च-जः क-गम्' (२।१।८६) ज० —> ग० । 'अघोषे प्रथमो०' (१।३।५०) ग०—>क० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । क-षसंयोगे क्ष । 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१।३।३९) न०—>ङ० ।

**[अभ्यषिषङ्क्षत्]** सञ्ज्, अभिपूर्व० । अभिषङ्क्तुमैच्छत् । 'तुमर्हा०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विः । 'व्यञ्जन०' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'च-जः क-गम्' (२।१।८६) ज०—>ग० । 'अघोषे०' (१।३।५०) ग०—>क० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । 'म्नां धुड्० (१।३।३९) न०—>ङ० । ह्यस्तनी दिव्० ।

**[प्रतिष्ठापयति]** स्था, प्रतिपूर्व० । प्रतितिष्ठन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे, णिग्' (३।४।२०) णिग्प्र० । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[प्रतिषेधयति]** सिध्, प्रतिपूर्व० । प्रतिषेधन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे०' (३।४।२०) णिग्प्र०—>इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[अभिसिध्यति]** 'षिधूंच् संराद्धौ' (११८५) षिध् । 'षः सोऽष्ट्यै-ष्ठिव०' (२।३।९८) सिध्, अभिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०—>य ।

**[प्रतिषेषिधीति]** 'षिधू गत्याम्' (३२०) षिध् । 'षः सोऽष्ट्यै०' (२।३।९८) सिध्, प्रतिपूर्व० । भृशं पुनः पुनर्वा सेधति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ए । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्'

(४।३।६४) ईत् । 'द्व्युक्तोपान्त्यस्य शिति स्वरे' (४।३।१४) गुणाभावः ।।छ।।

**अङ प्रतिस्तब्ध-निस्तब्धे स्तम्भः ।।२।३।४१।।**

**[अङप्रतिस्तब्धनिस्तब्धे]** ङश्च प्रतिस्तब्धश्च निस्तब्धश्च = ङप्रतिस्तब्धनिस्तब्धम्, न ङप्रतिस्तब्धनिस्तब्धं = अङप्रतिस्तब्ध-निस्तब्धम् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[विष्टभ्नाति]** 'स्तम्भू स्तम्भे' (१९८५) स्तम्भ्, सूत्रो(सौत्र)धातुः, विपूर्व० । वर्त्त० तिव् । 'स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च' (३।४।७८) श्नाप्र०→ना । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । अनेन स०→ष० ।

**[प्रतिष्टभ्नाति]** स्तम्भ्, प्रतिपूर्व० । शेषं 'विष्टभ्नाति' वत् ।

**[वितष्टम्भ]** स्तम्भ्, विपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः ।

**[प्रतितष्टम्भ]** स्तम्भ्, प्रतिपूर्व० । शेषं 'वितष्टम्भ' वत् ।

**[प्रतिताष्टभ्यते]** प्रतिस्तम्भ् । भृशं पुनः पुनर्वा प्रतिष्टभ्नाति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादे०' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभितिष्टम्भिषति]** अभिस्तम्भ् । अभिस्तम्भितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[व्यष्टभ्नात्]** स्तम्भ्, विपूर्व० । ह्यस्तनी दिव्→त् । 'स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च' (३।४।६५) श्नाप्र० → ना । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रत्यष्टभ्नात्]** स्तम्भ्, प्रतिपूर्व० । ह्यस्तनी दिव् → त् । शेषं 'व्यष्टभ्नात्' वत् ।

**[व्यतस्तम्भत्]** स्तम्भ्, विपूर्व० । विष्टभ्नन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'आद्योऽश एकस्वरः' (४।१।२) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'णेरनिटि (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रत्यतस्तम्भत्]** प्रतिष्टभ्नन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । शेषं पूर्वस्येव साध्यः ।

**[प्रतिस्तब्धः]** स्तम्भ्, प्रतिपूर्व० । प्रतिष्टभ्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'वेटोऽपतः' (४।४।६२) इड् निषेधः । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अधश्चतुर्थात् त-थोर्धः' (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) भ० → ब० । प्रथमा सि ।

**[निस्तब्धः]** स्तम्भ्, निपूर्व० । निष्टभ्यते स्म । शेषं 'प्रतिस्तब्धः' वत् ।।छ।।

**अवाच्चाश्रयोर्जाविदूरे ।।२।३।४२।।**

**[अवात्]** अव पञ्चमी ङसि ।

[च] च प्रथमा सि ।

[आश्रयोर्जाविदूरे] आश्रयश्च卐 ऊर्जा च अविदूरं च = आश्रयोर्जाविदूरं, तस्मिन् ।

[दुर्गमवष्टभ्नाति] अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । दुःखेन गम्यतेऽस्मिन्निति । 'सुग-दुर्गमाधारे' (५।१।१३२) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अम्लोपः । स्तम्भ्, अवपूर्व० । वर्त्त० तिव् । 'स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च' (३।४।६५) श्नाप्र०→ना । 'नो व्यञ्जस्याऽनुदितः' (४।२।४५) नलोपः । अनेन स०→ष० ।

[दुर्गमवष्टभ्यास्ते] अवस्तम्भनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० → त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप्→य । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः ।

[अवतष्टम्भ दुर्गम्] स्तम्भ्, अवपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षाङे०' (४।१।१) स्तम्भ् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः ।

[दुर्गमवाष्टभ्नात्] स्तम्भ्, अवपूर्व० । ह्यस्तनी दिव्→त् । 'स्तम्भू-स्तुम्भू-स्कम्भू० (३।४।६५) श्नाप्र०→ना । 'नो व्यञ्जनस्याऽनु०' (४।२।४५) नलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

[अहो ! वृषलस्यावष्टम्भः] अवस्तम्भनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० → अ ।

[अवष्टब्धो रिपुः शूरेण] अवष्टभ्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अधश्चतुर्थात् तथोर्धः । (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) भ०→ब० ।

[अवष्टब्धा शरत्] 卐卐अवष्टभ्यते । क्तप्र० । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'आत्' (२।४।१८) आप् ।

[अवष्टब्धा(धे) सेना(ने)] अवष्टभ्नीत(:) स्म । +क्तप्र० । 'आत्' (२।४।१८) आप् । औ । 'औता' (१।४।२०) ए ।

[प्रस्तब्धः] प्रष्टभ्यते स्म । क्तप्र० → त ।

[उपष्टम्भः] उपष्टम्भनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ ।

[उपष्टम्भकः] उपष्टभ्नातीति । णक-तृचौ (५।१।४८) णकप्र०→अक ।

[उपष्टब्धः] उपष्टभ्यते स्म । क्तप्र०→त ।

[अवस्तब्धो वृषलः शीतेन] अवस्तब्धो वृषलः - सङ्कुचित इत्यर्थः ।

[अवातस्तम्भत्] अवाष्टम्भीत् कश्चित् तं अवष्टभ्नन्तमन्यः प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षाङे०' (४।१।१) स्तम्भ् द्विर्वचनम् । 'व्यञ्जनस्याऽना०' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'णेरनिटि' (४।३।८३) णिग्लोपः ॥छ॥

## व्यवात् स्वनोऽशने ॥२।३।४३॥

[व्यवात्] विश्च अवश्च = व्यवम्, तस्मात् ।

---

P 卐 ऊर्जश्च ।

P 卐卐 अवष्टभ्नाति स्म । 'गत्यर्था-ऽकर्मक०' (५।१।११) क्तप्र० ।

P + 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० ।

**[अशने]** अश्यतेऽशनम् । 'भुजि-पत्यादिभ्यः कर्मा-ऽपादाने' (५।३।१२८) अनट्प्र० → अन, तस्मिन् ।

**[विष्वणति]** स्तन (३२३) - धन (३२४) - ध्वन (३२५) - चन (३२६) - 'स्वन शब्दे' (३२७), स्वन्, विपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० ।

**[अवष्वणति]** स्वन्, अवपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० ।

**[विषष्वाण]** स्वन्, विपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[अवषष्वाण]** स्वन्, अवपूर्व० । परोक्षा णव् । शेषं 'विषष्वाण' वत् ।

**[विषिष्वणिषति]** स्तन्, विपूर्व० । विष्वणितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽना०' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'स्ताद्यशितो०' (४।४।३२) इट्→इ ।

**[अवषिष्वणिषति]** स्वन्, अवपूर्व० । अवष्वणितुमिच्छति । शेषं 'विषिष्वणिषति' वत् ।

**[व्यषिष्वणत्]** स्वन शब्दे (३२७) स्वन्, विपूर्व० । विष्वणन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे सन्वल्लघुनि ङे' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातो०' (४।४।२९) अट् ।

**[अवाषिष्वणत्]** स्वन्, अवपूर्व० । अवष्वणन्तं प्रायुक्त । शेषं 'व्यषिष्वणत्' वत् ।

**[अत्यसिस्वनत्]** स्वन्, अतिपूर्व० । अतिस्वनन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र० । 'द्विर्धातुः परोक्षा - ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे०' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि शास्वृदितो ङे' (४।२।३५) ह्रस्वः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।।छ।।

**सदोऽप्रतेः परोक्षायां त्वादेः** ।।२।३।४४।।

**[अप्रतेः]** न प्रति = अप्रति, तस्मात् ।

**[निषीदति]** 'षद्लृं विशरण-गत्यवसादनेषु' (९६६) षद् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सद्, निपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) सीद् । अनेन स०→ष० ।

**[निषाषद्यते]** सद्, निपूर्व० । 卐 भृशं पुनः पुनर्वा निषीदति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० → य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादे०' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । अनेन स०→ष० ।

**[विषाषद्यते]** सद्, विपूर्व० । भृशं पुनः पुनर्वा विषीदति । शेषं 'निषाषद्यते' वत् ।

**[निषिषत्सति]** सद्, निपूर्व० । निषत्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द० → त० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

---

卐 श० म० न्यासानुसन्धाने - गर्हितं निषीदति । 'गृ-लुप०' (३।४।१२) यङ्प्र० ।

**[न्यषीदत्]** सद्, निपूर्व० । ह्यस्तनी दिव्—>त् । 'कर्त्तर्य०' (३।४।७१) शव् । 'श्रोति-कृवु-धिवु०' (४।२।१०८) सीद् । 'अड् धातोरादि०' (४।४।२९) अट् ।

**[व्यषीदत्]** सद्, विपूर्व० । ह्यस्तनी दिव्—>त् । शेषं 'न्यषीदत्' वत् ।

**[निषसाद]** सद्, निपूर्व० । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[विषसाद]** सद्, विपूर्व० । परोक्षा णव् । शेषं 'निषसाद' वत् ।

**[प्रत्यसीषदत्]** सद्, प्रतिपूर्व० ! प्रतिषीदन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०—>इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि—>त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०—>अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे०' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[प्रत्यसीसदत्]** सद्, प्रतिपूर्व० । प्रतिसीदन्तं प्रायुक्त । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र०—>इ । अद्यतनी दि—>त् । 'णि-श्र-द्रु-स्रु०' (३।४।५८) ङप्र०—>अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे०' (४।१।६३) इ । 'उपान्त्यस्या०' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[प्रतिसिसत्सति]** सद्, प्रतिपूर्व० । प्रतिसत्तुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द०—>त० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।।छ।।

**स्वञ्जश्च ।।२।३।४५।।**

**[अभिष्वजते, परिष्वजते, प्रतिष्वजते]** 'ष्वञ्जिंत् सङ्गे' (१४७१) ष्वञ्ज् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वञ्ज्, अभि-परि-प्रतिपूर्व० । वर्त्त० ते । 'तुदादेः शः' (३।४।८१) शप्र०—>अ । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः ।

**[अभिषिष्वङ्क्षते, परिषिष्वङ्क्षते, प्रतिषिष्वङ्क्षते]** स्वञ्ज्, अभि-परि-प्रतिपूर्व० । अभिषङ्क्तुमिच्छति-परिषङ्क्तुमिच्छति-प्रतिषङ्क्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'च-जः क-गम्' (२।१।८६) ज०—>ग० । 'अघोषे प्रथमो०' (१।३।५०) ग०—>क० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । क-षसंयोगे क्ष । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभिषाष्वज्यते]** स्वञ्ज्, अभिपूर्व० । भृशं पुनः पुनर्वा अभिष्वजते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभ्यष्वजत, प्रत्यष्वजत]** स्वञ्ज्, अभि-प्रतिपूर्व० । ह्यस्तनी त । 'तुदादेः शः' (३।४।८१) शप्र० । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अभिषस्वजे, अभिषस्वञ्जे]** स्वञ्ज्, अभिपूर्व० । परोक्षा ए । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्वञ्जेर्नवा' (४।३।२२) किद्वद्वा । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः ।

**[परिषस्वजे, परिषस्वञ्जे]** स्वञ्ज्, परिपूर्व० । परोक्षा ए । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्वञ्जेर्नवा' (४।३।२२) किद्वद्वा । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः ।

**[प्रतिषस्वजे, प्रतिषस्वञ्जे]** स्वञ्ज्, प्रतिपूर्व० । परोक्षा ए । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् ।' 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्वञ्जेर्नवा' (४।३।२२) किद्वद्वा । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः ।।छ।।

**परि-नि-वेः सेवः ।।२।३।४६।।**

**[परिनिवेः]** परिश्च निश्च विश्च = परिनिवि, तस्मात् ।

**[परिषेवते]** 'षेवृङ् सेवने' (८१८) षेव् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सेव्, परिपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । अनेन स० → ष० ।

**[परिषिषेविषते]** सेव्, परिपूर्व० ! परिषेवितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[परिषेषेव्यते]** सेव्, परिपूर्व० । भृशं पुनः पुनर्वा परिषेवते । 'व्यञ्जनादेरेक०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'आ-गुणावन्यादेः' (४।१।४८) ए । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[परिषिषेवे]** सेव्, परिपूर्व० । परोक्षा ए । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः ।

**[पर्यषेवत]** सेव्, परिपूर्व० । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

एवं नि-विपूर्वकः सेव् ज्ञेयम् ।

**[निषिषेविषते]** सेव्, निपूर्व० । निसे(षे)वितुमिच्छति । 'तुमर्हादिच्छा०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'स्ताद्यशितो०' (४।४।३२) इट् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[निषिषेवे]** सेव्, निपूर्व० । परोक्षा ए । शेषं 'परिषिषेवे' वत् ।

**[न्यषेवत]** सेव्, निपूर्व० । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[विषिषेविषते]** सेव्, विपूर्व० । विसे(षे)वितुमिच्छति । शेषं 'निषिषेविषते' वत् ।

**[विषिषेवे]** सेव्, विपूर्व० । परोक्षा ए । शेषं 'परिषिषेवे' वत् ।

**[व्यषेवत]** सेव्, विपूर्व० । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः०' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रतिसेषेव्यते]** सेव्, प्रतिपूर्व० । भृशं पुनः पुनर्वा प्रतिसेवते । 'व्यञ्जनादेरेक०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादे०' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'आ-गुणावन्यादेः'

(४।१।४८) ए । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[प्रत्यसिषेवत्]** सेव्, प्रतिपूर्व० । प्रतिसेवमानं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ॥छ॥

### सय-सितस्य ॥२।३।४७॥

**[सयसितस्य]** सयश्च सितश्च = 卐 सयसितस्तस्य ।

**[परिषयः]** 'षिंग्ट् बन्धने' (१२८७) षि । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सि, परिपूर्व० । परिषयनं(णम्) । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० → अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । एदैतोऽयाय् (१।२।२३) अय् ।

**[निषयः]** सि, निपूर्व० । निषयणम् । 'युवर्ण०' (५।३।२८) अल्प्र० → अ । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[विषयः]** विषय इत्यत्रैव संज्ञायां यः, अन्यत्र संज्ञा नास्ति । विसिन्वन्ति यूनां मनांसि इति । 'पुन्नाम्नि घः' (५।३।१३०) घप्र०→अ । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[परिषितः]** सि, परिपूर्व० । परिसीयते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । अनेन स०→ष० ।

**[निषितः]** सि, निपूर्व० । निसीयते स्म । 'गत्यर्था०' (५।१।११) क्तप्र० → त । अनेन स० → ष० ।

**[विषितः]** सि, विपूर्व० । विसीयते स्म । 'गत्यर्था०' (५।१।११) क्तप्र०→त । अनेन स०→ष० ।

**[मा विषसयत्]** विषय । विषयमाख्यत् । 'णिज्बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र० । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'अन्यस्य' (४।१।८) द्विर्वचनम् । अत्र द्वित्वे कर्त्तव्ये 'णषमसत्०' (२।१।६०) इत्यनेन षत्वनिवृत्तौ 'अन्यस्य' (४।१।८) इति द्विर्वचनम्, समानलोपत्वान्न 'असमानलोपे सन्वल्लघुनि ङे' (४।१।६३) इति न इ । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[व्यसयीयत्]** विषय । विषयमैच्छत् । 'अमाव्ययात् क्यन्०' (३।४।२३) क्यन्प्र०→य । 'क्यनि' (४।३।११२) ई ।

**[पर्यसितायत]** परिषित इवाचरत् । 'क्यङ्' (३।४।२६) क्यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[मा परिषिषयत्]** परिषितमाख्यत् । 'णिज्बहुलं०' (३।४।४२) णिच्प्र०→इ । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'णेरनिटि' (४।३।८३) णिच्लोपः ॥छ॥

### असो-ङ-सिवू-सह-स्सटाम् ॥२।३।४८॥

**[असोङसिवूसहस्सटाम्]** सोश्च ङश्च = सोङौ, न विद्येते सोङौ ययोः तौ = असोङौ, सिवूश्च सहश्च = सिवूसहौ,

---

P 卐 सयसितं, तस्य ।

असोडौ च तौ सिवूसहौ च असोडसिवूसहौ, असोडसिवूसहौ च स्सट् च = असोडसिवूसहस्सटः, तेषाम् ।

**[परिषीव्यति, निषीव्यति, विषीव्यति]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिव् । परि-नि-विपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । अनेन स०→ष० ।

**[परिषहते, निषहते, विषहते]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्टयै०' (२।३।९८) सह् । परि-नि-विपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । अनेन स० → ष० ।

**[परिष्करोति]** परि 'डुकृंग् करणे' (८८८ ) कृ । 'संपरेः कृगः स्सट्' (४।४।९१) स्सट् → स् । वर्त्त० तिव् । 'कृग्-तनादेरुः' (३।४।८३) उ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । ['अतः शित्युत्' (४।२।८९) अ० → उ० (?)] 'उ-श्नोः' (४।३।२) गु० ओ ।

**[विष्किरः शकुनिः]** 'कृत् विक्षेपे' (१३३४) कृ, विपूर्व० । विकिरतीति । 'नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः' (५।१।५४) कप्र० → अ ।' 'ॠतां क्ङितीर्' (४।४।११६) ॠ→इर्→किर् । 'वौ विष्किरो वा' (४।४।९६) स्सट्→स० ।

**[परिसोढः]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्टयै०' (२।३।९८) सह्, परिपूर्व० । परिषह्यते स्म । सर्वत्र वाक्यावस्थायां षत्वम् । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त० । क्तादौ सर्वत्र 'वेटोऽपतः' (४।४।६२) इति इट्निषेधः । 'हो धुट्-पदान्ते' (२।१।८२) ह०→ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध०→ढ० । 'सहिवहेरोच्चाऽवर्णस्य' (१।३।४३) ढलोपः-पूर्वस्य ओ ।

**[परिसोढव्यः]** सह्, परिपूर्व० । परिषह्यते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । तव्यादौ 'सह-लुभेच्छ-रुष-रिषस्तादेः' (४।४।४६) वेट् । 'हो धुट्-पदान्ते' (२।१।८२) ह०→ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध०→ढ० । 'सहि-वहेरोच्चाऽवर्णस्य' (१।३।४३) ढलोपः - पूर्वस्य ओ ।

**[निसोढः]** सह्, निपूर्व । निषह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[निसोढव्यः]** सह्, निपूर्व० । निषह्यते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० ।

**[विसोढः]** सह्, विपूर्व० । विषह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त ।

**[विसोढव्यः]** सह्, विपूर्व० । विषह्यते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० ।

**[मा परिसीषिवत्]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्टयै०' (२।३।९८) सिव्, परिपूर्व० । परिसीव्यन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः०' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वः । उपानयस्याऽसमानलोपिशास्वृदितो ङे' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[मा परिसीषहत्]** सह्, परिपूर्व० । परिषह्यन्तं प्रायुक्त । 'प्रयोक्तृ० (३।४।२०) णिग्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि → त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र० → अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे सन्वल्लघुनि ङे' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० ।

**[परिसेषिवीति]** सिव्, परिपूर्व० । भृशं पुनः पुनर्वा परिषीव्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-

यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० ए । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत् ।।छ।।

**स्तु-स्वञ्जश्चाटि नवा ।।२।३।४९।।**

**[स्तुस्वञ्जः]** स्तुश्च स्वञ्ज् च = स्तुस्वञ्ज्, तस्य ।

**[च]** च प्रथमा सि ।

**[अटि]** अट् सप्तमी ङि ।

**[नवा]** नवा प्रथमा सि ।

**[पर्यष्टौत्, पर्यस्तौत्, न्यष्टौत्, न्यस्तौत्, व्यष्टौत्, व्यस्तौत्]** 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्तु । 'निमित्ताऽभावे० (न्यायसंग्रहः १।२९) स्तु, परि-नि-विपूर्व० । ह्यस्तनी दिव् ⟶ त् । 'उत औविंति व्यञ्जनेऽद्वेः' (४।३।५९) औ । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यष्वजत, पर्यस्वजत, न्यष्वजत, न्यस्वजत, व्यष्वजत, व्यस्वजत]** 'ष्वञ्जिंत् सङ्गे' (१४७१) ष्वञ्ज् । 'षः सोऽष्ट्यै०' (२।३।९८) स्वञ्ज्, परि-नि-विपूर्व० । ह्यस्तनी त । 'तुदादेः शः' (३।४।८१) शप्र० ⟶ अ । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यषीव्यत्, पर्यसीव्यत्, न्यषीव्यत्, न्यसीव्यत्, व्यषीव्यत्, व्यसीव्यत्]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्ट्यै०' (२।३।९८) सिव्, परि-नि-विपूर्व० । ह्यस्तनी दिव् ⟶ त् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०⟶य । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यषहत, पर्यसहत, न्यषहत, न्यसहत, व्यषहत, व्यसहत]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्ट्यै०' (२।३।९८) सह्, परि-नि-विपूर्व० । ह्यस्तनी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यष्करोत्, पर्यस्करोत्]** परि 'डुकृंग् करणे' (८८८ ) कृ । 'संपरेः कृगः स्सट्' (४।४।९१) स्सट् ⟶स० । ह्यस्तनी दिव्⟶त् । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'उ-श्नोः' (४।३।२) गु० ओ । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यसोढयत्]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्ट्यै०' (२।३।९८) सह्, परिपूर्व० । परिसह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'हो धुट्-पदान्ते' (२।१।८२) ह०⟶ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०⟶ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध०⟶ढ० । 'सहि-वहेरोच्चाऽवर्णस्य' (१।३।४३) ढलोपः-पूर्विला ओ । परिसोढमाख्यत् । 'णिज्बहुलं०' (३।४।४२) णिच्प्र० । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । ह्यस्तनी दिव्⟶त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यसीषिवत्]** 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्ट्यै०' (२।३।९८) सिव्, परिपूर्व० । परिसीव्यन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०⟶इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । अद्यतनी दि⟶त् । 'णि-श्रि-द्रु-स्रु-कमः०' (३।४।५८) ङप्र०⟶अ । 'आद्योंऽश एकस्वरः' (४।१।२) द्विर्वचनम् । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'नाम्यन्तस्था०' (२।३।१५) स०⟶ष० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यसीषहत्]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्ट्यै०' (२।३।९८) सह्, परिपूर्व० । परिषहमाणं प्रायुक्त ।

'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र० । 'आद्योऽश एकस्वरः' (४।१।२) द्विर्वचनम् । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'असमानलोपे०' (४।१।६३) इ । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।।छ।।

**निरभ्यनोश्च स्यन्दस्याऽप्राणिनि** ।।२।३।५०।।

**[निरभ्यनोः]** निर् च अभिश्च अनुश्च, तस्मात् ।

**[अप्राणिनि]** न प्राणी = अप्राणी । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[निःष्यन्दते तैलम्, निःस्यन्दते तैलम्]** 'स्यन्दौङ् स्रवणे' (९५६) स्यन्द्, निर्पूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । अनेन विकल्पे स०→ष० ।

**[अभिष्यन्दते, अभिस्यन्दते]** स्यन्द्, अभिपूर्व० । वर्त्त० ते । शेषं पूर्ववत् ।

**[अनुष्यन्दते, अनुस्यन्दते]** स्यन्द्, अनुपूर्व० । वर्त्त० ते । शेषं पूर्ववत् ।

**[परिष्यन्दते, परिस्यन्दते]** स्यन्द्, परिपूर्व० । वर्त्त० ते । शेषं पूर्ववत् ।

**[विष्यन्दते, विस्यन्दते]** स्यन्द्, विपूर्व० । वर्त्त० ते । शेषं पूर्ववत् ।

**[अभिसास्यन्दीति तैलम्]** स्यन्द्, अभिपूर्व० । भृशं पुनः पुनर्वा अभिस्यन्दते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० →य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्या०' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत् ।

**[परिस्यन्दते मत्स्य उदके]** 'मदैच् हर्षे' (१२३६) मद् । 卐माद्यति जले मत्स्यः । 'मदेः स्यः' (उणा० ३८३) स्यप्र० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द०→त० ।

**[अनुष्यन्देते मत्स्योदके, अनुस्यन्देते वा]** 'स्यन्दौङ् स्रवणे' (९५६) स्यन्द्, अनुपूर्व० । वर्त्त० आते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'आतामाते-आथामाथे आदिः' (४।२।१२१) आ०→इ । 'अवर्णस्येवर्णादिनैदोदरल्' (१।२।६) ए ।।छ।।

**वेः स्कन्दोऽक्तयोः** ।।२।३।५१।।

**[अक्तयोः]** 卐卐क्तश्च क्तवांश्च क्तौ । 'समानामर्थेनैकः शेषः' (३।१।११८) एकशेषः । न क्तौ = अक्तौ । 'नञत्' (३।२।१२५) न०→अ०, तयोः ।

**[विष्कन्तुम्, विस्कन्तुम्]**स्कन्दृं गति-शोषणयोः' (३१९) स्कन्द्, विपूर्व० । विस्कन्दनाय । 'क्रियायां क्रियार्थायां तुम्-णकच्-भविष्यन्ती' (५।३।१३) तुम्प्र० । अनेन विकल्पे षत्वम् ।

**[विस्कन्नः]** विस्कद्यते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द-त०→न० ।

**[विस्कन्नवान्]** विस्कन्द(द्य)ते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र० → तवत् । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द-त०→न ।।छ।।

---

P 卐 अभिधानचिन्तामणिनाममालायाम्-माद्यति जलेन । P 卐卐 क्तश्च क्तश्च = क्तौ । 'स्यादावसंख्येयः' (३।१।११९) एकशेषः ।

## परेः ॥२।३।५२॥

**[परेः]** परि पञ्चमी ङसि ।

**[परिष्कन्ता, परिस्कन्ता]** 'स्कन्दृं गति-शोषणयोः' (३१९) स्कन्द्, परिपूर्व० । श्वस्तनी ता । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द०→त० । अनेन विकल्पे षत्वम् ।

**[परिष्कन्तुम्, परिस्कन्तुम्]** परिस्कन्दनाय । 'क्रियायां क्रियार्थायां०' (५।३।१३) तुम्प्र० ।

**[परिष्कण्णः, परिस्कन्नः]** परिस्कद्यते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'रदादमूर्च्छ०' (४।२।६९) द-त्त०→न० । अनेन विकल्पे षत्वम् ॥छ॥

**[परिष्कण्णवान्, परिस्कन्नवान्]** परिस्कन्द(द्य)ते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०→तवत् । 'रदादमूर्च्छ०' (४।२।६९) द–त०→न० । अनेन विकल्पे षत्वम् ।

## नि-र्नेः स्फुर-स्फुलोः ॥२।३।५३॥

**[निर्नेः]** निर् च निश्च = निर्निः, तस्मात् ।

**[स्फुरस्फुलोः]** स्फुरश्च स्फुल् च = स्फुरस्फुलौ, तयोः ।

**[निःष्फुरति, निःस्फुरति]** 'स्फुरत् स्फुरणे' (१४६०) स्फुर्, निर्पूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र० →अ ।

**[निष्फुरति, निस्फुरति]** 'स्फुरत् स्फुरणे' (१४६०) स्फुर्, निपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र० →अ ।

**[निःष्फुलति, निःस्फुलति]** 'स्फुलत् संचये च' (१४६१) स्फुल्, निर्पूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०→अ ।

**[निष्फुलति, निस्फुलति]** 'स्फुलत् संचये च' (१४६१) स्फुल्, निपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०→अ ॥छ॥

## वेः ॥२।३।५४॥

**[वेः]** वि पञ्चमी ङसि ।

**[विष्फुरति, विस्फुरति]** 'स्फुरत् स्फुरणे' (१४६०) स्फुर्, विपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र० →अ ।

**[विष्फुलति, विस्फुलति]** 'स्फुलत् संचये च' (१४६१) स्फुल्, विपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र० → अ ॥छ॥

## स्कभ्नः ॥२।३।५५॥

**[स्कभ्नः]** स्कभ्ना । षष्ठी ङस् । 'लुगाऽऽतोऽनापः' (२।१।१०७) आलोपः ।

**[विष्कभ्नाति]** स्कम्भू रोधनार्थः (१९८७) स्कभ्, विपूर्व० । वर्त्त० तिव् । 'स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च' (३।४।६५) श्नाप्र०→ना । अनेन स०→ष० । क्षुभ्नादित्वाण्णत्वाभावः ।

**[विष्कम्भिता]** विष्कभ्नातीति । 'णक-तृचौ' (५।१।४८) तृच्प्र०→तृ । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् ।

**[विष्कम्भकः]** विष्कभ्नातीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक ।

**[विष्कम्भयति]** विष्कभ्नन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।।छ।।

**नि-र्दुः-सु-वेः सम-सूतेः ।।२।३।५६।।**

**[निर्दुःसुवेः]** निश्च दुश्च सुश्च विश्च, तस्मात् ।

**[समसूतेः]** समश्च सूतिश्च, तस्य ।

**[निःषमः]** 'षम वैक्लव्ये' (३८९) षम् । 'षः सोऽष्ट्यै०' (२।३।९८) सम्, निर्पूर्व० । 卐 निःसमतीति । 'अच्' (५।१।४९) अच्प्र०→अ ।

**[दुःषमः]** सम्, दुर्पूर्व० । दुःसमतीति । 'अच्' (५।१।४९) अच्प्र० → अ ।

**[सुषमः]** सह मया वर्त्तते इति समः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । शोभनं समः = सुषमः ।

**[विषमः]** विसमतीति । 'अच्' (५।१।४९) अच्प्र० → अ ।

**[निःषूतिः]** 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सू, निर्पूर्व० । निस्सवनम् । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति ।

**[दुःषूतिः]** दुस्सवनम् । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति ।

**[विषूतिः]** विसवनम् । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति ।

**[निःसूतम्]** निस्सवनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[दुःसूतम्]** दुस्सवनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[विसूतम्]** विसवनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।।छ।।

**अवः स्वपः ।।२।३।५७।।**

**[अवः]** न विद्यते व् यस्याऽसौ अव्, तस्य ।

**[निःषुषुपतुः]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वप्, निर्पूर्व० । परोक्षा अतुस् । 'स्वपेर्यङ्-ङे च' (४।१।८०) य्वृत् व०→उ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । अनेन स०→ष० ।

**[दुःषुषुपतुः]** स्वप्, दुर्पूर्व० । परोक्षा अतुस् । शेषं 'निःषुषुपतुः' वत् ।

**[सुषुषुपतुः]** स्वप्, सुपूर्व० । परोक्षा अतुस् । शेषं 'निःषुषुपतुः' वत् ।

**[विषुषुपतुः]** स्वप्, विपूर्व० । परोक्षा अतुस् । शेषं 'निःषुषुपतुः' वत् ।

**[निःषुप्तः]** निःसुप्यते स्म ।

**[दुःषुप्तः]** दुःसुप्यते स्म ।

**[विषुप्तः]** विसुप्यते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० → त । अनेन स० → ष० ।

---

P 卐 निर्गतो निश्चितो वा समात् ।

**[दुःस्वप्नः]** स्वप्, दुर्पूर्व० । दुःस्वपनम् । 'यजि-स्वपि-रक्षि-यति-प्रच्छो नः' (५।३।८५) नप्र० ।

**[विस्वप्नः]** स्वप्, विपूर्व० । विस्वपनम् । 'यजि-स्वपि-रक्षि-यति-प्रच्छो नः' (५।३।८५) नप्र० ।

**[विसुष्वाप]** स्वप्, विपूर्व० । परोक्षा णव् → अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । [स्वपो णावुः (४।१।६२) व० → उ० ?] ('भू-स्वपोरदुतौ' (४।१।७०) उ) । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।।छ।।

**प्रादुरुपसर्गाद् य-स्वरेऽस्तेः ।।२।३।५८।।**

**[प्रादुरुपसर्गात्]** प्रादुश्च उपसर्गश्च = प्रादुरुपसर्गम्, तस्मात् ।

**[यस्वरे]** यश्च स्वरश्च = यस्वरम्, तस्मिन् ।

**[अस्तेः]** अस्ति षष्ठी ङस् ।

**[प्रादुःष्यात्, निष्यात्, विष्यात्, अभिष्यात्]** 'असक् भुवि' (११०२) अस्, प्रादुस्-नि-वि-अभिपूर्व० । सप्तमी यात् । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । अनेन स०→ष० ।

**[प्रादुःषन्ति, निषन्ति, विषन्ति, अभिषन्ति]** 'असक् भुवि' (११०२) अस्, प्रादुस्-नि-वि-अभिपूर्व० । वर्त्त० अन्ति । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । अनेन स० → ष० ।

**[निःष्यात्]** अस्, निर्पूर्व० । सप्तमी यात् । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः ।

**[निःषन्ति]** अस्, निर्पूर्व० । वर्त्त० अन्ति । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः ।

**[प्रादुःस्तः, निस्तः, अनुस्तः]** अस्, प्रादुस् - नि- अनुपूर्व० । वर्त्त० तस् । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः ।

**[अनुस्वः]** अस्, अनुपूर्व० । वर्त्त० वस् । 'श्नाऽस्त्योर्लुक्' (४।२।९०) अलोपः ।

**[विसृतम्]** 'सृं गतौ' (२५ ) सृ, विपूर्व० । विस्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[अनुसृतम्]** सृ, अनुपूर्व० । अनुस्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[आनुसेयः]** 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्टयै०' (२।३।९८) सू, अनुपूर्व० । अनुसूते = अनुसू(:) । क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । अनुस्वा अपत्यम् । 'शुभ्राऽऽदिभ्यः' (६।१।७३) एयण्प्र० → एय । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः । 'अकद्रू-पाण्ड्वोरुवर्णस्यैये' (७।४।६९) ऊलोपः ।।छ।।

**न स्सः ।।२।३।५९।।**

**[सुपिस्स्यते]** 'पिसृ गतौ' (५४६) पिस्, सुपूर्व० । वर्त्त० ते । 'क्यः शिति (३।४।७०) क्यप्र०→य । 'अदीर्घाद् विरामैकव्यञ्जने' (१।३।३२) द्वित्वम् ।

**[सुतुस्स्यते]** 'तुस शब्दे' (५३९ ) तुस्, सुपूर्व० । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अदीर्घाद् विरामैकव्यञ्जने' (१।३।३२) द्वित्वम् ।

**[दधिस्यति]** दधि भक्षितुमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'अस् च लौल्ये' (४।३।११५) सोऽन्तः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[मधुस्यति]** मधु भक्षितुमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'अस् च लौल्ये' (४।३।११५)

सोऽन्तः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्' । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[समचिस्करत्]** सम् 'डुकृंग् करणे' (८८८ ) कृ । 'संपरेः कृगः स्सट्' (४।४।९१) सडागमः । संस्कुर्वन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०'(४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'अघोषे शिटः' (४।१।४५) सलोपः । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'असमानलोपे सन्वल्लघुनि ङे' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।२।३५) ह्रस्वः । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[अग्निसात् करोति]** अनग्निमग्निं करोति = अग्नेरायत्तं करोति । 'व्याप्तौ स्सात्' (७।२।१३०) सात्प्र० ।।छ।।

## सिचो यङि ।।२।३।६०।।

**[सिचो यङि]** सिच् षष्ठी ङस् । यङ् सप्तमी ङि ।

**[सेसिच्यते]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्ट्यै०' (२।३।९८) सिच् । भृशं पुनः पुनर्वा सिञ्चति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) सिच् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) गु० से । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभिसेसिच्यते]** सिच्, अभिपूर्व० । भृशं पुनः पुनर्वा अभिसिञ्चति । 'व्यञ्जनादेरेक०' (३।४।९) यङ्प्र०→य । शेषं 'सेसिच्यते' वत् ।

**[अभिषिषिक्षति]** सिच्, अभिपूर्व० । अभिषेक्तुमिच्छति । 'तुमर्हादिच्छा०' (३।४।२१) सन्प्र० । शेषं (२।३।४०) सूत्रवत् ।।छ।।

## गतौ सेधः ।।२।३।६१।।

**[अभिसेधति, अनुसेधति गाः]** 'षिधू गत्याम्' (३२० ) षिध् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिध्, अभि-अनुपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । गो द्वितीया शस् । 'आ अम्-शसोऽता' (१।४।७५) ओ०→आ० ।

**[अभिसेधयति]** सिध्, अभिपूर्व० । अभिसेधन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[अनुसेधयति]** सिध्, अनुपूर्व० । अनुसेधन्तं प्रयुङ्क्ते । शेषं 'अभिसेधयति' वत् ।

**[अभिसिसेधिषति]** सिध्, अभिपूर्व० । अभिसेधितुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'स्ताद्यशितोऽत्रोणादेरिट्' ( ।४।३२) इट् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० ।

**[अनुसिसेधिषति]** सिध्, अनुपूर्व० । अनुसेधितुमिच्छति । शेषं 'अभिसिसेधिषति' वत् ।

**[प्रतिषेधति]** सिध्, प्रतिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि' (२।३।४०) स० → ष० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

**[निषेधति]** सिध्, निपूर्व० । शेषं 'प्रतिषेधति' वत् ।।छ।।

## सुगः स्य-सनि ॥२।३।६२॥

**[सुगः]** सुग् षष्ठी ङस् ।

**[स्यसनि]** स्यश्च सन् च = स्यसन्, तस्मिन् ।

**[अभिसोष्यति]** 'षुंगट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै०' (२।३।९८) सु, अभिपूर्व० । भविष्यन्ती स्यति । 'नामिनो गुणो०' (४।३।१) गु० ओ । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[परिसोष्यति]** सु, परिपूर्व० । भविष्यन्ती स्यति । शेषं 'अभिसोष्यति' वत् ।

**[अभ्यसोष्यत्]** सु, अभिपूर्व० । क्रियातिपत्तिः स्यत् । 'नामिनो गुणो०' (४।३।१) गु० ओ । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[पर्यसोष्यत्]** सु, परिपूर्व० । क्रियातिपत्तिः स्यत् । शेषं 'अभ्यसोष्यत्' वत् ।

**[सुसूः]** सु । सोतुमिच्छति । 'तुमर्हादिच्छायां०' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) सू । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । सुसूषते क्विप् । 'अतः (४।३।८२) अलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'सो रुः' (२।१।७२) ष०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[सुषाव]** सु । परोक्षा णव् । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । ओदौतोऽवाव् (१।२।२४) आव् ।

**[अभिषुणोति]** सु, अभिपूर्व० । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र० → नु । 'उ-श्नोः' (४।३।२) गु० ओ । 'रषृवर्णान्नो ण०' (२।३।६३) न० → ण० ॥छ॥

## रषृवर्णान्नो ण एकपदेऽनन्त्यस्याऽल-च-ट-तवर्ग-श-सान्तरे ॥२।३।६३॥

**[रषृवर्णात्]** रश्च ष् च ऋवर्णश्च = रषृवर्णम्, तस्मात् ।

**[एकपदे]** एकं च तत् पदं च = एकपदम्, तस्मिन् ।

**[अनन्त्यस्याऽलचटतवर्गशसान्तरे]** न अन्त्योऽनन्त्यस्तस्य । चश्च टश्च तश्च = चटताः, चटतानां वर्गः = चटतवर्गः, लश्च चटतवर्गश्च शश्च सश्च = लचटतवर्गशसाः, लचटतवर्गशसैरन्तरं - व्यवधानं = लचटतवर्गशसान्तरं, न लचटतवर्गशसान्तरं = अलचटवर्गशसान्तरम्, तस्मिन् ।

**[तीर्णम्]** 'तॄ प्लवन-तरणयोः' (२७) तॄ । तीर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०→न० । 'ऋतां क्ङितीर्' (४।४।११६) इर् । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः→ई । अनेन न०→ण० ।

**[चतुर्ण्णाम्]** चतुर् । षष्ठी आम् । 'संख्यानां र्ष्णाम्' (१।४।३३) नाम् । अनेन ण० । 'र्हादर्ह-स्वरस्याऽनु नवा' (१।३।३१) द्वित्वम् ।

**[पुष्णाति]** 'पुषश् पुष्टौ' (१५६४) पुष् । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र० → ना । अनेन न०→ण० ।

**[नृणाम्, नॄणाम्]** नृ षष्ठी आम् । 'ह्रस्वाऽऽपश्च' (१।४।३२) नाम् । 'नुर्वा' (१।४।४८) दीर्घः ।

**[करणम्]** 'डुकृंग् करणे' (८८८ ) कृ । क्रियते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'नामिनो गुणोक्ङिति' (४।३।१) गु० अर् । अनेन णत्वम् ।

**[करिणाम्]** कृ । करणम् । 'पुन्नाम्नि घः' (५।३।१३०) घप्र०→अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । करो विद्यते येषां ते करिणस्तेषाम् । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन णत्वम् ।

**[बृंहणम्]** 'बृहु शब्दे च' (५६०) बृह् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । बृंह्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'शिड्-हेऽनुस्वारः' (१।३।४०) अनुस्वारः । अनेन णत्वम् ।

**[नृभिर्नृभिः]** नृ । तृतीया भिस् । 'वीप्सायाम्' (७।४।८०) द्वित्वम् ।

**[चर्मनासिकः]** चर्मवन्नासिका यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[मेषनासिकः]** मेषवन्नासिका यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[विरलेन]** 'रमिं क्रीडायाम्' (९८९ ) रम्, विपूर्व० । विरमते । मुरलोरल-विरल-केरल-कपिञ्जल-कज्जलेज्जल-कोमल-भृमल-सिंहल-काहल-शूकल-पाकल-युगल-भगल-विदल-कुन्तलोत्पलादयः (उणा० ४७४) डलप्र० → अल । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः, तेन ।

**[अर्चनम्]** 'अर्च(र्चि)ण् पूजायाम्' (१९५४) अर्च् । अर्च्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[मूर्छनम्]** 'मुर्छा मोह-समुच्छ्राययोः' (१२६) मुर्छ् । मूर्छ्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः ।

**[अर्जनम्]** 'अर्ज अर्जने' (१४२) अर्ज् । अर्ज्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[झर्झनम्]** 'झर्झत् परिभाषणे' (१३५४) झर्झ् । झर्झ्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[किरीटेन]** 'कृत् विक्षेपे' (१३३४) कृ । किरतीति । 'तृ-कृ-कम्पि-कृषिभ्यः कीटः' (उणा० १५१) किद् ईटप्र० । 'ॠतां क्ङितीर्' (४।४।११६) किर्, तेन ।

**[कर्मठेन]** कर्मन् । कर्मणि कुशलः (?) (घटते) । 'तत्र घटते कर्मणष्ठः' (७।१।१३७) ठप्र० ।

**[मृडेन]** 'मृडश् सुखने' (१५४५) मृड् । मृडनम् (?) (मर्डनम्) । 'अच्' (५।१।४९) अच्प्र० → अ, तेन ।

**[दृढेन]** 'दृहु वृद्धौ' (५५७) दृह् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । दृंहति स्म । कर्त्तरि क्तप्र०→त । 'बलि-स्थूले दृढः' (४।४।६९) इडभावो नलोपश्च दृढनिपातः ।

**[कीर्तनम्]** 'कृतण् संशब्दने' (१६४९) कृत् । 'चुरादिभ्यो०' (३।४।१७) णिच्प्र० । 'कृतः कीर्त्तिः' (४।४।१२२) कीर्त्ति । कीर्त्त्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[नर्दन]** 'नर्द शब्दे' (३०२) नर्द् । नर्द्यते । 'अच्' (५।१।४९) अच्प्र० → अ ।

**[क्रोधेन]** 'क्रुधंच् कोपे' (११८४) क्रुध् । क्रोधनम् । घञ्प्र० → अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[रशना]** 'अशौटि व्याप्तौ' (१३१४) अश् । अश्नुते = प्राप्नोति कटीप्रदेशम् । 'अशो रश्चादौ' (उणा० २७०) अनप्र०-रश्चादिः । 'आत्' (२।४।१८) आप् ।

**[रसना]** 'रसण् आस्वादन-स्नेहनयोः' (१९२१) रस् । रस्यते मधुरादिकं वस्तु अनया । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन । 'आत्' (२।४।१८) आप् ।।छ।।

**पूर्वपदस्थान्नाम्न्यगः ।।२।३।६४।।**

**[पूर्वपदस्थात्]** पूर्वपद 'ष्ठां गतिनिवृत्तौ' ( ५ ) ष्ठा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः' (न्याय० १।२९) स्था । पूर्वपदे तिष्ठतीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः, तस्मात् ।

**[नाम्नि]** नामन् सप्तमी ङि । 'ई-ङौ वा' (२।१।१०९) अनोऽस्य लुक् ।

**[अगः]** न विद्यते ग् यस्याऽसावग्, तस्मात् ।

**[द्रुणसः]** द्रुवन्नासिका यस्याऽसौ । 'अस्थूलाच्च नसः' (७।३।१६१) नासिकास्थाने नसः स्यात् ।

**[सुरणसः]** खुरवन्नासिका यस्याऽसौ । 'अस्थूलाच्च नसः' (७।३।१६१) नासिकास्थाने नसः स्यात् ।

**[खरणाः]** खरवन्नासिका यस्याऽसौ । 'खर-खुरान्नासिकाया नस्' (७।३।१६०) नासिकास्थाने नस् । 'अभ्वादेरत्वसः सौ' (१।४।९०) दीर्घः ।

**[खुरणाः]** खुरवन्नासिका यस्याऽसौ । 'खर-खुरान्नासिकाया नस्' (७।३।१६०) नासिकास्थाने नस् । 'अभ्वादेरत्वसः सौ' (१।४।९०) दीर्घः ।

**[शूर्पणखा]** 卐 शूर्पाकारा नखा यस्याः सा । 'आत्' (२।४।१८) आप् ।

**[चन्द्रणखा]** चन्द्राकारा नखा यस्याः सा । 'आत्' (२।४।१८) आप् ।

**[वार्ध्रीणसः]** वार्ध्री नासिकायां यस्य स । 'अस्थूलाच्च नसः' (७।३।१६१) नासिकास्थाने नसः । अनेन न०→ण० ।

**[पुष्पणन्दी]** 'टुनदु समृद्धौ' (३१२) नद् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । पुष्केण (पुष्पेण) नन्दते(ति) । अच्' (५।१।४९) अच्प्र०→अ । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० ।

**[श्रीणन्दी स्त्री]** श्रिया नन्दते(ति) । 'अच्' (५।१।४९) अच्प्र०→अ । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० ।

**[मेषनासिकः]** मेषवन्नासिका यस्याऽसौ । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः ।

**[चर्मनासिकः]** चर्मवन्नासिका यस्याऽसौ । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः ।

**[ऋगयनम्]** 'अयि गतौ' (७९०) अय् । + अयते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । ऋचामयनम् । 'च-जः क-गम्' (२।१।८६) च० → क० । 'धुटस्तृतीयः' (२।१।७६) क० → ग० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[खारपायणः]** खर 'पांक् रक्षणे' (१०६७) पा । खरान् पातीति । 'आतो डोऽह्वा-वा-मः' (५।१।७६) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः । खरपस्याऽपत्यम् । 'स्त्रीबहुष्वायनञ्' (६।१।४८) आयनञ्प्र०→आयन । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः ।

**[मातृभोगीणः]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोजनं = भोगः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । 'क्तेऽनिटश्चजोः क-गौ घिति' (४।१।१११) ज०→ग० । मातृभोगाय हितः = मातृभोगीणः । 'भोगोत्तरपदा-ऽऽत्मभ्यामीनः' (७।१।४०) ईनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[गर्गभगिणी]** गर्गभगोऽस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इन् । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

---

P 卐 शूर्पवन्नखा यस्याऽसौ ।    P + ईयते अय्यते वा ।

'स्त्रियां नृतोऽस्वस्रादेर्डीः' (२।४।१) डीप्र० → ई ।।छ।।

**नसस्य** ।।२।३।६५।।

**[प्रणसः]** प्रगता प्रवृद्धा वा नासिका यस्याऽसौ ।

**[निर्णसः]** निर्गता नासिका यस्याऽसौ ।

**[प्रणसं मुखम्]** प्रगता नासिका यत्र तत् ।

**[निर्णसं मुखम्]** निर्गता नासिका यत्र तत् । सर्वत्र 'उपसर्गात्' (७।३।१६२) नासिका०→नस० । अनेन न०→ण० ।।छ।।

**निष्प्रा-ऽग्रे-ऽन्तः-खदिर-कार्श्या-ऽऽम्र-शरेक्षु-प्लक्ष-पीयूक्षाभ्यो वनस्य** ।।२।३।६६।।

**[निष्प्राऽग्रेऽन्तःखदिरकार्श्याऽऽम्रशरेक्षुप्लक्षपीयूक्षाभ्यः]** निश्च प्रश्च अग्रे च अन्तश्च खदिरश्च कार्श्यश्च आम्रश्च शरश्च इक्षुश्च प्लक्षश्च पीयूक्षा च = निष्प्राऽग्रेऽन्तःखदिरकार्श्याऽऽम्रशरेक्षुप्लक्षपीयूक्षा, ताभ्यः ।

**[निर्वणम्]** 卐 निर्गतं वनाद् = निर्वणम् ।

**[प्रवणम्]** * प्रगतं वनम् ।

**[अग्रेवणम्]** वनस्याऽग्रम् । अत एव निर्देशाद् एत्वम् ।

**[अन्तर्वणम्]** वनस्याऽन्तः ।

**[खदिरवणम्]** 'खद हिंसायां च' (२९६) खद् । खदति-हिनस्ति श्लेष्माणमिति खदिरः । मदि-मन्दि-चन्दि-पदि-खदि-सहि-वहि-कु-सृभ्य इरः (उणा० ४१२) इरप्र० । खदिराणां वनम् ।

**[कार्श्यवणम्]** कार्श्यानां वनम् ।

**[आम्रवणम्]** आम्राणां वनम् ।

**[शरवणम्]** शराणां वनम् ।

**[इक्षुवणम्]** इक्षूणां वनम् ।

**[प्लक्षवणम्]** प्लक्षाणां वनम् ।

**[पीयूक्षावणम्]** पीयूक्षाणां वनम् । सर्वत्र अनेन न० → ण० ।।छ।।

**द्वि-त्रिस्वरौषधि-वृक्षेभ्यो नवाऽनिरिकादिभ्यः** ।।२।३।६७।।

**[द्वित्रिस्वरौषधिवृक्षेभ्यः]** द्वौ च त्रयश्च = द्वित्रयः, द्वित्रयः स्वरा येषां ते = द्वित्रिस्वराः, ओषधयश्च वृक्षाश्च = ओषधिवृक्षाः, द्वित्रिस्वराश्च ओषधिवृक्षाश्च = द्वित्रिस्वरौषधिवृक्षाः, तेभ्यः ।

**[नवा]** नवा प्रथमा सि ।

**[अनिरिकादिभ्यः]** इरिका आदिर्येषां ते = इरिकादयः । न इरिकादयोऽनिरिकादयः । 'अन् स्वरे' (३।२।१२९) अन्,

---

P 卐 निःक्रान्तं वनात् । P * प्रकृष्टं वनम् ।

ताभ्यः ।

**[दूर्वावणम्, दूर्वावनम्]** दूर्वाया वनम् ।

**[मूर्वावणम्, मूर्वावनम्]** मूर्वाया वनम् ।

**[व्रीहिवणम्, व्रीहिवनम्]** व्रीहीणां वनम् ।

**[माषवणम्, माषवनम्]** माषाणां वनम् ।

**[नीवारवणम्, नीवारवनम्]** नि 'वृग्ट् वरणे' (१२९४) वृ । नियमेन व्रियन्ते इति । 'नेर्वुः' (५।३।७४) घञ्प्र० → अ । 'घञ्युपसर्गस्य बहुलम्' (३।२।८६) दीर्घः । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । नीवाराणां वनम् ।

**[प्रियङ्गुवणम्, प्रियङ्गुवनम्]** प्रियङ्गूणां वनम् ।

**[शिग्रुवणम्, शिग्रुवनम्]** 'शिंग्ट् निशाने' (१२८८) शि । शिनोति । 'शिग्रु-गेरु-नमेर्वादयः' (उणा० ८११) किद् रुप्र० - गोऽन्तश्च । शिग्रूणां वनम् ।

**[दारुवणम्, दारुवनम्]** 'दृश् विदारणे' (१५३५) दृ । दृणातीति । 'कृ-वा-पा-जि-स्वदि-साध्यशौ-दृ-स्ना-सनि-जा-निरहीण्भ्य उण्' (उणा० १) उण्प्र० → उ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । दारूणां वनम् ।

**[शिरीषवणम्, शिरीषवनम्]** शिरीषाणां वनम् ।

**[इरिकावनम्]** इरिकाणां वनम् ।

**[हरिवनम्]** हरयो-मर्कटा वने यत्र तत् ॥छ॥

**गिरिनद्यादीनाम्** ॥२।३।६८॥

**[गिरिनद्यादीनाम्]** गिरिनदी आदिर्येषां ते = गिरिनद्यादयः, तेषाम् ।

**[गिरिणदी, गिरिनदी]** गिरेर्नदी ।

**[गिरिणखः, गिरिनखः]** गिरेर्नखः ।

**[तूर्यमाणः, तूर्यमानः]** उर्वै (४७०) 卐 'तुर्वै हिंसायाम्' (४७१) तुर्व् । तूर्व्यते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'राल्लुक्' (४।१।११०) वलोपः । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । 'अतो म आने' (४।४।११४) मोऽन्तः । अनेन न० → ण० ।

तू(तु)र्यं मानमस्येति वाक्ये विकल्पः । यदा तूर्यते तूर्यमाणस्तदा नित्यं णत्वम् ॥छ॥

**पानस्य भाव-करणे** ॥२।३।६९॥

**[पानस्य]** पान षष्ठी ङस् ।

**[भावकरणे]** भावश्च करणं च = भावकरणं, तस्मिन् ।

**[क्षीरपाणं, क्षीरपानं वर्तते]** क्षीर 'पां पाने' ( २ ) पा । + पीयते पानम् । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

---

P 卐 'तूरैचि त्वरायाम्' (१२७४) तूर् । तूर्यते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० → आन । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

P + पीतिः = पानम् ।

क्षीरस्य पानम् । अनेन विकल्पे ण० ।

**[कषायपाणः, कषायपानः कंसः]** पीयतेऽनेनेति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०—>अन । कषायस्य पानः ।।छ।।

**देशे** ।।२।३।७०।।

**[देशे]** 'दिशींत् अतिसर्जने' (१३१८) दिश् । दिश्यते = देशः, तस्मिन् ।

**[क्षीरपाणा उशीनराः]** 'वशक् कान्तौ' (११०१) वश् । उश्यते इति । 'स्थादिभ्यः कः' (५।३।८२) कप्र०—>अ । 'वशेरयङि' (४।१।८३) य्वृत् व० —> उ० । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० । उशी = नगरी, तस्या नराः । क्षीरं पानं येषां ते ।

**[सुरापाणाः प्राच्याः]** सुरा पानं येषां ते । प्रथमा जस् ।

**[कषायपाणा गान्धारयः]** कषायस्य पानं = कषायपानं, कषायपानं येषां ते । गन्ध 'ऋंक् गतौ' (११३५) ऋ । गन्धमियर्त्ति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० —> अ । गन्धारस्याऽपत्यं वृद्धम् । 'अत इञ्' (६।१।३१) इञ्प्र०—>इ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । ग(गा)न्धारे राज्ञोऽपत्यानि । 'गान्धारि-साल्वेयाभ्याम्' (६।१।११५) अञ्प्र० । 'बहुष्वस्त्रियाम्' (६।१।१२४) लुक् । प्रथमा जस् ।

**[क्षीरपाना गोपालकाः]** क्षीरस्य पानं येषां ते । गां दुहन्तीति क्विप् ।।छ।।

**ग्रामा-ऽग्रान्नियः** ।।२।३।७१।।

**[ग्रामाऽग्रान्नियः]** ग्रामश्च अग्रं च = ग्रामाऽग्रम्, तस्मात् । नी षष्ठी ङस् —> अस् ।

ननु किमर्थं सूत्रमिदम् - यतो 'गतिकारक०' (न्यायसं० २।३१) इति न्यायात् समासे एकपदत्वात् 'रषृवर्णा०' (२।३।६३) इति णत्वं सिद्धमिति, उच्यते-नियमार्थं, यदि नियो णत्वं स्यात्तदा ग्रामाग्रादेव, तेन मेषनी-खरनीत्यादौ पूर्वेणापि न स्यात् ।

**[ग्रामणीः]** ग्राम 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । ग्रामं नयतीति क्विप् । 'क्विप्' (५।१।१४८) क्विप्प्र० । अनेन न० —> ण० ।

**[अग्रणीः]** अग्रं नयतीति क्विप् । अनेन न० —> ण० ।।छ।।

**वाह्याद् वाहनस्य** ।।२।३।७२।।

**[इक्षुवाहणम्]** उह्यतेऽनेनेति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०—>अन । वहनमेव वाहनम् । 'प्रज्ञादिभ्योऽण्' (७।२।१६५) अण् । इक्षूणां वाहनम् । अनेन न०—>ण० ।

**[शरवाहणम्]** शराणां वाहनम् । अनेन न०—>ण० ।

**[सुरवाहनम्]** सुराणां वाहनं = सुरवाहनम् । संबन्धमात्रमत्र विवक्षितम् ।

**[नरवाहनः]** नरो वाहनमेषाम् । यौगिकोऽयं शब्दस्तेन 'पूर्वपदस्था०' (२।३।६४) इति न णत्वम् ।।छ।।

**अतोऽह्नस्य** ।।२।३।७३।।

**[पूर्वाह्णः]** पूर्व-अहन् । पूर्वमह्नः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्नाऽऽदेशश्च ।

**[अपराह्णः]** अपरमह्नः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्नाऽऽदेशश्च ।

**[निरह्नः]** निर्गतमहः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्नाऽऽदेशश्च । अनेन ण० न ।

**[दुरह्नः]** दुष्टमहः = दुरह्नः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्नाऽऽदेशश्च ।

**[दीर्घाह्नी शरत्]** दीर्घाण्यहानि यस्यां सा । 'अनो वा' (२।४।११) ङीप्र० → ई । 'अनोऽस्य' (२।१।१०८) अनोऽस्य लुक् ।।छ।।

## चतुस्त्रेर्हायनस्य वयसि ।।२।३।७४।।

**[चतुस्त्रेः]** चत्वारश्च त्रयश्च = चतुस्त्रि, तस्मात् ।

**[हायनस्य]** हायन षष्ठी ङस् ।

**[वयसि]** वयस् सप्तमी ङि ।

**[चतुर्हायणो वत्सः]** चतुर्-हायन । चत्वारि हायनानि यस्याऽसौ । हायनः साध्यते, 'ओहांक् त्यागे' (११३१) हा । 'ओहांङ्क् गतौ' (११३६) हा । जहाति जिहीते वा कालान्तरमिति हायनः । 'हः काल-व्रीह्योः' (५।१।६८) टनण्प्र०→अन । 'आत ऐः कृञ्ञौ' (४।३।५३) आ०→ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । 'वद व्यक्तायां वाचि' (९९८ ) वद् । वदति मातरं दृष्ट्वा । 'मा-वा-वद्यमि-कमि-हनि-मानि-कष्यशि-पचि-मुचि-यजि-वृ-तृभ्यः सः' (उणा० ५६४) सप्र० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द०→त० । प्रथमा सि ।

**[चतुर्हायणी वडवा]** चत्वारो हायना यस्याः सा । 'संख्यादेर्हायनाद् वयसि' (२।४।९) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[त्रिहायणो वत्सः]** त्रीणि हायनानि यस्याऽसौ ।

**[त्रिहायणी वडवा]** त्रीणि हायनानि यस्यां सा ।

**[चतुर्हायना शाला]** चत्वारि हायनानि यस्यां सा ।

**[त्रिहायना शाला]** त्रीणि हायनानि यस्यां सा ।

**[सहस्रहायनः पुरुषः]** सहस्रं हायना यस्याऽसौ ।

**[लक्षहायनः पक्षी]** लक्षं हायना यस्याऽसौ ।।छ।।

## वोत्तरपदान्तनस्यादेरयुव-पक्वा-ऽह्नः ।।२।३।७५।।

**[वा]** वा प्रथमा सि ।

**[उत्तरपदान्तनस्यादेः]** उत्तरं च तत् पदं च = उत्तरपदं, उत्तरपदस्य अन्तः = उत्तरपदान्तः, सि(:) आदिर्यस्याऽसौ स्यादिः । उत्तरपदान्तश्च नश्च स्यादिश्च = उत्तरपदान्तनस्यादिस्तस्य ।

**[अयुवपक्वाऽह्नः]** युवा च पक्वश्च अहश्च = युवपक्वाऽहः, न युवपक्वाऽहः = अयुवपक्वाऽहः, तस्य । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[व्रीहिवापिणौ, व्रीहिवापिनौ]** व्रीहि 'डुवपीं बीजसन्ताने' (९९५ ) वप् । व्रीहीन् वपत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र० → इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अनेन न० → ण० ।

**[व्रीहिवापिणी, व्रीहिवापिनी कुले]** व्रीहीन् वपत इत्येवंशीले, ते । 'अजातेः शीले' (५।१।१५४) णिन्प्र० → इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । औ । 'औरीः' (१।४।५६) ई ।

**[माषवापिणी, माषवापिनी कुले]** माषान् वपत इत्येवंशीले, ते । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् ।

'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । औ । 'औरीः' (१।४।५६) ई ।

**[व्रीहिवापिणः, व्रीहिवापिनः]** व्रीहीन् वपन्तीत्येवंशीलाः, ते । 'अजातेः शीले' (५।१।१५४) णिन्प्र० ⟶ इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रथमा जस् ।

**[माषवापिणः, माषवापिनः]** माषान् वपन्तीत्येवंशीलाः, ते । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रथमा जस् ।

**[व्रीहिवापीणि, व्रीहिवापीनि कुलानि]** व्रीहीन् वपन्तीत्येवंशीलानि, तानि ।

**[व्रीहिवापिणा, व्रीहिवापिना]** व्रीहीन् वपतीत्येवंशीलः, तेन ।

**[व्रीहिवापाणि, व्रीहिवापानि कुलानि]** 'डुवपीं बीजसन्ताने' (९९५) वप् । वपनं = वापः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० ⟶ अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'व्रीहीणां वापो येपु कुलेपु तानि । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० ⟶ इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'निः दीर्घः' (१।४।८५) दीर्घः ।

**[माषवापाणि, माषवापानि कुलानि]** माषाणां वापो येषु कुलेषु तानि ।

**[प्रेण्वनम्, प्रेन्वनम्]** 'इवु व्याप्तौ च' (४८८) इव् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) इन्व्, प्रपूर्व० । प्रेन्व्यते । 'अनट्' (५।३।१२४) अनट्प्र० ⟶ अन ।

**[प्रहिण्वन्, प्रहिन्वन्]** 'हिवु प्रीणने' (४८५) हिव् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः = हिन्व्, प्रपूर्व० । प्रहिन्वतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० ⟶ अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[प्रपिण्वन्, प्रपिन्वन्]** 'पिवु सेचने' (४८२ ) पिव् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः = पिन्व्, प्रपूर्व० । प्रपिन्वतीति । 'शत्रानशावेष्यति तु सस्यौ (५।२।२०) शतृप्र० ⟶ अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याव्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[प्राहिण्वन्, प्राहिन्वन्]** प्रहिन्व् । ह्यस्तनी दिव् ⟶ त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[व्रीहिवापेण, व्रीहिवापेन]** व्रीहीणां वापः, तेन ।

**[व्रीहिवापाणाम्, व्रीहिवापानाम्]** व्रीहीणां वापाः, तेषाम् । एवमग्रेऽपि ।

**[अश्वक्रीती]** 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । अश्वेन क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'कारकं कृता' (३।१।६८) इति समासः । 'क्रीतात् करणादेः' (२।४।४४) ङीप्र० ⟶ ई ।

**[आर्ययूना]** आर्यश्चासौ युवा च = आर्ययुवा, तेन । 'श्वन्-युवन्-मघोनो ङीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व० ⟶उ० ।

**[प्रपक्वानि]** 'डुपचींष् पाके' (८९२ ) पच्, प्रपूर्व० । प्रपच्यन्ते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ⟶ त । 'क्षै-शुषि-पचो म-क-वम्' (४।२।७८) त०⟶व० । 'च-जः क-गम्' (२।१।८६) च०⟶क० ।

**[परिपक्वानि]** परिपच्यन्त स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'क्षै-शुषि-पचो म-क-वम्' (४।२।७८) त०

→व० । 'च-जः क-गम्' (२।१।८६) च०→क० ।

**[दीर्घाह्नी शरत्]** दीर्घाण्यहानि अस्यां सा । अनो वा (२।४।११) ङीप्र०→ई । 'ईङौ वा' (२।१।१०९) अलोपः ।

**[त्र्यह्नि]** त्रिषु अहस्सु भवः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्नाऽऽदेशश्च । 'भवे' (६।३।१२३) अण्प्र० । 'द्विगोरनपत्ये य-स्वरा-ऽऽदेर्लुबद्विः' (६।१।२४) लुप्, तस्मिन् ।

**[गर्दभवाहिनौ]** गर्दभान् वाहयत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र० → इन् ।

**[गर्दभवाहिनः]** गर्दभान् वाहयन्तीत्येवंशीलाः, ते ॥छ॥

## कवर्गैकस्वरवति ॥२।३।७६॥

**[कवर्गैकस्वरवति]** एकश्चासौ स्वरश्च = एकस्वरः, कवर्गश्च एकस्वरश्च = कवर्गैकस्वरं, 卐 कवर्गैकस्वरं विद्यते यत्र तत् । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । 'मावर्णान्तोपान्ता०' (२।१।९४) म०→व०, तस्मिन् ।

**[स्वर्गकामिणौ]** स्वर्ग 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः आ । स्वर्गं कामयेते इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । प्रथमा औ ।

**[मोक्षकामिणौ]** मोक्षं कामयेते इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । प्रथमा औ ।

**[स्वर्गगामिणौ]** स्वर्ग अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । स्वर्गं गच्छत इत्येवंशीलौ ।

**[वृषगामिणौ]** वृषेण गच्छत इत्येवंशीलौ ।

**[स्वर्गकामाणि कुलानि]** स्वर्गं कामयन्त इत्येवंशीलानि ।

**[मोक्षकामाणि कुलानि]** मोक्षं कामयन्त इत्येवंशीलानि, **[यानि]** तानि ।

**[ब्रह्महणौ]** ब्रह्मन् 'हनंक् हिंसा-गत्योः' (११००) हन् । ब्रह्माणं हतवन्तौ । 'ब्रह्म-भ्रूण-वृत्रात् क्विप्' (५।१।१६१) क्विप्प्र० । अप्रयोगीत् (१।१।३७) क्विप्लोपः । प्रथमा औ । अनेन न०→ण० ।

**[वृत्रहणौ]** वृत्रं हतवन्तौ । 'ब्रह्म-भ्रूण-वृत्रात् क्विप्' (५।१।१६१) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा औ । अनेन न०→ण० ।

**[क्षीरपाणि]** क्षीर 'पां पाने' (२ ) पा । क्षीरं पिबन्तीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[यूषपाणि]** यूषं = मुद्गरसं पिबन्ति यानि कुलानि तानि । 'आतो डोऽह्वा-वा-मः' (५।१।७६) डप्र० ।

**[पुरोगान्]** पुरस् अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । पुरो गच्छन्तीति । 'नाम्नो गमः खड्-डौ च विहायसस्तु विहः' (५।१।१३१) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः, तान् ।

**[क्षीरपक्वानि]** क्षीरेण पक्वानि ।

**[यूषपक्वानि]** यूष्णा पक्वानि ।

**[माषत्यागिनः]** माषाणां त्यागो विद्यते येषु ते । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८)

---

P 卐 कवर्गैकस्वरमस्याऽस्ति ।

अलोपः ।

**[माषजानि]** माष 'जनैचि प्रादुर्भावे' (१२६५) जन् । माषेभ्यो जातानि । 'क्वचित्' (५।१।१७१) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः, तानि ।

**[माषजेन]** माषेभ्यो जातानि । 'क्वचित्' (५।१।१७१) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः, तेन ।।छ।।

**अदुरुपसर्गा-ऽन्तरो ण-हिनु-मीना-ऽऽनेः ।।२।३।७७।।**

**[अदुरुपसर्गाऽन्तरः]** न दुर् = अदुर्, अदुर् चासौ उपसर्गश्च = अदुरुपसर्गः, अदुरुपसर्गश्च अन्तर् च = अदुरुपसर्गाऽन्तर्, तस्मात् ।

**[णहिनुमीनाऽऽनेः]** णश्च हिनुश्च मीनाश्च आनिश्च = णहिनुमीनाऽऽनि, तस्य ।

**[प्रणामकः]** 'णमं प्रह्वत्वे' (३८८) णम् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नम्, प्रपूर्व० । प्रणमतीति । 'णक-तृचौ (५।१।४८) णकप्र०⟶अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[प्रणायकः]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी, प्रपूर्व० । प्रणयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०⟶अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[प्रहिणोति]** 'हिंट् गति-वृद्ध्योः' (१२९५) हि, प्रपूर्व० । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०⟶नु । 'उ-श्नोः' (४।३।२) गु० ओ ।

**[प्रहिणुतः]** 'हिंट् गति-वृद्ध्योः' (१२९५) हि, प्रपूर्व० । वर्त्त० तस् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०⟶नु ।

**[प्रमीणाति]** 'मींग्श् हिंसायाम्' (१५१२) मी, प्रपूर्व० । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र०⟶ना ।

**[प्रमीणीतः]** 'मींग्श् हिंसायाम्' (१५१२) मी, प्रपूर्व० । वर्त्त० तस् । 'क्र्यादेः' (३।४।७९) श्नाप्र०⟶ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) ई ।

**[प्रवयाणि]** 'वेंग् तन्तुसन्ताने' (९९२) वे, प्रपूर्व० । पञ्चमी आनिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) अय् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[प्रापयाणि]** प्र-अप 'यांक् प्रापणे' (१०६२) या । पञ्चमी आनिव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[दुर्नयः]** दुर् 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । 卐 दुर्नयतीति । 'अच्' (५।१।४९) अच्प्र० ⟶ अ। 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[दुर्नीतम्]** दुर्-नी । दुर्नीयते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०⟶त ।।छ।।

**नशः शः ।।२।३।७८।।**

**[नशः शः]** नश् षष्ठी ङस् । श् षष्ठी ङस् ।

**[प्रणाशः]** 'नशौच् अदर्शने' (१२०२) नश्, प्रपूर्व० । प्रणशनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०⟶अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[परिणाशः]** परिन(ण)शनं । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०⟶अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

---

P 卐 दुर्नयनं = दुर्नयः । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० ।

**[प्रनष्टः]** प्रनश्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यज-सृज-मृज-राज-भ्राज-भ्रस्ज-व्रश्च-परिव्राजः शः षः' (२।१।८७) श०→ष० । 'तवर्गस्य श्ववर्ग०' (१।३।६०) त०→ट० ।

**[प्रनङ्क्ष्यति, परिनङ्क्ष्यति]** नश्, प्र-परिपूर्व० । भविष्यन्ती स्यति । 'नशो धुटि' (४।४।१०९) नोऽन्तः । यज-सृज-मृज-राज०' (२।१।८७) श०→ष० । 'ष-ढोः कस्सि' (२।१।६२) ष०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । ['शिड्-हेऽनुस्वारः' (१।३।४०) अनुस्वारः ?] ('म्नां धुड्वर्गे०' (१।३।३९) न०→ङ०) । क-षसंयोगे क्ष ।।छ।।

**नेङ्र्मा-दा-पत-पद-नद-गद-वपी-वही-शमू-चिग्-याति-वाति-द्राति-प्साति-स्यति-हन्ति-देग्धौ** ।।२।३।७९।।

**[ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धौ]** ङकारेणोपक्षितो मा = ङ्मा, ङ्माश्च दाश्च पतश्च पदश्च नदश्च गदश्च वपी च वही च शमू च चिग् च यातिश्च वातिश्च द्रातिश्च प्सातिश्च स्यतिश्च हन्तिश्च देग्धिश्च = ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धि, तस्मिन् ।

**[प्रणिमिमीते, परिणिमिमीते]** 'मांङ्क मान-शब्दयोः' (११३७)मा, प्रनि-परिनिपूर्व० । वर्त्त० ते । 'ह्वः शिति' (४।१।१२) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'पृ-भृ-मा-हाङामिः' (४।१।५८) इ । 'एषामी०' (४।२।९७) ई ।

**[प्रणिमयते, परिणिमयते]** 'मेङ् प्रतिदाने' (६०३) मे, प्रनि-परिनिपूर्व० । वर्त्त० ते । 'कर्त्तर्य०' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[प्रणिददाति, परिणिददाति]** 'डुदांग्क् दाने' (११३८) दा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'ह्वः शिति' (४।१।१२) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् ।

**[प्रणिदयते, परिणिदयते]** 'देंङ् पालने' (६०४) दे, प्रनि-परिनिपूर्व० । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[प्रणियच्छति, परिणियच्छति]** 'दां दाने' (७) दा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु-पा०' (४।२।१०८) यच्छादेशः ।

**[प्रणिद्यति, परिणिद्यति]** 'दोंच् छेदने' (११४८) दो, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र० →य । 'ओतः श्ये' (४।२।१०३) ओलोपः ।

**[प्रणिदधाति, परिणिदधाति]** 'डुधांग्क् धारणे च' (११३९) धा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'ह्वः शिति' (४।१।१२) धाद्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'द्वितीयतुर्ययोः पूर्वौ' (४।१।४२) ध०→द० ।

**[प्रणिधयति, परिणिधयति]** 'ट्धें पाने' (२८) धे, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[प्रणिपतति, परिणिपतति]** 'पत्लृ गतौ' (९६२) पत्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्य०' (३।४।७१) शव् ।

**[प्रणिपद्यते, परिणिपद्यते]** 'पदिंच् गतौ' (१२५७) पद्, प्रनि-परिनिपूर्व० । वर्त्त० ते । 'दिवादेः श्यः' (३।४।७२) श्यप्र० → य ।

**[प्रणिनदति, परिणिनदति]** 'णद अव्यक्ते शब्दे' (२९९) णद् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नद्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[प्रणिगदति, परिणिगदति]** 'गद व्यक्तायां वाचि' (२९७) गद्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[प्रणिवपति, परिणिवपति]** 'डुवपीं बीजसन्ताने' (९९५) वप्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[प्रणिवहति, परिणिवहति]** 'वहीं प्रापणे' (९९६) वह्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[प्रणिशाम्यति, परिणिशाम्यति]** 'शमू उपशमे' (१२३०) शम्, प्रनि-परिनिपूर्व० । 'दिवादेः श्यः' (३।४।७२) श्यप्र० →य । 'शमूसप्तकस्य श्ये' (४।२।१११) दीर्घः ।

**[प्रणिचिनोति, परिणिचिनोति]** 'चिंगृट् चयने' (१२९०) चि, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र० → नु । 'उ-श्नोः' (४।३।२) गु० ओ ।

**[प्रणियाति, परिणियाति]** 'यांक् प्रापणे' (१०६२) या, प्रनि-परिनिपूर्व० । वर्त्त० तिव् ।

**[प्रणिवाति, परिणिवाति]** 'वांक् गति-गन्धनयोः' (१०६३) वा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् ।

**[प्राणिद्राति, परिणिद्राति]** 'द्रांक् कुत्सितगतौ' (१०६६) द्रा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् ।

**[प्रणिप्साति, परिणिप्साति]** अदं (१०५९) - 'प्सांक् भक्षणे' (१०६०) प्सा, प्रनि-परिनिपूर्व० । वर्त्त० तिव् ।

**[प्रणिस्यति, परिणिस्यति]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सो, प्रनि-परिनिपूर्व० । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य । 'ओतः श्ये' (४।२।१०३) ओलोपः ।

**[प्रणिहन्ति, परिणिहन्ति]** 'हनंक् हिंसा-गत्योः' (११००) हन्, प्रनि-परिनिपूर्व० । वर्त्त० तिव् ।

**[प्रणिदेग्धि, परिणिदेग्धि]** 'दिहींक् लेपे' (११२८) दिह्, प्रति-परिनिपूर्व० । वर्त्त० तिव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'भ्वादेर्दादेर्घः' (२।१।८३) ह०→घ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) घ०→ग० ।

**[प्रणिमाता]** 'मांङ्क् मान-शब्दयोः' (११३७) मा, प्रनिपूर्व० । श्वस्तनी ता ।

**[प्रणिदाता]** 'डुदांग्क् दाने' (११३८) दा, प्रनिपूर्व० । श्वस्तनी ता ।

**[अन्तर्णिमिमीते]** 'मांङ्क् मान-शब्दयोः' (११३७) मा, अन्तर्निपूर्व० । वर्त्त० ते । 'हवः शिति' (४।१।१२) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'पृ-भृ-मा-हाङामिः' (४।१।५८) इ । 'एषामी व्यञ्जनेऽदः' (४।२।९७) ई ।

**[प्रनिवावपीति]** 'डुवपीं बीजसन्ताने' (९९५) वप्, प्रनिपूर्व० । भृशं पुनः पुनर्वा प्रणि(नि)वपति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु०' (४।३।६४) ईत् →ई ।

**[प्रणिमामाति, प्रणिमामेति]** 'मांङ्क् मान-शब्दयोः' (११३७) मा, प्रनिपूर्व० । भृशं पुनः पुनर्वा प्रणिमिमीते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत्→ई । 'अवर्णस्ये०' (१।२।६) ए ।

**[प्रनिमाति]** प्रनि 'मांक् माने' (१०७३) मा । वर्त्त० तिव् ।

**[प्रनिमीनाति]** प्रनि 'मींग्श् हिंसायाम्' (१५१२) मी । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना ।

**[प्रनिमिनोति]** प्रनि 'डुमिंग्ट् प्रक्षेपणे' (१२८९) मि । वर्त्त० तिव्' । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'उ-

श्नोः' (४।३।२) गु० ओ ।

**[प्रनिदायन्ते व्रीहयः]** प्रनि 'दांव्क् लवने' (१०७०) दा । वर्त्त० अन्ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[प्रनिदायन्ते पात्राणि]** प्रनि 'दैंव् शोधने' (२९) दै । वर्त्त० अन्ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।।छ।।

**अक-खाद्यषान्ते पाठे वा** ।।२।३।८०।।

**[अकखाद्यषान्ते]** कश्च खश्च = कखौ, कखावादी यस्याऽसौ कखादि(:), न कखादि(:) = अकखादि(:) । 'षोऽन्ते यस्याऽसौ षान्तः, न षान्तोऽषान्तः, अकखादिश्च अषान्तश्च = अकखाद्यषान्तम्, तस्मिन् ।

**[प्रणिपापच्यते, प्रनिपापच्यते]** प्रनि 'डुपचींष् पाके' (८९२) पच् । भृशं पुनः पुनर्वा प्रणिपचति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) पच् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । वर्त्त० ते ।

**[प्रणिपापचीति, प्रनिपापचीति]** प्रनि-पच् । भृशं पुनः पुनर्वा प्रनिपचति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) पच् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'वहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत् → ई ।

**[प्रणिपिपक्षति, प्रनिपिपक्षति]** प्रनि-पच् । प्रनिपक्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'सन्यस्य' (४।१।५९) इ । 'च-जः क-गम्' (२।१।८६) च०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष०, क-षसंयोगे क्ष । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[प्रण्यपीपचत्, प्रन्यपीपचत्]** प्रनि-पच् । प्रणिपचन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'असमानलोपे०' (४।१।६३) इ । 'उपान्त्यस्याऽसमानलोपि०' (४।३।३५) ह्रस्वः । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) दीर्घः । णेरनिटि (४।३।८३) णिग्लोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रनिसासति]** प्रनि 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्ट्यै०' (२।३।९८) सो । भृशं पुनः पुनर्वा प्रनिस्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'आ-गुणावन्यादेः' (४।१।४८) आ । 'वहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० अन्ति । 'श्नश्चाऽऽतः' (४।२।९६) आलोपः । 'अन्तो नो लुक्' (४।२।९४) नलोपः ।।छ।।

**द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा** ।।२।३।८१।।

**[प्राणिणिषति]** प्र 'अन प्राणने' (१०८९) अन् । प्राणितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'स्वरादेर्द्वि०' (४।१।४) निद्विः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । अनेन न०→ण० ।

**[प्राणिणत्]** प्र 'अन प्राणने' (१०८९) अन् । प्राणन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'ञ्णिति

(४।३।५०)' उपान्त्यवृद्धिः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र० । 'स्वराऽऽदेर्द्वितीयः' (४।१।४) निर्द्विर्वचनम् । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'स्वरादेस्तासु' (४।४।३१) वृद्धिः ।

**[प्राणिति]** प्र-अन् । वर्त्त० तिव् । 'रुत्पञ्चकाच्छिदयः' (४।४।८८) इट् । अनेन न०→ण० ।

**[पराणिति]** परा 'अन प्राणने' (१०८९) अन् । वर्त्त० तिव् । 'रुत्पञ्चकाच्छिदयः' (४।४।८८) इट् । अनेन न० →ण० ।

**[हे प्राण् !]** प्राणितीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तस्य संबोधनम् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[हे पराण् !]** पराणितीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तस्य संबोधनम् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[पर्यणिणिषति, पर्यनिनिषति]** परि-अन् । पर्यणितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'स्वराऽऽदेर्द्वितीयः' (४।१।४) निर्द्विर्वचनम् । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । अनेन ।

**[पर्याणिणत्, पर्यानिनत्]** परि-अन् । पर्यणन्तं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु०' (३।४।५८) ङप्र० । 'स्वराऽऽदेर्द्वितीयः' (४।१।४) निर्द्विर्वचनम् । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'स्वरादेस्तासु' (४।४।३१) वृद्धिः । अनेन ।

**[पर्यणिति, पर्यनिति]** परि-अन् । वर्त्त० तिव् । 'रुत्पञ्चकाच्छिदयः' (४।४।८८) इट् । अनेन ।

**[हे पर्यण् !, हे पर्यन् !]** परि-अन् । पर्यणितीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तस्य संबोधनम् । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।।छ।।

**हनः ।।२।३।८२।।**

**[प्रहण्यते, पराहण्यते, निर्हण्यते, अन्तर्हण्यते]** प्र-परा-निर्-अन्तर् 'हनंक् हिंसागत्योः' (११००) हन् । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य ।

**[प्रहणनम्, पराहणनम्, निर्हणनम्, परिहणनम्, अन्तर्हणनम्]** प्रहन्यते, पराहन्यते, निर्हन्यते, परिहन्यते अन्तर्हन्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । अनेन ।

**[प्रघ्नन्ति]** प्र-हन् । वर्त्त० अन्ति । 'गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक्' (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[प्राघानि]** प्र-हन् । अद्यतनी त । 'भाव-कर्मणोः' (३।४।६८) ञिच्प्र०→इ - तलोपः । 'ञि-णवि घन्' (४।३।१०१) घनादेशः । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[दुर्हनः]** दुःखेन हन्यते ।।छ।।

**व-मि वा ।।२।३।८३।।**

**[वमि]** वश्च म् च = वम्, तस्मिन् ।

**[प्रहण्वः, प्रहन्वः]** 'हनंक् हिंसा-गत्योः' (११००) हन्, प्रपूर्व० । वर्त्त० वस् । अनेन ।

[प्रहण्मि, प्रहन्मि] प्र-हन् । वर्त्त० मिव् । अनेन ।

[प्राहण्महे, प्राहन्महे] प्र-आङ्, हन् । वर्त्त० महे । 'आङो यम०' (२।३।८६) आत्मनेपदम् ।

[अन्तर्हण्वः, अन्तर्हन्वः] अन्तर्-हन् । वर्त्त० वस् ॥छ॥

**निंस-निक्ष-निन्दः कृति वा ॥२।३।८४॥**

[निंसनिक्षनिन्दः] निंसश्च निक्षश्च निन्द् च = निंसनिक्षनिन्द्, तस्य ।

[कृति] कृत् सप्तमी ङि ।

[वा] वा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

[प्रणिंसनम्, प्रनिंसनम्] प्र 'णिसुकि चुम्बने' (११२१) णिस् । 'पाठे धात्वादेर्णो नः' (२।३।९७) निस् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रणिंस्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । अनेन ।

[प्रणिक्षणम्, प्रनिक्षणम्] 'णिक्ष चुम्बने' (५७३) णिक्ष् । 'पाठे धात्वादेर्णो नः' (२।३।९७) निक्ष्, प्रपूर्व० । प्रनि(णि)क्ष्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

[प्रणिन्दनम्, प्रनिन्दनम्] 'णिदु कुत्सायाम्' (३११) णिद् । 'पाठे धात्वादेर्णो नः' (२।३।९७) निद्, प्रपूर्व० । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रनि(णि)द्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

[प्रणिंस्ते] 'णिसुकि चुम्बने' (११२१) णिस् । 'पाठे धात्वादेर्णो नः' (२।३।९७) निस्, प्रपूर्व० । वर्त्त० ते । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । 'अदुरुपसर्गा-ऽन्तरो ण-हिनु-मीना-ऽऽनेः' (२।३।७७) न०→ण० ॥छ॥

**स्वरात् ॥२।३।८५॥**

[स्वरात्] स्वर पञ्चमी ङसि ।

[प्रहाणः प्रहाणवान्] 'ओहांङ् गतौ' (११३६) हा, प्रपूर्व० । प्रजिहीते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त, क्तवतुप्र०→तवत् । 'सूयत्याद्योदितः' (४।२।७०) त०→न० । अनेन न०→ण० ।

[प्रहीणः] 'ओहांक् त्यागे' (११३१) हा, प्रपूर्व० । प्रहीयते प्रजहाति स्म वा । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'सूयत्यद्योदितः' (४।२।७०) त०→न० । अनेन न०→ण० । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) ई० ।

[परिहीणः] 'ओहांक् त्यागे' (११३१) हा, परिपूर्व० । परिहीयते परिजहाति स्म वा । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० →त । 'सूयत्याद्योदितः' (४।२।७०) त०→न० । अनेन न०→ण० । ईर्व्यञ्जनेऽयपि (४।३।९७) ई ।

[प्रगूणः, प्रगूणवान्] प्र 'गुंत् पुरीषोत्सर्गे' (१४२७) गु । प्रगुवति स्म । 'क्त-क्तवतू' (५।१।१७४) त-तवत् । 'दु-गोरू च' (४।२।७७) त०→न० -ऊत्वं च ।

[प्रयायमाणम्, परियायमाणम्] प्र-परि 'यांक् प्रापणे' (१०६२) या । प्रयायते-परियायते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

[प्रयायिणौ] प्रयान्तं प्रयुङ्क्ते (प्रयुञ्जाते) । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'आत ऐः कृञ्जौ' (४।३।५३) आ० → ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ।

[परियायिणौ] परियान्तं प्रयुङ्क्ते (प्रयुञ्जाते) । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'आत ऐः कृञ्जौ' (४।३।५३) आ० →ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[अप्रयाणिः]** अप्रयाणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[अपरियाणिः]** अपरियाणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रयाणीयम्]** प्रयायते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[परियाणीयम्]** परियायते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रवहणीयम्]** 'वहीं प्रापणे' (९९६) वह्, प्रपूर्व० । प्रोह्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । अनेन न०→ण० सर्वत्र ।

**[प्रभुग्नः, प्रभुग्नवान्]** प्र 'भुजोंत् कौटिल्ये' (१३५१) भुज् । प्रभुज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) त-तवत् । 'सूयत्याद्योदितः' (४।२।७०) त०→न० । ['क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) ज०→ग० ?] ('च-जः क-गम्' (२।१।८६) ज०→ग०) ।

**[दुर्यानः पन्थाः]** दुर् 'यांक् प्रापणे' (१०६२) या । दुःखेन यायते । 'शासू-युधि-दृशि-धृषि-मृषा-ऽऽतोऽनः' (५।३।१४१) अनप्र० ।

**[प्रवापेन]** 'डुवपीं बीजसन्ताने' (९९५) वप्, प्रपूर्व० । प्रवपनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः, तेन ।

**[प्रक्लृप्यमानम्]** प्र 'कृपौङ् सामर्थ्ये' (९५९) कृप् । प्रकल्पते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः । मतान्तराभिप्रायेण ऋ(लृ) मध्ये लकारो द्रष्टव्य इति व्यावृत्तेः साफल्यम् ।

**[प्रेण्वनम्, प्रेन्वनम्]** प्र 'इवु व्याप्तौ' (४८८) इव् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । 'प्रेन्व्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रदानम्]** प्र 'डुदांग्क् दाने' (११३८) दा । प्रदीयते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रधानम्]** प्र 'डुधांग्क् धारणे च' (११३९) धा । प्रधीयते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।।छ।।

**नाम्यादेरेव ने ।।२।३।८६।।**

**[नाम्यादेः]** नामी आदिर्यस्याऽसौ नाम्यादिः, 卐 तस्य ।

**[प्रेङ्खणम्]** उख (६३) - नख (६४) - णख (६५) - वख (६६) - मख (६७) - रख (६८) लख (६९) - मखु (७०) - रखु (७१) - लखु (७२) - रिखु (७३) इख (७४) - 'इखु गतौ' (७५) इख्, प्रपूर्व० । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रेङ्ख्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[प्रेङ्गणम्]** प्र 'इगु गतौ' (८७) इग् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रेङ्ग्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रेङ्खमाणः]** प्रेङ्खतीत्येवंशीलः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रेङ्गमाणः]** प्रेङ्गतीत्येवंशीलः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१)

P 卐 तस्मात् ।

शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

[प्रेङ्खिणौ] प्रेङ्खत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । प्रथमा औ ।

[प्रेङ्गिणौ] प्रेङ्गत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । प्रथमा औ ।

[अप्रेङ्खणिः] अप्रेङ्खणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

[अप्रेङ्गणिः] अप्रेङ्गणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

[प्रेङ्खणीयम्] प्रेङ्ख्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

[प्रेङ्गणीयम्] प्रेङ्ग्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

[प्रमङ्गनम्] 'मगु गतौ' (८५) मग्, प्रपूर्व० । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रमङ्ग्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन ।

[प्रकम्पनम्] 'कपुङ् चलने' (७५७) कप्, प्रपूर्व० । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । प्रकम्प्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन ।

[प्रेहणम्] प्र 'ईहि चेष्टायाम्' (८५७) ईह् । प्रेह्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन ।

[प्रोहणम्] प्र 'ऊहि वितर्के' (८७०) ऊह् । प्रोह्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन ।।छ।।

**व्यञ्जनादेर्नाम्युपान्त्याद् वा** ।।२।३।८७।।

[व्यञ्जनादेः] व्यञ्जनमादिर्यस्याऽसौ व्यञ्जनादिः, तस्मात् ।

[नाम्युपान्त्यात्] नामी उपान्त्ये यस्याऽसौ नाम्युपान्त्यः, तस्मात् ।

[प्रमेहणम्, प्रमेहनम्] प्र 'मिहं सेचने' (५५१) मिह् । प्रमिह्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

[प्रकोपणम्, प्रकोपनम्] प्र 'कुपच् क्रोधे' (११९१) कुप् । प्रकुप्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

[प्रगुप्यमाणम्, प्रगुप्यमानम्] प्र 'गुपि गोपन-कुत्सनयोः' (७६३) गुप् । प्रगुप्यते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०⟶आन । 'क्यः शिति' (३।४।७०) क्यप्र०⟶य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

[प्रकोपिणौ, प्रकोपिनौ] प्रकुप्यत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । प्रथमा औ ।

[अप्रकोपणिः, अप्रकोपनिः] अप्रकोपणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

[प्रकोपणीयम्, प्रकोपनीयम्] प्रकुप्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

[प्रवपणम्] 'डुवपीं बीजसन्ताने' (९९५) वप्, प्रपूर्व० । प्रोप्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन ।

[प्रवहणम्] 'वहीं प्रापणे' (९९६) वह्, प्रपूर्व० । प्रोह्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

[दुर्मोहनः] दुर् 'मुहौच् वैचित्त्ये' (१२३८) मुह् । दुर्मुह्यते । 'अनट्' (५।३।१२४) अनट्प्र०⟶अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[दुर्गूहनः]** दुर् 'गुहौग् संवरणे' (९३५) गुह् । दुःगुह्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'गोहः स्वरे' (४।२।४२) दीर्घः ।

**[प्रभेदनम्]** प्र 'भिदृंपी विदारणे' (१४७७) भिद् । प्रभिद्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रभोजनम्]** प्र 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । प्रभुज्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।।छ।।

**णेर्वा** ।।२।३।८८।।

**[प्रमङ्गणा, प्रमङ्गना]** प्र 'मगु गतौ' (८५) मग् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८)नोऽन्तः । प्रमङ्गन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । प्रमङ्गनम् । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'आत्' (२।४।१८) आप् । 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१।३।३९) न०→ङ० ।

**[प्रयापणम्, प्रयापनम्]** प्र 'यांक् प्रापणे' (१०६२) या । प्रयान्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० →इ । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । प्रयाप्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रयापिणौ, प्रयापिनौ]** प्रयाप्यत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[अप्रयापणिः, अप्रयापनिः]** अप्रयापणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[प्रयापणीयम्, प्रयापनीयम्]** प्रयाप्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[प्रयाप्यमाणः, प्रयाप्यमानः]** प्रयान्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । प्रयाप्यते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र० → य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रदापनम्]** प्र 'डुदांग्क् दाने' (११३८) दा । प्रददतं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'अर्त्ति-री-व्ली-ह्री०' (४।२।२१) पोऽन्तः । प्रदाप्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'णेरनिटि' (४।३।८३) णिग्लोपः ।।छ।।

**निर्विण्णः** ।।२।३।८९।।

**[निर्विण्णः प्राव्राजीत्]** 'विदिंच्, सत्तायाम्' (१२५८) विद् । 'विद्लृंती लाभे' (१३२२) विद् । 'विदिंप् विचारणे' (१४९७) विद्, निर्पूर्व० । निर्विद्यते स्म । निर्विन्दति स्म । निर्विन्ते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० →त । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च (४।२।६९) द-त०→न० । तृतीये 'ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा' (४।२।७६) त० →न० । अनेन न०→ण० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न०→ण० ।

**[निर्विण्णवान्]** 'विदक् ज्ञाने' (१०९९) विद्, निर्पूर्व० । निर्वेत्ति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०→तवत् । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द-त०→न० ।।छ।।

**न ख्या-पूग्-भू-भा-कम-गम-प्याय-वेपो णेश्च** ।।२।३।९०।।

**[ख्यापूग्भूभाकमगमप्यायवेपः]** 卐 ख्याश्च पूग् च भूश्च भाश्च कमश्च गमश्च प्यायश्च वेप् च = ख्यापूग्भूभाकमगमप्यायवेप्, तस्मात् ।

P 卐 ख्या च ।

**[प्रख्यानम्]** प्र 'ख्यांक् प्रकथने' (१०७१) ख्या । प्रख्यायते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रख्यायमानम्]** प्रख्यायते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रख्यायिनौ]** प्रख्यात इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'आत ऐः कृञ्जौ' (४।३।५३) आ०→ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । प्रथमा औ ।

**[अप्रख्यानिः]** अप्रख्यानं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रख्यानीयम्]** प्रख्यायते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रपवनम्]** प्र 'पूग्श् पवने' (१५१८) पू । प्रपूयते । 'अनट्' (५।१।१२४) अनट्प्र०→अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[प्रपूयमानम्]** प्रपूयते । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रपाविनौ]** प्रपुनीत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[अप्रपवनिः]** अप्रपवनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[प्रपवनीयम्]** प्रपूयते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रभवनम्]** प्र 'भू सत्तायाम्' (१) भू । प्रभूयते । 'अनट्' (५।३।१२४) अनट्प्र० → अन ।

**[प्रभूयमानम्]** प्रभूयते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र० →य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रभाविनौ]** प्रभवत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[अप्रभवनिः]** अप्रभवनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[प्रभवनीयम्]** प्रभूयते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[प्रभानम्]** प्र 'भांक् दीप्तौ' (१०६१) भा । प्रभायते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रभायमानम्]** प्रभायते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र० →य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रभायिनौ]** प्रभात इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'आत ऐः कृञ्जौ' (४।३।५३) आ० →ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[अप्रभानिः]** अप्रभानं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रभानीयम्]** प्रभायते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रकमनम्]** प्र 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'अमोऽकम्यमि-चमः' (४।२।२६) ह्रस्वः । प्रकाम्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'णेरनिटि' (४।३।८३) णिङ्लोपः ।

**[प्रकम्यमानम्]** प्रकाम्यते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र० →य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रकामिनौ]** प्रकाम्येते इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'णेरनिटि' (४।३।८३) णिङ्लोपः ।

**[अप्रकमनिः]** अप्रकमनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रकमनीयम्]** प्रकाम्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'णेरनिटि' (४।३।८३) णिङ्लोपः ।

**[प्रगमनम्]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम्, प्रपूर्व० । प्रगम्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रगम्यमानम्]** प्रगम्यते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रगामिनौ]** प्रगच्छत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[अप्रगमनिः]** न प्रगमनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रगमनीयम्]** प्रगम्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रप्यानः]** स्फायैङ् (८०४) - 'ओप्यायैङ् वृद्धौ' (८०५) प्याय्, प्रपूर्व० । प्रप्यायते । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० →त । 'व्यञ्जनान्तस्थाऽऽतोऽख्या-ध्यः' (४।२।७१) त०→न० । 'य्वोः प्वय्व्यञ्जने लुक्' (४।४।१२१) यलोपः ।

**[प्रप्यायमानम्]** प्रप्यायते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रप्यायिनौ]** प्रप्यायेते इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् ।

**[अप्रप्यायनिः]** अप्रप्यायनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रप्यायनीयम्]** प्रप्यायते । तव्या-ऽनीयौ (५।१।२७) अनीयप्र० ।

**[प्रवेपनम्]** 'टुवेपृङ् चलने' (७५४) वेप्, प्रपूर्व० । प्रवेप्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[प्रवेपमानम्]** प्रवेप्यते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[प्रवेपिनौ]** प्रवेपत इत्येवंशीलौ । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् ।

**[अप्रवेपनिः]** न प्रवेपनं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[प्रवेपनीयम्]** प्रवेप्यते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० ।

**[प्रख्यापनम्]** प्र 'ख्यांक् प्रकथने' (१०७१) ख्या । प्रख्यान्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०

→इ । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । प्रख्याप्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'णेरनिटि' (४।३।८३) णिग्लोपोऽग्रे सर्वत्र ।

**[प्रपावनम्]** प्र 'पूग्श् पवने' (१५१८) पू । प्रपुनन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । प्रपाव्यते । 'अनट्' (५।३।१२४) अनट्प्र० →अन ।

**[प्रभावना]** प्र 'भू सत्तायाम्' (१) भू । प्रभवन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । प्रभाव्यते । णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।

**[प्रभापना]** प्र 'भांक् दीप्तौ' (१०६१) भा । प्रभान्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'अर्त्ति-री-व्ली-ह्री०' (४।२।२१) पोऽन्तः । प्रभाप्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।

**[प्रकामना]** प्र 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र० → इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रकाम्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।

**[प्रगमना]** प्र 'गम्लृं गतौ' (३९६) गम् । प्रगच्छन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'अमोऽकम्यमि-चमः' (४।२।२६) ह्रस्वः । प्रगम्यते । 'णि-वेत्त्यास०' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।

**[प्रप्यायना]** प्र 'ओप्यायैङ् वृद्धौ' (८०५) प्याय् । प्रप्यायमानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० →इ । प्रप्याय्यते । 'णि-वेत्त्यास०' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।

**[प्रवेपना]** प्र 'टुवेपृङ् चलने' (७५४) वेप् । प्रवेपनं(मानं) प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । प्रवेप्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट०' (५।३।१११) अनप्र० । 'आत्' (२।४।१८) आप् ।।छ।।

## देशेऽन्तरोऽयन-हनः ॥२।३।९१॥

**[अयनहनः]** अयनश्च हन् च = अयनहन्, तस्य ।

**[अन्तरयनो देशः]** अन्तर् 'अयि गतौ' (७९०) अय् । अन्तरय्यतेऽस्मिन्निति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन ।

**[अन्तर्हननो देशः]** अन्तर् 'हनंक् हिंसा-गत्योः' (११००) हन् । अन्तर्हन्यतेऽस्मिन्निति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन ।

**[अन्तरयणं वर्तते]** अन्तरय्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'स्वरात्' (२।३।८५) इति णत्वम् ।

**[अन्तर्हण्यते]** अन्तर् 'हनंक् हिंसा-गत्योः' (११००) हन् । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'हनः' (२।३।८२) इति णत्वम् ।

**[अन्तर्घणो देशः]** अन्तर्हण्यतेऽस्मिन्निति । 'हनोऽन्तर्घनाऽन्तर्घणौ देशे' (५।३।३४) निपातः ।

**[प्रायणो देशः]** प्र 'अयि गतौ' (७९०) अय् । प्राय्यतेऽस्मिन्निति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन ।

**[प्रहणनो देशः]** प्रहन्यतेऽस्मिन्निति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन ।

**[अन्तर्णमनो देशः]** अन्तर् 'णमं प्रह्वत्वे' (३८८) णम् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नम् । अन्तर्णम्यतेऽस्मिन्निति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन ।।छ।।

## षात् पदे ।।२।३।९२।।

**[सर्पिष्पानम्]** सर्पिस् 'पां पाने' (२ ) पा । पीयते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । सर्पिषः पानम् । 'समासेऽसमस्तस्य' (२।३।१३) र०→ष० ।

**[यजुष्पानम्]** यजुस्-पान । यजुषः पानम् ।

**[दुष्पानम्]** दुर्-पान । दुष्टं पानम् ।

**[निष्पानम्]** निश्चितं पानम् ।

**[निष्पायनम्]** निःपिबन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'आत ऐः कृञ्ञौ' (४।३।५३) आ०→ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । निःपाय्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'णेरनिटि' (४।३।८३) णिग्लोपः । 'निर्दुर्बहिराविष्प्रादुश्चतुराम्' (२।३।९) र०→ष० ।

**[निर्णयः]** निर् 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । निर्न(र्ण)यनम् । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र०→अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अदुरुपसर्गान्तरो ण-हिनु-मीना-ऽऽनेः' (२।३।७७) न०→ण० ।

**[निर्याणम्]** निर् 'यांक् प्रापणे' (१०६२) या । निर्यायते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'स्वरात्' (२।३।८५) न०→ण० ।

**[पुष्णाति]** 'पुषश् पुष्टौ' (१५६४) पुष् । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० ।

**[सर्पिष्केण]** 卐 सर्पिष इदम् । 'यावादिभ्यः कः' (७।३।१५) कप्र० । 'नामिनस्तयोः षः' (२।३।८) र०→ष०, तेन ।।छ।।

## पदेऽन्तरेऽनाङ्यतद्धिते ।।२।३।९३।।

**[पदेऽन्तरेऽनाङ्यतद्धिते]** पदे अन्तरं करोतीति । 'णिज्बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र० । 'त्रन्त्यस्वरादेः' (७।४।४३) अन्त्यस्वरादिलोपः । अन्तरयतीति । 'अच्' (५।१।४९) अच्प्र०→अ । सप्तमी ङि, अन्तरे मध्यस्थेत्यर्थः । न आङ् = अनाङ् । 'अन् स्वरे' (३।२।१२९) अन्, तस्मिन् । न तद्धितोऽतद्धितः । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[प्रावनद्धम्]** प्र-अव 'णहींच् बन्धने' (१२८५) णह् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नह् । प्रावनह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'नहाऽऽहोर्ध-तौ' (२।१।८५) ह०→ध० । 'अधश्चतुर्थात्०' (२।१।७९) त०→ध० । 'तृतीयस्तृ०' (१।३।४९) ध०→द० ।

---

P 卐 कुत्सितमल्पमज्ञातं वा सर्पिः = सर्पिष्कम् । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'सो रुः' (२।१।७२) रुत्वम् । 'नामिनस्तयोः षः' (२।३।८) षत्वम् ।

**[चतुरङ्गयोगेन]** चतुर्णामङ्गानां योगः = चतुरङ्गयोगस्तेन ।

**[भर्तृबाहुयुग्मेन]** भर्तुर्बाहुः = भर्तृबाहुः, भर्तृबाहोर्युग्मं = भर्तृबाहुयुग्मम्, तेन ।

**[रोषभीममुखेन]** रोषेण भीमं मुखं यस्याऽसौ, तेन ।

**[प्राणद्धम्]** प्राणह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'अदुरुपसर्गा-ऽन्तरो ण-हिनु-मीना-ऽऽनेः' (२।३।७७) णत्वम् ।

**[प्रण्यास्यति]** प्र-नि-आङ् 'असूच् क्षेपणे' (१२२१) अस् । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य ।

**[आर्द्रगोमयेण]** गोः पुरीषम् । 'गोः पुरीषे' (६।२।५०) मयट्प्र०→मय । आर्द्रं च तद् गोमयं च = आर्द्रगोमयं, तेन । 'कवर्गैकस्वरवति' (२।३।७६) णत्वम् ।

**[शुष्कगोमयेण]** शुष्कं च तद् गोमयं च = शुष्कगोमयं, तेन ।

**[परमापूपमयेण]** परमश्चासावपूपश्च = परमापूपः, परमापूपेन प्रकृतम् । 'प्रकृते मयट्' (७।३।१) मयट्प्र०→मय, तेन ।

**[यूषयावकेण]** यवानां विकारः = यावः । 'विकारे' (६।२।३०) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । याव एव = यावकः । 'यावादिभ्यः कः' (७।३।१५) कप्र० । यूषेण मांसमुद्गादिरसेन मिश्रः यावकः = यूषयावकस्तेन ॥छ॥

## हनो घि ॥२।३।९४॥

**[वृत्रघ्ना]** वृत्र 'हनंक् हिंसा-गत्योः' (११००) हन् । वृत्रं हतवान् = वृत्रहा । 'ब्रह्म-भ्रूण-वृत्रात् क्विप्' (५।१।१६१) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्न्, तेन । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[वृत्रघ्ने]** वृत्रं हतवान् = वृत्रहा । 'ब्रह्म-भ्रूण-वृत्रात् क्विप्' (५।१।१६१) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः, तस्मै । 'अनोऽस्य' (२।१।१०८) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्न् ।

**[ब्रह्मघ्नः]** ब्रह्म हतवान् । 'ब्रह्मादिभ्यः' (५।१।८५) टक्प्र०→अ । 'गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक्' (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[शत्रुघ्नः]** शत्रुं हतवान् । 'ब्रह्मादिभ्यः' (५।१।८५) टक्प्र०→अ । गम-हन-जन० (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[प्रघ्नन्ति]** प्र-हन् । वर्त्त० अन्ति । गम-हन-जन-खन० (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः ।

**[प्राघ्नन्]** प्र-हन् । ह्यस्तनी अन् । 'गम-हन-जन०' (४।२।४४) अलोपः । 'हनो ह्नो घ्नः' (२।१।११२) घ्नादेशः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्राघानि]** प्र-हन् । अद्यतनी त । 'भाव-कर्मणोः' (३।४।६८) ञिच्-तलोपश्च । 'ञि-णवि घन्' (४।३।१०१) घनादेशः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[प्रघानिष्यते]** प्र-हन् । भविष्यन्ती स्यते । 'स्वर-ग्रह-दृश-हन्भ्यः-स्य-सिजाशीः-श्वस्तन्यां ञिट् वा' (३।४।६९) ञिट्प्र० →इ । 'ञि-णवि घन्' (४।३।१०१) घनादेशः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

卐 **[अर्केण]** 'कवर्गैकस्वरवति' (२।३।७६) न०→ण० ।

**[परिघेण]** 'कवर्गैकस्वरवति' (२।३।७६) न० → ण० ।

**[वृत्रघ्नणौ]** वृत्रं हतवन्तौ । 'ब्रह्म-भ्रूण-वृत्रात् क्विप्' (५।१।१६१) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ।

**[प्रहणनम्]** प्रहन्यते । 'अनट्' (५।३।१२४) अनट्प्र० → अन । 'हनः' (२।३।८२) न०→ण० ।।छ।।

## नृतेर्यङि ।।२।३।९५।।

**[नरीनृत्यते]** 'नृतैच् नर्तने' (११५२) नृत् । भृशं पुनः पुनर्वा नृत्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० → य । "सन्-यङश्च' (४।१।३) नृत्द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) नृ० → न० । 'ऋमतां री' (४।१।५५) री आगमु । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[नरिनर्त्ति]** नृत् । भृशं पुनः पुनर्वा नृत्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) नृ०→न० । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । 'रि-रौ च लुपि' (४।१।५६) रि आगमु । वर्त्त० तिव् । 'लघोरुपा०' (४।३।४) गु० अर् ।

**[नर्नर्ति]** नृत् । भृशं पुनः पुनर्वा नृत्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र० → य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) नृ०→न० । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । 'रि-रौ च लुपि' (४।१।५६) र् आगमु । वर्त्त० तिव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[नरीनृतीति]** नृत् । भृशं पुनः पुनर्वा नृत्यति । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) नृ०→न० । 'ऋमतां री' (४।१।५५) री आगमु । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । 'यङ्-तु-रु-स्तोर्बहुलम्' (४।३।६४) ईत्→ई ।

**[हरिणर्ती नाम कश्चित्]** हरि 'नृतैच् नर्तने' (११५२) नृत् । हरिरिव नृत्यतीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र० → इन् । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'पूर्वपदस्थान्नाम्न्यगः' (२।३।६४) न० →ण० ।।छ।।

## क्षुभ्नादीनाम् ।।२।३।९६।।

**[क्षुभ्नादीनाम्]** क्षुभ्ना आदिर्येषां ते = क्षुभ्नादयस्तेषाम् ।

**[क्षुभ्नाति]** 'क्षुभश् संचलने' (१५५३) क्षुभ् । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना ।

**[क्षुभ्नीतः]** 'क्षुभश् संचलने' (१५५३) क्षुभ् । वर्त्त० तस् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) ई ।

**[क्षुभ्नन्ति]** 'क्षुभश् संचलने' (१५५३) क्षुभ् । वर्त्त० अन्ति । 'क्र्यादे०' (३।४।७९) श्नाप्र०→ना । 'श्नश्चाऽऽतः' (४।२।९६) आलोपः ।

**[क्षुभ्नन्]** क्षुभ् । क्षुभ्नातीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । श्नश्चाऽऽतः (४।२।९६) आलोपः । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

---

卐 बृहद्वृत्तौ - अर्घेण ।

**[क्षुभ्नानः]** क्षुभ् । क्षुभ्नातीत्येवंशीलः । 'वयःशक्ति-शीले' (५।२।२४) शानप्र० → आन । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । 'समानानां तेन दीर्घः' (१।२।१) दीर्घः ।

**[तृप्नोति]** 'तृपट् प्रीणने' (१३०८) तृप् । वर्त्त० तिव् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'उ-श्नोः' (४।३।२) गु० ओ ।

**[तृप्नुतः]** 'तृपट् प्रीणने' (१३०८) तृप् । वर्त्त० तस् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु ।

**[तृप्नुवन्ति]** 'तृपट् प्रीणने' (१३०८) तृप् । वर्त्त० अन्ति । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'भ्रू-श्नोः' (२।१।५३) उव् ।

**[तृप्नुवन्]** तृप् । तृप्नोतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'भ्रू-श्नोः' (२।१।५३) उव् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[तृप्नुवानः]** तृप् । तृप्नोतीत्येवंशीलः । 'वयः शक्ति-शीले' (५।२।२४) शानप्र०→आन । 'स्वादेः श्नुः' (३।४।७५) श्नुप्र०→नु । 'भ्रू-श्नोः' (२।१।५३) उव् ।

**[आचार्यानी]** आचार्यस्य भार्या = आचार्यानी । 'मातुला-ऽऽचार्योपाध्यायाद् वा' (२।४।६३) ङीप्र० - आनन्तश्च ।

**[आचार्यभोगीनः]** आचार्यभोगाय हितः । 'भोगोत्तरपदा-ऽऽत्मभ्यामीनः' (७।१।४०) ईनप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[नृनमनः]** नृ 'णमं प्रह्वत्वे' (३८८) णम् । 'पाठे धात्वादेर्णो नः' (२।३।९७) नम् । नमन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'अमोऽकम्यमि-चमः' (४।२।२६) ह्रस्वः । नॄन् नमयतीति । 'नन्द्यादिभ्योऽनः' (५।१।५२) अनप्र० । 'णेरनिटि' (४।३।८३) णिग्लोपः ।

**[दर्भानूपः]** अनु-अप् । अनुगता आपो यत्र तत् । 'ऋक्-पूः-पथ्यपोऽत्' (७।३।७६) अत्समासान्तः । 'अनोर्देशे उप्' (३।२।११०) उप् आदेशः । दर्भस्याऽनूपः ।

**[सुप्रख्येन]** सु-प्र 'ख्यांक् प्रकथने' (१०७१) ख्या । सुप्रख्यायते । 'उपसर्गादातो डोऽश्यः' (५।१।५६) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः, तेन ॥छ॥

### पाठे धात्वादेर्णो नः ॥२।३।९७॥

**[धात्वादेः]** धातोरादिर्धात्वादिस्तस्य ।

**[प्रणाटयति]** प्र 'णट नृत्तौ' (१८७) णट् । अनेन नट् । प्रनटन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० →इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अदुरुपसर्गाऽन्तरो ण-हिनु-मीना-ऽऽनेः' (२।३।७७) न०→ण० ॥छ॥

### षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः ॥२।३।९८॥

**[अष्ट्यैष्ठिवष्वष्कः]** ष्ट्यैश्च ष्ठिवश्च ष्वष्क् च = ष्ट्यैष्ठिवष्वष्क्, न ष्ट्यैष्ठिवष्वष्क् = अष्ट्यैष्ठिवष्वष्क् । 'नञत्' (३।२।१२५) न०→अ०, तस्य ।

**[सहते]** 'षहि मर्षणे' (९९०) षह् । अनेन सह् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[सिञ्चति]** 'षिचींत् क्षरणे' (१३२१) षिच् । अनेन सिच् । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०→अ ।

'मुचादि-तृफ-दफ-गुफ०' (४।४।९९) नोऽन्तः ।

**[षण्ढीयति]** षण्ढ । षण्ढमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'क्यनि' (४।३।११२) ई । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[लषति]** 'लषी कान्तौ' (९२७) लष् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[ष्टयायति]** 'ष्टयैं संघाते' (३९) ष्टयै । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[ष्ठीवति]** 'ष्ठिवू निरसने' (४६३) ष्ठिव् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'ष्ठिवू-क्लम्वाऽऽचमः' (४।२।११०) दीर्घः ।

**[ष्ठीव्यति]** 'ष्ठिवूच् निरसने' (११६६) ष्ठिव् । वर्त्त० तिव् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः ।

**[ष्वष्कते]** 'ष्वष्कि गतौ' (६२९) ष्वष्क् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।।छ।।

**ऋ-र लृ-लं कृपोऽकृपीटादिषु** ।।२।३।९९।।

**[ऋर लृलम्]** आ च र् च = ऋर्, तस्य । 'रोर्यः' (१।३।२६) र०→य० । 'स्वरे वा' (१।३।२४) यलोपः । लृश्च लश्च = लृलम् ।

**[अकृपीटादिषु]** कृपीट आदिर्येषां ते = कृपीटादयः । न कृपीटादयोऽकृपीटादयः । 'नञत्' (३।२।१२५) न०→अ०, तेषु ।

**[क्लृप्तः]** 'कृपौङ् सामर्थ्ये' (९५९) कृप् । क्लृप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[क्लृप्तवान्]** 'कृपौङ् सामर्थ्ये' (९५९) कृप् । क्लृप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०→तवत् ।

**[क्लृप्यते]** कृप् । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य । अनेन ।

**[चिक्लृप्सति]** कृप् । कल्पितुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) कृप् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) कृ०→क० । 'सन्यस्य' (४।१।५९) इ ।

**[अचीक्लृपत्]** कृप् । कल्पमानं प्रायुक्त । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । अद्यतनी दि→त् । 'णि-श्रि-द्रु-स्रु-कमः कर्त्तरि ङः' (३।४।५८) ङप्र०→अ । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) कृप् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) कृ०→क० । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'असमानलोपे०' (४।१।६३) इ । 'लघोर्दीर्घोऽस्वरादेः' (४।१।६४) ई । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[कल्पयति]** कृप् । कल्पन्तं(मानं) प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । वर्त्त० तिव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[कल्पिता]** कृप् । श्वस्तनी ता । 'धूगौदितः' (४।४।३८) इट् । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । अनेन र० →ल० ।

**[कल्प्ता]** कृप् । श्वस्तनी ता । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । अनेन र०→ल० ।

**[कल्पकः]** कृप् । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । अनेन र०

→ल० ।

**[कल्पः]** कृप् । कल्पते । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र०→अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । अनेन र०→ल० ।

**[चलीक्लृप्यते]** कृप् । भृशं पुनः पुनर्वा कल्पते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) कृप् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) कृ०→क० । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'ऋमतां री' (४।१।५५) री । वर्त्त० ते । अनेन र०→ल० ।

**[चलीकल्प्ति]** कृप् । भृशं पुनः पुनर्वा कल्पते । 'व्यञ्जनादेरेकस्वराद्०' (३।४।९) यङ्प्र०→य । 'सन्-यङश्च' (४।१।३) कृप्द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ऋतोऽत्' (४।१।३८) कृ०→क० । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'ऋमतां री' (४।१।५५) री । 'बहुलं लुप्' (३।४।१४) यङ्लोपः । वर्त्त० तिव् । अनेन र०→ल० ।

**[कृपीटम्]** कल्पते शीर्षं मण्डनायेति कृपीटम् । 'तृ-कृ-कृपि-कम्पि-कृषिभ्यः कीटः' (उणा० १५१) कीटप्र०→ईट ।

**[कृपणः]** कल्पते निजं धनं परलोकायेति । 'कृ-गृ-पृ-कृपि-वृषिभ्यः कित्' (उणा० १८८) किद् अणप्र० ।

**[कृपाणः]** कल्पते शत्रुहननायेति । 'कृपि-विषि-वृषि-धृषि-मृषि-युषि-द्रुहि- ग्रहेराणक्' (उणा० १९१) आणक्प्र०→आण ।

**[कृपः]** कल्पते । 'नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः' (५।१।५४) कप्र०→अ ।

**[कर्पूरः]** कल्पते घ्राणेन्द्रियाप्यायनायेति । 'मी-मसि-पशि-खटि-खडि-खर्जि-कर्जि-सर्जि-कृपि-बल्लि-मण्डिभ्य ऊरः' (उणा० ४२७) ऊरप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । 'र्हादर्ह-स्वरस्याऽनु नवा' (१।३।३१) द्वित्वम् ।

**[कर्परः]** कल्पते जठराग्नये इति । 'जठर-क्रकर-मकर-शंकर-कर्पर-कूर्पर-तोमर-पामर-प्राद्मर-सगर-नगर-तगरोर्दरा-ऽदर-शृदर-दृदर-कृदर-कुकुन्दर-गोर्वराम्बर-मुखर-खर-डहर-कुञ्जराजगरादयः' (उणा० ४०३) अरप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[कर्पटः]** कल्पते शीतापहारायेति । 'दिव्यवि-श्रु-कु-कर्बि-शकि-कङ्कि-कृपि-चपि-चमि-कम्येधि-कर्कि-मर्कि-कक्खि-तृ-कृ-सृ-भृ-वृभ्योऽटः' (उणा० १४२) अटप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ।

**[कर्पटिः]** कल्पते । 'कृपि-शकिभ्यामटिः' (उणा० ६३०) अटिप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् ॥छ॥

## उपसर्गस्याऽयौ ॥२।३।१००॥

**[उपसर्गस्य]** उपसर्ग षष्ठी ङस् ।

**[अयौ]** अयि सप्तमी ङि ।

**[प्लायते]** प्र 'अयि गतौ' (७९०) अय् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । अनेन र०→ल० ।

**[पलायते]** परा 'अयि गतौ' (७९०) अय् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'समानानां तेन दीर्घः' (१।२।१) दीर्घः । अनेन रा०→ला० ।

**[पल्ययते]** परि 'अयि गतौ' (७९०) अय् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'इवर्णादेरस्वे०' (१।२।२१) यत्वम् । अनेन र०→ल० ।

**[प्लत्ययते]** प्रति 'अयि गतौ' (७९०) अय् । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'इवर्णादेरस्वे०'

(१।२।२१) यत्वम् । अनेन र०→ल० ।

**[निलयनम्]** निर्-अयन । निश्चितमयनम् । 'ऋफिडादी०' (२।३।१०४) र०→ल० ।

**[दुलयनम्]** दुष्टमयनम् । 'ऋफिडादीनां डश्च लः' (२।३।१०४) र०→ल० ।

**[प्रायः]** प्र 'इंण्क् गतौ' (१०७५) इ । प्रेयते । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[परायः]** परा 'इंण्क् गतौ' (१०७५) इ । परेयते । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् ।।छ।।

**ग्रो यङि ।।२।३।१०१।।**

**[ग्रः]** गॄ षष्ठी ङस् ।

**[यङि]** यङ् सप्तमी ङि ।

**[निजेगिल्यते]** नि 'गॄत् निगरणे' (१३३५) गॄ । गर्हितं निगिरति । 'गॄ-लुप-सद-चर-जप-जभ-दश-दहो गर्ह्ये' (३।४।१२) यङ्प्र०→य । 'ॠतां क्ङितीर्' (४।४।११६) इर् । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ग-होर्जः' (४।१।४०) गि०→जि० । 'आ गुणावन्यादेः' (४।१।४८) गु० ए । अनेन र० →ल० ।।छ।।

**नवा स्वरे ।।२।३।१०२।।**

**[नवा]** नवा प्रथमा सि ।

**[स्वरे]** स्वर सप्तमी ङि ।

**[गिलति, गिरति]** 'गॄत् निगरणे' (१३३५) गॄ । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०→अ । 'ॠतां क्ङितीर्' (४।४।११६) गिर् ।

**[निगलनम्, निगरणम्]** निगीर्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'नामिनो गुणो०' (४।३।१) गु० अर् ।

**[निगालकः, निगारकः]** निगिरतीति । 'णक-तृचौ' (५।१।४८) णकप्र० → अक० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । अनेन र०→ल० ।

**[निगीर्णः]** निगीर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ॠतां क्ङितीर्' (४।४।११६) गिर् । 卐'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) त०→न० । 'रपूवर्णान्नो ण०' (२।३।६३) न०→ण० । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः ।

**[निगीर्णवान्]** निगीर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०→तवत् । शेषं 'निगीर्णः' वत् ।

**[निगाल्यते, निगार्यते]** नि 'गॄत् निगरणे' (१३३५) गॄ । निगिरन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलिहलेः' (४।३।५१) वृ० आर् । वर्त्त० ते । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'णेरनिटि' (४।३।८३) णिग्लोपः । अनेन र०→ल० ।

**[गिरौ]** गिरत इति क्विप् गिरौ । 'ॠतां क्ङितीर्' (४।४।११६) इर् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ।

P 卐 धातुपारायणे-क्रियारत्नसमुच्चये-श० म० न्यासानुसन्धाने 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त० → न० ।

[गिरः] 卐 गिरन्तीति क्विप् गिरः । 'ॠतां क्ङितीर्' (४।४।११६) इर् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ॥छ॥

**परेर्घा-ऽङ्क-योगे ॥२।३।१०३॥**

[**परेः**] परि षष्ठी ङस् ।

[**घाऽङ्कयोगे**] घश्च अङ्कश्च योगश्च = घाऽङ्कयोगम्, तस्मिन् ।

[**पलिघः, परिघः**] परि 'हनंक् हिंसा-गत्योः' (११००) हन् । +परि = समन्तात् हन्तीति परिघः । 'परेर्घः' (५।३।४०) अल्प्र० परिघनिपातः ।

[**पल्यङ्कः, पर्यङ्कः**] अङ्कं परिगतोऽङ्केन वा परिगतः ।

[**पलियोगः, परियोगः**] परि = समन्तात् योगः । अनेन र०→ल० ॥छ॥

**ऋफिडादीनां डश्च लः ॥२।३।१०४॥**

[**ऋफिडादीनाम्**] ऋफिड आदिर्येषां ते = ऋफिडादयस्तेषाम् ।

[**ऋफिलः, ऋफिडः**] 'ऋफ हिंसायाम्' (१३७९) ऋफ् । अर्फतीति (ऋफतीति) बाहुलकादिडः इडप्र० ।

[**लृतकः, ऋतकः**] ऋत 'कैं शब्दे' (३६) कै । 'आत् सन्ध्यक्षरस्य' (४।२।१) का । ऋतं कायतीति । 'आतो डोऽह्वा-वा-मः' (५।१।७६) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

[**कपलिका, कपरिका**] कं परं यस्यां सा । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

[**तिल्पिलीकम्, तिर्पिरीकम्**] 'तृपौच् प्रीतौ' (११८९) तृप् । तृप्यतेऽनेन । 'सृणीका-स्तीक-प्रतीक-पूतीक-समीक-वाहीक-वाह्लीक-वल्मीक-कल्मलीक-तिन्तिडीक्-कङ्कणीक-किङ्किणीक-पुण्डरीक-चञ्चरीक-फर्फरीक-झर्झरीक-घर्घरीकाऽऽदयः' (उणा० ५०) तिल्पिलीकनिपातः ।

[**अङ्गुलिः, अङ्गुरिः**] 'अगु गतौ' (८३) अग् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । अङ्गति = अङ्गुरिः । 'मस्यसि-घसि-जस्यङ्गि-सहिभ्य-उरिः' (उणा० ६९९) उरिप्र० ।

[**पुलुषः, पुरुषः**] 'पृश् पालन-पूरणयोः' (१५३२) पृ । पृणातीति । 'विदिपृभ्यां कित्' (उणा० ५५८) किद् उषप्र० । 'ओष्ठ्यादुर्' (४।४।११७) उरादेशः ।

[**तलुनः, तरुणः**] 'तॄ प्लवन-तरणयोः' (२७ ) तॄ । तरतीति । 'यम्यजि-शक्यर्जि-शी-यजि-तृभ्य उनः' (उणा० २८८) उनप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

[**सलिलम्, सरिरम्**] 'सृं गतौ' (२५) सृ । सरति निम्नप्रदेशमिति । 'मदि-मन्दि-चन्दि-पदि-खदि-सहि-वहि-कु-सृभ्य इरः' (उणा० ४१२) इरप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

[**अलम्, अरम्**] 'ऋंक् गतौ' (११३५) ऋ । इयर्त्ति = गच्छति निषेधमिति अरम् । बाहुलकादम् । 'अली भूषण-पर्याप्ति-वारणेषु' (९९९) अल् । अचि अलम् ।

[**कलीलः, करीरः**] 'कृत् विक्षेपे' (१३३४) कृ । किरतीति । 'कृ-शृ-पृ-पूग्-मञ्जि-कुटि-कटि-पटि-कण्डि-शौण्डि-हिंसिभ्य ईरः' (उणा० ४१८) ईरप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

---

P 卐 गिरन्तीत्येवंशीलाः ।

P + परिहन्यतेऽनेन ।

**[पांसुलः, पांसुरः]** पांसु । पांसुरत्राऽस्ति । 'मध्वादिभ्यो रः' (७।२।२६) रप्र० ।

**[लेखा, रेखा]** रिखि-लिखि समानार्थः सौत्रः ।

**[लिक्षा, रिक्षा]** 'रिष हिंसायाम्' (५१५) रिष् । रिष्यंते इति । 'ऋजि-रिषि-कुषि-व्रश्च्युन्दि-शृभ्यः कित्' (उणा० ५६७) कित् सप्र० । 'ष-ढोः कस्सि' (२।१।६२) ष०→क० । 'नाम्यन्तस्था-कवर्गात्०' (२।३।१५) स०→ष० । क-षसंयोगे क्ष । 'आत्' (२।४।१८) आप् । 'समानानां०' (१।२।१) दीर्घः ।

**[लोहितम्, रोहितम्]** 'रुहं जन्मनि' (९८८) रुह् । रोहति = प्रादुर्भवति रोहितम् । 'हृ-श्या-रुहि-शोणि-पलिभ्य इतः' (उणा० २१०) इतप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[इला भूमिः, इरा अमृतम्]** 'इंण्क् गतौ' (१०७५) इ । एतीति । 'इण्-धाग्भ्यां वा' (उणा० ३८९) किद् रप्र० । 'आत्' (२।४।१८) आप् ।

**[तल्पलो गजपृष्ठैकदेशः, तर्परः पशूनां कण्ठघण्टः]** 'तृपौच् प्रीतौ' (११८९) तृप् । तल्पतीति (तृप्यतीति) । 'जठर-क्रकर-मकर-शंकर-कर्पर-कूर्पर-तोमर-पामर-प्राद्मर-सगर०' (उणा० ४०३) तर्परनिपातः ।

**[बडिशम्, बलिशम्]** बडिशं = मत्स्यबन्धनम् ।

**[डिण्डिमः]** डिण्डिमेति ध्वनिमततीति । 'क्वचित्' (५।१।१७१) डप्र० । 'डिम हिंसायाम्' (सौत्रो धातुः ५४) डिम् । डेमति । 'डिमेः कित्' (उणा० ३५६) किद् डिमप्र० ।।छ।।

**जपादीनां पो वः ।।२।३।१०५।।**

**[जपादीनाम्]** जपा आदिर्येषां ते = जपादयस्तेषाम् ।

**[पारापतः]** पार 'पत्लृ गतौ' (९६२) पत्, आङ्पूर्व० । पारमापततीति । 'लिहादिभ्यः' (५।१।५०) अच्प्र० ।।छ।।

**द्वितीयस्याऽध्यायस्य तृतीयः पादः समाप्तः ।।छ।।**

॥ अर्हम् ॥

## ॥ अथ द्वितीयाऽध्यायस्य चतुर्थः पादः ॥

### स्त्रियां नृतोऽस्वस्रादेर्ङीः ॥२।४।१॥

**[स्त्रियाम्]** स्त्री सप्तमी ङि । 'स्त्रीदूतः' (१।४।२९) दाम् ⟶ आम् । 'स्त्रियाः' (२।१।५४) इय् ।

**[नृतः]** न् च ऋच्च = नृत्, तस्मात् ।

**[अस्वस्रादेः]** स्वसा आदिर्यस्याऽसौ स्वस्रादिः । न स्वस्रादिः = अस्वस्रादिः । 'नञत्' (३।२।१२५) न०⟶अ०, तस्मात् ।

**[अतिराज्ञी]** 'राजृग् दीप्तौ' (८९३) राज् । राजते-शोभते छत्रचामरादिभिरिति राजा । 'उक्षि-तक्ष्यक्षीशि-राजि-धन्वि-पञ्चि-पूषि-क्लिदि-स्निहि-नु-मस्जेरन्' (उणा० ९००) अन्प्र० । 卐राजानमतिक्रान्ता (या) सा अतिराज्ञी । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न०⟶ञ० ।

**[दण्डिनी]** दण्डो विद्यते यस्याः सा । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[छत्रिणी]** छत्रं विद्यते यस्याः सा । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी । 'रषृवर्णान्नो ण०' (२।३।६३) न०⟶ण० ।

**[कर्त्री]** 'डुकृंग् करणे' (८८८) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र०⟶तृ । अनेन ङी । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[हर्त्री]** 'हृंग् हरणे' (८८५) हृ । हरतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० ⟶ तृ । अनेन ङी । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[अतिस्वसा]** स्वसारमतिक्रान्ता (या) सा । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो-ऽनेहसश्च सेर्डाः' (१।४।८४) सि०⟶डा० ⟶आ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[परमस्वसा]** परमा चासौ स्वसा च = परमस्वसा ।

**[तिस्रः]** त्रि प्रथमा जस् । द्वितीया शस् । 'त्रि-चतुरस्तिसृ-चतसृ स्यादौ' (२।१।१) तिसृ । 'ऋतो रः स्वरेऽनि' (२।१।२) र० ।

---

P 卐 पूजितो राजा = अतिराजा, स्त्री चेत् अतिराज्ञी ।

**[चतस्रः]** चतुर् प्रथमा जस् । द्वितीया शस् । 'त्रि-चतुरस्तिसृ-चतसृ स्यादौ' (२।१।१) चतसृ । 'ऋतो रः स्वरेऽनि' (२।१।२) र० ।

**[अतिदध्न्या कन्यया]** दध्यतिक्रान्ता सा = अतिदधिः, तया । 'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्याऽन्' (१।४।६३) अन् । 'अनोऽस्य' (२।१।१०८) अलोपः ।।छ।।

**अधातूदृदितः ॥२।४।२॥**

**[अधातूदृदितः]** न धातुरधातुः । उच्च ऋच्च = उदृतौ, उदृताविदनुबन्धौ यस्य सः = उदृदित् । अधातुश्चासौ उदृदिच्च = अधातूदृदित्, तस्मात् ।

**[भवती]** 'भांक् दीप्तौ' (१०६१) भा । भातीति । 'भातेर्डवतुः' (उणा० ८८६) डवतुप्र०→अवत् । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः ।

**[गोमती]** गावो विद्यन्ते यस्याः सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०→मत् ।

**[यवमती]** यवा विद्यन्ते यस्यां सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०→मत् ।

**[प्रेयसी]** प्रिया इयं, प्रिया इयं, इयमनयोर्मध्येऽतिशयेन प्रिया = प्रेयसी । 'गुणाङ्गाद् वेष्ठेयसू' (७।३।९) ईयसुप्र० →ईयस् । 'प्रिय-स्थिर-स्फिरोरु-गुरु-वहुल-तृप्र-दीर्घ-वृद्ध-वृन्दारकस्येमनि च प्रा-स्था-स्फा-वर-गर-वंह-त्रप-द्राघ-वर्ष-वृन्दम्' (७।४।३८) प्रिया० → प्रादेशः । 'अवर्णस्येवर्णादिनैदोदरल्' (१।२।६) ए ।

**[विदुषी]** 'विदक् ज्ञाने' (१०९९) विद् । वेत्तीति । 'वा वेत्तेः क्वसुः' (५।२।२२) क्वसुप्र०→वस् । 'क्वसुष्मतौ च' (२।१।१०५) उषादेशः । अनेन ङी ।

**[पचन्ती]** 'डुपचींष् पाके' (८९२) पच् । पचतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । अनेन ङी । 'श्य-शवः' (२।१।११६) अन्त० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[दीव्यन्ती]** 'दिवूच् क्रीडा-जयेच्छा-पणि-द्युति-स्तुति-गतिषु' (११४४) दिव् । दीव्यतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'दिवादेः श्यः' (३।४।७२) श्यप्र०→य । अनेन ङी । 'श्य-शवः' (२।१।११६) अन्त० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः ।

**[महती]** अर्ह (५६४) - 'मह पूजायाम्' (५६५) मह् । 卐 महतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० →अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । अनेन ङी ।

**[सुकन्]** सु 'कसुकि गति-शातनयोः' (११२०) कस् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः = कंस् । सुष्ठु कंस्ते मार्गे गच्छतीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) सलोपः ।

**[सुकंसौ]** सुष्ठु कंसाते इति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा औ ।

**[सुहिन्]** सु 'हिसु हिंसायाम्' (१४९४) हिस् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । सुष्ठु हिनस्तीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) सलोपः ।

P 卐 महान्त इति । 'द्रुहि-वृहि-महि-पृषिभ्यः कतः' (उणा० ८८४) किद् अतृप्र० ।

**[सुहिंसौ स्त्रियौ]** सुष्ठु हिंस्त इति क्विप् = सुहिंसौ । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ।।छ।।

**अञ्चः** ।।२।४।३।।

**[प्राची]** प्र 'अञ्चू गतौ च' (१०५) अञ्च् । प्राञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । अनेन ङी । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अच्० → च० - पूर्विला दीर्घः ।

**[प्रतीची]** प्रति 'अञ्चू गतौ च' (१०५) अञ्च् । प्रत्यञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । अनेन ङी । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अच्० → च० - पूर्विला दीर्घः ।

**[अपाची]** अप 'अञ्चू गतौ च' (१०५) अञ्च् । अपाञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । अनेन ङी । 'अच्च् प्राग् दीर्घश्च' (२।१।१०४) अच्० → च० - पूर्विला दीर्घः ।

**[उदीची]** उत् 'अञ्चू गतौ च' (१०५) अञ्च् । उदञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । अनेन ङी । 'उदच उदीच्' (२।१।१०३) उदच्० → उदीचादेशः ।।छ।।

**ण-स्वरा-ऽघोषाद् वनो रश्च** ।।२।४।४।।

**[णस्वराघोषाद्]** णश्च स्वरश्च अघोषश्च = णस्वराघोषम्, तस्मात् ।

**[अवावरी]** 'ओणृ अपनयने' (२७३) ओण् । ओणतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) वन्प्र० । 'वन्याङ् पञ्चमस्य' (४।२।६५) ण०→आ० । 'ओदौतोऽवाव्' (१।२।२४) अव् । अनेन ङी - न०→र० ।

**[धीवरी]** 'डुधांग्क् धारणे च' (११३९) धा । दधातीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) क्वनिप्प्र० → वन् । ईर्व्यञ्जने० (४।३।९७) आ०→ई० । अनेन ङी - न०→र० ।

**[अतिधीवरी]** धीवानमतिक्रान्ता सा । अनेन ङी ।

**[पीवरी]** 'पां पाने' (२) पा । पिबतीति । 'मन्-वन्-क्वनिप्०' (५।१।१४७) क्वनिप्प्र०→वन् । ईर्व्यञ्जने० (४।३।९७) आ०→ई० । अनेन ङी - न०→र० ।

**[सहकृत्वरी]** सह 'डुकृंग् करणे' (८८८) कृ । सह करोतीति । 'सह-राजभ्यां कृग्-युधेः' (५।१।१६७) क्वनिप्प्र० → वन् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । अनेन ङी - न०→र० ।

**[सुत्वरी]** 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सु । सुनोतीति । 'सु-यजोर्ङ्वनिप्' (५।१।१७२) ङ्वनिप्प्र०→वन् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । अनेन ङी - न०→र० ।

**[मेरुदृश्वरी]** मेरु 'दृशृं प्रेक्षणे' (४९५) दृश् । मेरुं दृष्टवान् । 'दृशः क्वनिप्' (५।१।१६६) क्वनिप्प्र०→वन् । अनेन ङी - न०→र० ।

**[सहयुध्वा]** सह 'युधिंच् सम्प्रहारे' (१२६०) युध् । सह युध्यति(ते) । 'सह-राजभ्यां कृग्-युधेः' (५।१।१६७) क्वनिप्प्र०→वन् । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[यज्वा स्त्री]** यजीं देवपूजा-सङ्गतिकरण-दानेषु (९९१) यज् । इष्टवान् = यज्वा । 'सु-यजोर्ङ्वनिप्' (५।१।१७२) ङ्वनिप्प्र०→वन् । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[शर्वरी]** 'शृश् हिंसायाम्' (१५३१) शृ । शृणातीति । 'मन-वन्-क्वनिप्-विच्-क्वचित्' (५।१।१४७) वन्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ।

**[शुनी]** 'ट्वोश्वि गति-वृद्ध्योः' (९९७) श्वि । श्वयतीति । 'श्वन्-मातरिश्वन्-मूर्धन्-पीहन्नर्यमन् - विश्वप्सः-परिज्वन्-महन्नहन्-मघवन्नथर्वन्निति' (उणा० ९०२) अन्प्र० - अन्तलोपश्च । 'स्त्रियां नृतोऽस्वस्रादेर्डीः' (२।४।१) डी । 'श्वन-युवन्-मघोनो०' (२।१।१०६) व०⟶उ० ।

**[अतिशुनी]** श्वानमतिक्रान्ता सा ।

**[मघोनी]** 'मघुङ् कैतवे च' (६४१) मघ् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) मङ्घ् । मङ्घते मघवा = इन्द्रः, स्त्री चेत् । 'श्वन्-मातरिश्वन्-मूर्धन्-पीहन्नर्यमन्-विश्वप्सः-परिज्वन्-महन्नहन्-मघवन्नथर्वन्निति' (उणा० ९०२) अन्प्र०-मङ्घेर्नलोपोऽव् चान्तः । 'स्त्रियां नृतोऽस्वस्रादेर्डीः' (२।४।१) डीप्र० । 'श्वन्-युवन्-मघोनो डीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व०⟶उ० । 'अवर्णस्येवर्णादिनैदोदरल्' (१।२।६) ओ ॥छ॥

### वा बहुव्रीहेः ॥२।४।५॥

**[प्रियावावरी, प्रियावावा स्त्री]** प्रिय 'ओणृ अपनयने' (२७३) ओण् । ओणतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) वन्प्र० । 'वन्याङ् पञ्चमस्य' (४।२।६५) ण०⟶आ० । 'ओदौतोऽवाव्' (१।२।२४) अव् । प्रियोऽवावा यस्याः सा । अनेन डी - न०⟶र० । द्वितीये सर्वत्र 'नि दीर्घः' (१।४।८५) दीर्घः । 'दीर्घङ्याव्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।

**[बहुधीवरी, बहुधीवा]** बहु 'डुधांग्क् धारणे च' (११३९) धा । दधातीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) वन्प्र० । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ०⟶ई० । बहवो धीवानो यस्यां सा । अनेन डी - न०⟶र० ।

**[बहुमेरुदृश्वरी, बहुमेरुदृश्वा स्त्री]** बहु मेरु 'दृशूं प्रेक्षणे' (४९५) दृश् । मेरुं दृष्टवतीति । 'दृशः क्वनिप्' (५।१।१६६) क्वनिप्प्र०⟶वन् । बहवो मेरुदश्वानो यस्यां सा । अनेन डी - न०⟶र० ।

**[प्रिययज्वा स्त्री]** प्रिय 'यजीं देवपूजा-सङ्गतिकरण-दानेषु' (९९१) यज् । इष्टवान् । 'सु-यजोर्ङ्वनिप्' (५।१।१७२) ङ्वनिप्प्र०⟶वन् । प्रियो यज्वा यस्याः सा । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः । 'दीर्घङ्याव्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ॥छ॥

### वा पादः ॥२।४।६॥

**[द्विपदी, द्विपात्]** 'पदिंच् गतौ' (१२५७) पद् । पद्यते-पत्स्यते-अपादि-पेदे वा पादः । 'पद-रुज-विश-स्पृशो घञ्' (५।३।१६) घञ्प्र० । द्वौ पादौ यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पादस्य पाद् । अनेन डी । 'य-स्वरे पादः पदणि-क्य-घुटि' (२।१।१०२) पाद०⟶पद्० । द्वितीये 'विरामे वा' (१।३।५१) द०⟶त० ।

**[त्रिपदी, त्रिपात्]** त्रयः पादाः यस्याः सा । शेषं 'द्विपदी-द्विपात्' वत् ।

**[त्रिपात् स्त्री]** पादमाचष्टे । 'णिज्बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र०⟶इ । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । पादयतीति क्विप् । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । त्रयः पादोऽस्याः सा । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

### ऊध्नः ॥२।४।७॥

**[कुण्डोध्नी]** कुण्ड-ऊधस् । कुण्डवत् ऊधो यस्याः सा । 'स्त्रियामूधसो न्' (७।३।१६९) ऊधस्० ⟶ ऊधन्० । अनेन डी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[घटोध्नी]** घट - ऊधस् । घटवत् ऊधो यस्याः सा । 'स्त्रियामूधसो न्' (७।३।१६९) ऊधस् ⟶ ऊधन् । अनेन

ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[महोध्नी]** महत् - ऊधस् । महत् ऊधो यस्याः सा । 'जातीयैकार्थेऽच्वेः' (३।२।७०) डाप्र०→आ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अल्लोपः । 'स्त्रियामूधसो न्' (७।३।१६९) ऊधस्→ऊधन् । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[पीवरोध्नी]** पीवरं ऊधो यस्याः सा । 'स्त्रियामूधसो न्' (७।३।१६९) ऊधस्→ऊधन् । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[पञ्चकुण्डोधा]** पञ्चभिः कुण्डोध्नीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणी-सूच्योः' (२।४।९५) ङीलुक् = पञ्चकुण्डोधन् । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।।छ।।

## अशिशोः ।।२।४।८।।

**[अशिशोः]** न शिशुरशिशुः । 'नञत्' (३।२।१२५) न०→अ०, तस्मात् ।

**[अशिश्वी]** न विद्यते शिशुर्यस्याः सा । अनेन ङी । 'इवर्णादेरस्वे स्वरे य-व-र-लम्' (१।२।२१) उ०→व० ।।छ।।

## संख्यादेर्हायनाद् वयसि ।।२।४।९।।

**[संख्यादेः]** संख्या आदिर्यस्याऽसौ संख्यादिः, तस्मात् ।

**[हायनाद् वयसि]** हायन पञ्चमी ङसि । वयस् सप्तमी ङि ।

**[द्विहायनी]** जहाति कालान्तरमिति । 'हः काल-व्रीह्योः' (५।१।६८) टनण्प्र०→अन । 'आत ऐः कृञ्चौ' (४।३।५३) आ०→ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । द्वे हायने यस्याः सा, द्वौ हायनावस्या वा । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[त्रिहायणी]** त्रीणि हायनानि यस्याः सा । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'चतुस्त्रेर्हायनस्य वयसि' (२।४।७४) न०→ण० ।

**[चतुर्हायणी]** चत्वारि हायनानि यस्याः सा । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'चतुस्त्रेर्हायनस्य वयसि' (२।३।७४) न०→ण० ।

**[द्विवर्षा कन्या]** द्वे वर्षे यस्याः सा ।

**[शतहायना स्त्री]** शतेषु हायनेषु संहृता भवा वेति । 'वर्षा-कालेभ्यः' (६।३।८०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।।छ।।

## दाम्नः ।।२।४।१०।।

**[द्विदाम्नी]** द्वि-दामन् । द्वे दाम्नी यस्याः सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[त्रिदाम्नी]** त्रीणि दामानि यस्याः सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।

**[उद्दामानम् उद्दामाम् उद्दाम्नीं वडवां पश्य]** उत्-दामन् । 卐 उद्गतं दाम यस्याः सा, ताम् । 'नि दीर्घः' (१।४।८५) दीर्घः । द्वितीये 'ताभ्यां वाऽऽप् डित्' (२।४।१५) डाप्प्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । द्वितीया अम् । तृतीये 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।।छ।।

---

P 卐 उत्क्रान्तं दाम यया सा ।

## अनो वा ॥२।४।११॥

**[बहुराज्यौ, बहुराजे, बहुराजानौ]** बहवो राजानो ययोस्ते । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । द्वितीये 'ताभ्यां वाऽऽप् डित्' (२।४।१५) डाप्प्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । प्रथमा औ । 'औता' (१।४।२०) ए । तृतीये 'नि दीर्घः' (१।४।८५) दीर्घः । एवमग्रेऽपि ।

**[दीर्घाह्नी, दीर्घाहा, दीर्घाहाः शरत्]** दीर्घाण्यहानि यस्यां सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । द्वितीये 'ताभ्यां वाऽप् डित्' (२।४।१५) डाप्प्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । तृतीये 'अह्नः' (२।१।७४) न० →र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[बहुतक्ष्ण्यौ, बहुतक्षे, बहुतक्षाणौ]** बहवः तक्षाणो ययोस्ते । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । द्वितीये 'ताभ्यां वाऽऽप् डित्' (२।४।१५) डाप्प्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । प्रथमा औ । 'औता' (१।४।२०) ए । तृतीये 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[अतिराज्ञी]** राजानमतिक्रान्ता सा । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न०→ञ० ।।छ।।

## नाम्नि ॥२।४।१२॥

**[अधिराज्ञी नाम ग्रामः]** अधिको राजा यस्यां सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न०→ञ० ।

**[बहुराज्ञी नाम पुरी]** वंहवो राजानो यस्यां सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । तवर्गस्य श्चवर्ग०' (१।३।६०) न०→ञ० ।

**[बहुसाम्नी नाम पुरी]** बहूनि सामानि यस्यां सा । अनेन ङी । 'अनोऽस्य' (२।१।१०८) अलोपः ।।छ।।

## नोपान्त्यवतः ॥२।४।१३॥

**[उपान्त्यवतः]** 卐 उपान्त्यं विद्यते यस्याऽसौ । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । 'मावर्णान्तोपान्ता०' (२।१।९४) म०→व०, तस्मात् ।

**[सुपर्वा]** सु-पर्वन् । + शोभनं पर्व यस्याः सा । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[सुपर्वाणौ]** शोभनं पर्व ययोस्ते । प्रथमा औ । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[सुशर्मा]** शोभनं शर्म यस्याः सा । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[सुशर्माणौ]** शोभनं शर्म ययोस्ते । प्रथमा औ । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[प्रियश्वा]** प्रिय-श्वन् । प्रियः श्वा यस्याः सा । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[प्रियश्वानौ]** प्रियः श्वा ययोस्ते । प्रथमा औ । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[बहुराज्ञी]** बहवो राजानो यस्यां सा । 'अनो वा' (२।४।११) ङी । 'अनोऽस्य' (२।१।१०८) अलोपः । 'तवर्गस्य

---

P 卐 अन्ते भवोऽन्त्यः । 'दिगादिदेहांशाद् यः' (६।३।१२४) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । उपगतोऽन्त्यः = उपान्त्यः । उपान्त्योऽस्याऽस्ति । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०→मत् ।

P + शोभनानि पर्वाणि यस्यां सा ।

श्चवर्गo' (१।३।६०) नo→जo ।

**[अतिपर्वणी यष्टिः]** पर्व अतिक्रान्ता सा । 'स्त्रियां नृतोऽस्वस्रादेर्डीः' (२।४।१) डी ।

**[सुदण्डिनी]** सु-दण्ड । शोभनो दण्डोऽस्याऽस्ति । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्रo । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'स्त्रियां नृतोऽस्वस्रादेर्डीः' (२।४।१) डी । 'इनः कच्' (७।३।१७०) कच् प्राप्तः । 'सहात् तुल्ययोगे' (७।३।१७८) निषेधः ।।छ।।

**मनः ।।२।४।१४।।**

**[सीमा]** 'षोंच् अन्तः(न्त) कर्मणि (११५०) षो । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सो । स्यति विवादमन्तं नयतीति सीमा । 'स्यतेरी च वा' (उणाo ९१५) मन्प्रo - ईकारश्चान्तादेशः ।

**[पामा]** 'पांक् रक्षणे' (१०६७) पा । पाति = रक्षति मुखमिति । 'मन्' (उणाo ९११) मन्प्रo । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[पामानौ]** 'पांक् रक्षणे' (१०६७) पा । पाति = रक्षति मुखमिति । 'मन्' (उणाo ९११) मन्प्रo । प्रथमा औ । 'नि दीर्घः' (१।४।८५) दीर्घः ।।छ।।

**ताभ्यां वाऽऽप् डित् ।।२।४।१५।।**

**[ताभ्याम्]** तद् । सश्च सश्च = तौ । 'त्यदादिः' (३।१।१२०) एकशेषः, ताभ्याम् ।

**[डित्]** ड् इद् अनुबन्धो यस्याऽसौ ।

**[सीमे, सीमानौ]** सीमन् । अनेन आप् डित् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । प्रथमा औ । 'औता' (१।४।२०) ए ।

**[सीमाः, सीमानः]** सीमन् । अनेन आप् डित् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । प्रथमा जस् ।

**[सुपर्वे, सुपर्वाणौ]** शोभनानि पर्वाणि ययोस्ते । अनेन डाप् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । 'औता' (१।४।२०) ए ।

**[बहुराजाः]** बहवो राजानो यासु ताः । अनेन आप् डित् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः ।

**[बहुराजानः]** बहवो राजानो यासु ताः । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[उद्दामाम्, उद्दामानम्, उद्दाम्नीं वडवां पश्य]** उद्गतं दाम यस्याः सा, ताम् । शेषं (२।४।१०) सूत्रवत् ।।छ।।

**अजादेः ।।२।४।१६।।**

**[अजादेः]** 卐अजा आदिर्यस्याऽसौ अजादिस्तस्मात् ।

**[महाजा]** महती अजा यस्याः सा ।

**[परमाजा]** परमा अजा यस्याः सा ।

**[अतिभवती]** भवन्तमतिक्रान्ता सा । 'अधातूदृदितः' (२।४।२) डीप्रo ।

**[अतिमहती]** महान्तमतिक्रान्ता सा । 'अधातूदृदितः' (२।४।२) डीप्रo ।

---

P 卐 अज आदिर्यस्याऽसौ ।

**[अतिधीवरी]** धीवानमतिक्रान्ता सा । 'ण-स्वरा-ऽघोषाद् वनो रश्च' (२।४।४) ङीप्र० → ई, न० → र० ।

**[परमशूद्रा]** परमा चासौ शूद्रा च ॥छ॥

**ऋचि पादः पात्पदे ॥२।४।१७॥**

**[पात्पदे]** पाच्च पदा च = पात्पदे । प्रथमा औ । 'औता' (१।४।२०) ए ।

**[त्रिपात् ऋक्]** त्रयः पादा यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पाद् । अनेन पात् ।

**[चतुष्पात् ऋक्]** चत्वारः पादा यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पाद् । अनेन् पात् ।

**[त्रिपदा गायत्री]** त्रयः पादा यस्याः सा । सु-संख्यात्' (७।३।१५०) पाद् । अनेन पदादेशः ।

**[चतुष्पदा पङ्क्तिः]** चत्वारः पादा यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पाद् । अनेन पदादेशः ।

**[द्विपाद्, द्विपदी]** द्वौ पादौ यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पाद० → पाद् । 'वा पादः' (२।४।६) ङी विकल्पे । 'य-स्वरे पादः पदणि-क्य-घुटि' (२।१।१०२) पाद्० → पद्० ।

**[चतुष्पाद्, चतुष्पदी]** चत्वारः पादा यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पाद० → पाद्० । 'वा पादः' (२।४।६) ङी विकल्पे । 'य-स्वरे पादः पदणि-क्य-घुटि' (२।१।१०२) पाद्० → पद्० ॥छ॥

**आत् ॥२।४।१८॥**

**[खट्वा]** 'खट काङ्क्षे' (१८६) खट् । खट्यते-आकाङ्क्ष्यते शयालुभिरिति खट्वा । 'लटि-खटि-खलि-नलि-कण्यशौ-सृ-शृ-कृ-गृ-दृ-पृ- शपि -श्या-शाला-पदि ह्रसीण्भ्यो वः' (उणा० ५०५) वप्र० ।

**[अतिखट्वः]** खट्वामतिक्रान्तः असौ । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः ।

**[प्रियखट्वः]** प्रिया खट्वा यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[सोमपाः स्त्री]** सोम 'पां पाने (२) पा । सोमं पिबतीति । 'मन्-वन्-क्वनिप्-विच्-क्वचित्' (५।१।१४७) विच्प्र० । 'अप्रयोगीत्' (१।१।३७) विज्लोपः । प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ॥छ॥

**गौरादिभ्यो मुख्यान्ङीः ॥२।४।१९॥**

**[गौरादिभ्यः]** गौर आदिर्येषां ते = गौरादयस्तेभ्यः ।

**[आपच्चिकी]** आपच्चिक । आपच्चिको राष्ट्रसरूपः क्षत्रियस्तस्यापत्यं स्त्री । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'शकादिभ्यो द्रेर्लुप्' (६।१।१२०) अञ्लोपः । 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[पञ्चानड्वाहिः]** पञ्चभिः अनु(न)ड्वाहीभिः क्रीतः = पञ्चानड्वाहिः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' (२।४।९६) ह्रस्वः ।

**[दशानडु(ड्वा)हिः]** दशभिरनु(न)ड्वाहीभिः क्रीतः = दशानड्वाहिः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[आश्मरथ्यः]** अश्मरथ । अश्मरथस्याऽपत्यम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृ० आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[बहुनदा भूमिः]** बहवो नदा यस्यां सा । 'आत्' (२।४।१८) आप् ।।छ।।

**अणञेयेकण्-नञ्-स्नञ्-टिताम्** ।।२।४।२०।।

**[अणञेयेकण्नञ्स्नञ्टिताम्]** ट् इद् अनुबन्धो यस्याऽसौ टित् । अण् च अञ् च एयश्च इकण् च नञ् च स्नञ् च टिच्च = अणञेयेकण्नञ्स्नञ्टितस्तेषाम् ।

**[औपगवी]** 卐 गोः समीपं = उपगुः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । उपगोरपत्यं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृ० औ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

**[तापसी]** तपस् । तपोऽस्याऽस्तीति तापसी । 'ज्योत्स्नादिभ्योऽण्' (७।२।३४) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अनेन ङी ।

**[कुम्भकारी]** कुम्भ 'डुकृंग् करणे' (८८८ ) कृ । कुम्भं करोतीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । अनेन ङी ।

**[काण्डलावी याति]** काण्ड 'लूग्श् छेदने' (१५१९) लू । काण्डं लुनातीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । अनेन ङी ।

**[औत्सी]** उत्स । उत्सस्याऽपत्यम् । 'उत्सादेरञ्' (६।१।१९) अञ्प्र० → अ । 'वृद्धिः स्वरेष्वादेः' (७।४।१) वृ० औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[वैदी]** विद । विदस्याऽपत्यं वृद्धं स्त्री । 'विदादेर्वृद्धे' (६।१।४१) अञ्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[छात्री]** छत्रं शीलमस्य । 'अङ्स्थाच्छत्राऽऽदेरञ्' (६।४।६०) अञ्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[चौरी]** चुरा शीलमस्य । 'अङ्स्थाच्छत्राऽऽदेरञ्' (६।४।६०) अञ्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० औ । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । अनेन ङी ।

**[तापसी]** तपः शीलमस्य । 'अङ्स्थाच्छत्रादेरञ्' (६।४।६०) अञ्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ । अनेन ङी ।

**[सौपर्णेयी]** सुपर्ण्याः अपत्यम् । 'ङ्याप्त्यूङः' (६।१।७०) एयण्प्र० → एय । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः औ । अनेन ङी ।

**[वैनतेयी]** विनता । विनताया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र० → एय । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० ऐ । अनेन ङी ।

**[शिलेयी, शैलेयी]** शिलायास्तुल्या । 'शिलाया एयच्च' (७।१।११३) एयच्-एयञ्प्र० → एय । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० ऐ ।

**[आक्षिकी]** अक्ष । अक्षैर्दीव्यतीति । 'तेन जित-जयद्-दीव्यत्-खनत्सु' (६।४।२) इकण्प्र० → इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ ।

---

P 卐 उपगता गौर्येन सः ।

**[प्रास्थिकी]** प्रस्थ । प्रस्थेन क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकणप्र० ⟶ इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ ।

**[स्त्रैणी]** स्त्री । स्त्रिया अपत्यमियं वा स्त्रैणी । 'प्राग्वतः स्त्री-पुंसात् नञ्-स्नञ्' (६।१।२५) नञ्प्र० ⟶ न । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० ऐ ।

**[पौंस्नी]** पुम्स् । पुंसोऽपत्यमियं वा । 'प्राग्वतः स्त्री-पुंसात् नञ्-स्नञ्' (६।१।२५) स्नञ्प्र० ⟶ स्न । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० औ । 'पदस्य' (२।१।८९) सलोपः । 'शिड्-हेऽनुस्वारः' (१।३।४०) अनुस्वारः ।

**[जानुदघ्नी]** जानु ऊर्ध्वं प्रमाणमस्याः सा । 'वोर्ध्वं दघ्नट् द्वयसट्' (७।१।१४२) दघ्नट्प्र० ⟶ दघ्न । अनेन ङी ।

**[जानुद्वयसी]** जानु ऊर्ध्वं प्रमाणमस्याः सा । 'वोर्ध्वं दघ्नट्-द्वयसट्' (७।१।१४२) द्वयसट्प्र० ⟶ द्वयस । अनेन ङी ।

**[पञ्चतयी]** पञ्च अवयवा यस्याः सा । 'अवयवात् तयट्' (७।१।१५१) तयट्प्र० ⟶ तय ।

**[द्वयी]** द्वौ अवयवौ यस्याः सा । 'द्वि-त्रिभ्यामयट् वा'(७।१।१५२) अयट्प्र० ⟶ अय । अनेन ङी ।

**[त्रयी]** त्रयोऽवयवा यस्याः सा । 'द्वि-त्रिभ्यामयट् वा' (७।१।१५२) अयट्प्र० ⟶ अय । अनेन ङी ।

**[शाक्तीकी]** शक्ति । शक्तिरायुधमस्याः सा । 'शक्ति-यष्टेष्टीकण्' (६।४।६४) टीकण्प्र० ⟶ ईक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अनेन ङी ।

**[याष्टीकी]** यष्टि । यष्टिरायुधमस्याः सा । 'शक्ति-यष्टेष्टीकण्' (६।४।६४) टीकण्प्र० ⟶ ईक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अनेन ङी ।

**[ह्यस्तनी]** ह्यस् । ह्यो भवा = ह्यस्तनी । 'सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात्' (६।३।८८) तनट्प्र० ⟶ तन ।

**[अद्यतनी]** अद्य भवा = अद्यतनी । 'सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात्' (६।३।८८) तनट्प्र० ⟶ तन ।

**[श्वस्तनी]** श्वस् । श्वो भवा = श्वस्तनी । 'सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात्' (६।३।८८) तनट्प्र० ⟶ तन ।

**[चिरन्तनी]** चिरं भवा = चिरन्तनी । सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात् (६।३।८८) तनट्प्र० ⟶ तन ।

**[परुत्तनी]** परुत् । परुद्भवा = परुत्तनी । 'सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात्' (६।३।८८) तनट्प्र० ⟶ तन ।

**[भिक्षुचरी]** भिक्षु । भूतपूर्वा भिक्षुर्भिक्षुचरी । 'भूतपूर्वे प्चरट्' (७।२।७८) प्चरट्प्र० ⟶ चर ।

**[सक्तुधानी]** सक्तु 'डुधांग्क् धारणे च' (११३९) धा । सक्तवो धीयन्ते यया । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र० ⟶ अन ।

**[गायनी]** कैं (३६) - 'गैं शब्दे' (३७) गै । गायतीति । 'टनण्' (५।१।६७) टनण्प्र० ⟶ अन । 'आत ऐः कृञ्ञौ' (४।३।५३) ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् ।

**[कुरुचरी]** कुरु 'चर भक्षणे च' (४१०) चर् । कुरुषु चरतीति । 'चरेष्टः' (५।१।१३८) टप्र०⟶अ । अनेन ङी ।

**[पठिता विद्या]** 'पठ व्यक्तायां वाचि' (२१३) पठ् । पठ्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ⟶ त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'आत्' (२।४।१८) आप् ।

**[शुनिन्धयी]** शुनी 'ट्धें पाने' (२८) धे । शुनीं धयते(ति) । 'शुनी-स्तन-मुञ्ज-कूला-ऽऽस्य-पुष्पाट्टधेः' (५।१।११९) खश्प्र० ⟶ अ । 'खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः-ह्रस्वश्च ।

**[स्तनन्धयी]** स्तन 'ट्धें पाने' (२८) धे । स्तनं धयते(ति) । 'शुनी-स्तन-मुञ्ज-कूला-ऽऽस्य-पुष्पाट्टधेः' (५।१।११९) खश्प्र० → अ । 'खित्यनव्ययाऽरुषो मोन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः-ह्रस्वश्च । अनेन ङी ।

**[पाणिनीया कन्या]** पाणिनि । पाणिनिना प्रोक्तम् । 'दोरीयः' (६।३।३२) ईयप्र० । 'अवर्णवर्णस्य' (७।४।६८) इलोपः । पाणिनीयमधीते । 'तद् वेत्त्यधीते' (६।२।११७) अण्प्र० । 'प्रोक्तात्' (६।२।१२९) अण्लोपः । 'आत्' (२।४।१८) आप् ।

**[बहुकुम्भकारा नगरी]** बहवः कुम्भकारा यस्यां सा ।।छ।।

## वयस्यनन्त्ये ।।२।४।२१।।

**[अनन्त्ये]** न अन्त्योऽनन्त्यस्तस्मिन् ।

**[द्विवर्षा]** द्वे वर्षेऽस्याः सा ।

**[त्रिवर्षा]** त्रीणि वर्षाण्यस्याः सा ।

**[उत्तानशया]** उत्तान 'शीङ्क् स्वप्ने' (११०५) शी । उत्तानः शेते = उत्तानशया । 'ऊर्ध्वादिभ्यः कर्तुः' (५।१।१३६) अप्र० । 'आत्' (२।४।१८) आप् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[लोहितपादिका]** लोहितौ पादौ यस्याः सा । 'शेषाद् वा' (७।३।१७५) कच्प्र० → क० । 'आत्' (२।४।१८) आप् । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।।छ।।

## द्विगोः समाहारात् ।।२।४।२२।।

**[द्विगोः]** द्वौ गावौ यत्राऽसौ, तस्मात् ।

**[समाहारात्]** सम्यगाहरणमेकीभाव इति समाहारस्तस्मात् ।

**[पञ्चपूली]** पञ्चानां पूलानां समाहारः = पञ्चपूली ।

**[पञ्चाजी]** पञ्चानामजानां समाहारः = पञ्चाजी ।

**[दशराजी]** दशानां राज्ञां समाहारः । 'राजन्-सखेः' (७।३।१०६) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । अनेन ङी ।

**[द्विकुडवी]** द्वयोः कुडवयोः समाहारः । अनेन ङी ।

**[त्रिफला]** त्रयाणां फलानां समाहारः । 'अजादेः' (२।४।१६) आप् ।।छ।।

## परिमाणात् तद्धितलुक्यविस्ताऽऽचितकम्बल्यात् ।।२।४।२३।।

**[परिमाणात्]** परितः सर्वतो मानं = परिमाणम्, तस्मात् ।

**[तद्धितलुकि]** तद्धितस्य लुक् = तद्धितलुक्, तस्मिन् ।

**[अविस्ताऽऽचितकम्बल्यात्]** विस्तश्च अचितश्च 卐 कम्वल्यं च = विस्ताऽऽचितकम्बल्यम्, न विस्ताऽऽचितकम्बल्यं = अविस्ताऽऽचितकम्बल्यम् । 'नञत्' (३।२।१२५) न० → अ०, तस्मात् ।

**[द्विकुडवी]** द्वाभ्यां कुडवाभ्यां क्रीता = द्विकुडवी । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङी ।

---

P 卐 कम्वल्यश्च ।

**[त्रिकुडवी]** त्रिभिः कुडवैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङी ।

**[द्व्याढकी]** द्वाभ्यामाढकाभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङी ।

**[त्र्याढकी]** त्रिभिराढकैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङी ।

**[पञ्चाश्वा]** पञ्चभिरश्वैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[दशाश्वा]** दशभिरश्वैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[द्विशता]** द्वाभ्यां शताभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[द्विपण्या]** द्वाभ्यां पणाभ्यां क्रीता । 'पण-पाद-माषाद् यः' (६।४।१४८) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप् ।

**[द्विविस्ता]** द्वाभ्यां बिस्ताभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । +'द्वि-त्रि-बहोर्निष्क-विस्तात्' (६।४।१४४) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[त्रिविस्ता]** त्रिभिर्विस्तैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'द्वि-त्रि-बहोर्निष्क-विस्तात्' (६।४।१४४) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[द्विपरमविस्ता]** परमाश्च ते विस्ताश्च = परमविस्ताः । द्वाभ्यां परमविस्ताभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'द्वि-त्रि-बहोर्निष्क-विस्तात्' (६।४।१४४) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[द्व्याचिता]** द्वाभ्यामाचिताभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[त्र्याचिता]** त्रिभिराचितैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[द्विकम्बल्या]** द्विकम्बलोऽस्य स्यात् । 'कम्बलान्नाम्नि' (७।१।३४) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । द्वाभ्यां कम्बल्याभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'आत्' (२।४।१८) आप् ॥छ॥

### काण्डात् प्रमाणादक्षेत्रे ॥२।४।२४॥

**[अक्षेत्रे]** 'क्षिंत् निवास-गत्योः' (१३३१) क्षि । क्षियन्ति निवसन्त्युप्तानि बीजानि वृद्धिं गच्छन्त्यस्मिन्निति क्षेत्रम् । 'हु-या-मा-श्रु-वसि-भसि-गु-वी-पचि-वचि-धृ-यम्यमि-मनि-तनि-सदि-छादि-क्षि-क्षदि-लुपि-पति-धूभ्यस्त्रः' (उणा० ४५१) त्रप्र० । 'नामिनो गुणो०' (४।३।१) गु० ए । न क्षेत्रमक्षेत्रं, तस्मिन् ।

**[द्विकाण्डी रज्जुः]** द्वे काण्डे प्रमाणमस्याः सा । 'प्रमाणान्मात्रट्' (७।१।१४०) मात्रट्प्र० । 'द्विगोः संशये च' (७।१।१४४) मात्रड्लोपः । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

---

P + 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[त्रिकाण्डी रज्जुः]** त्रीणि काण्डानि प्रमाणमस्याः सा । शेषं 'द्विकाण्डी रज्जुः' वत् ।

**[द्विकाण्डा शाटी]** द्वाभ्यां काण्डाभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[त्रिकाण्डा शाटी]** त्रिभिः काण्डैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'आत्' (२।४।१८) आप् ।

**[त्रिकाण्डा क्षेत्रभक्तिः]** त्रीणि काण्डानि प्रमाणमस्याः सा । 'प्रमाणान्मात्रट्' (७।१।१४०) मात्रट्प्र० । 'द्विगोः संशये च' (७।१।१४४) मात्रड्लोपः ।।छ।।

## पुरुषाद् वा ।।२।४।२५।।

**[द्विपुरुषी, द्विपुरुषा परिखा]** द्वि-पुरुष । द्वौ पुरुषौ प्रमाणमस्याः सा । 'हस्ति-पुरुषाद् वाऽण्' (७।१।१४१) अण्प्र० । 'द्विगोः संशये च' (७।१।१४४) अण्लोपः । अनेन ङी ।

**[त्रिपुरुषी, त्रिपुरुषा परिखा]** त्रयः पुरुषाः प्रमाणमस्याः सा । 'हस्तिपुरुषाद् वाऽण्' (७।१।१४१) अण्प्र० । 'द्विगोः संशये च' (७।१।१४४) अण्लोपः । अनेन ङी । परिखन्यते । 'खनो ड-डरेकेकवक-घं च' (५।३।१३७) डप्र० ।

**[द्विपुरुषा वडवा]** द्वाभ्यां पुरुषाभ्यां क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[त्रिपुरुषा वडवा]** त्रिभिः पुरुषैः क्रीता । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।।छ।।

## रेवत-रोहिणाद् भे ।।२।४।२६।।

**[रेवतरोहिणात्]** रेवतश्च रोहिणश्च = रेवतरोहिणम्, तस्मात् ।

**[रेवती]** रेवती । रेवत्यां जाता । 'भर्तु-सन्ध्यादेरण्' (६।३।८९) अण्प्र० । 'चित्रा-रेवती-रोहिण्याः स्त्रियाम्' (६।३।१०८) अण्लोपः । 'ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणी-सूच्योः' (२।४।९५) ङीलुक् । पुनरपि अनेन ङी ।

**[रोहिणी]** रोहिणी । रोहिण्यां जाता । 'भर्तु-सन्ध्यादेरण्' (६।३।८९) अण्प्र० । 'चित्रा-रेवती-रोहिण्याः स्त्रियाम्' (६।३।१०८) अण्लोपः । 'ङ्यादेर्गौणस्या०' (२।४।९५) ङीलुक् । पुनरपि अनेन ङी ।

**[रेवतीरमणो बलः, रेवती, शुष्करेवती ?]** रे । रे विद्यते यस्याः सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । 'मावर्णान्तो०' (२।१।९४) म० → व० (?) ('नाम्नि' (२।१।९५) म० → व०) । 'अधातू०' (२।४।२) ङी । एवं शुष्करेवती ।

**[रोहिणी ?]** रोहिण । 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

## नीलात् प्राण्यौषध्योः ।।२।४।२७।।

**[नीलात्]** नील पञ्चमी ङसि ।

**[प्राण्यौषध्योः]** प्राणी च औषधिश्च = प्राण्यौषध्यौ, तयोः ।

**[नीली गौः]** नील । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[नीली औषधिः]** नील । अनेन ङी । 'अस्य ङ्या लुक्' (२।४।८६) अलोपः ।।छ।।

## क्ताच्च नाम्नि वा ॥२।४।२८॥

**[प्रबद्धविलूनी]** 'बन्धंश् बन्धने' (१५५२) बन्ध्, प्रपूर्व० । प्रबध्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त० → ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध० → द० । 'नो व्यञ्जनस्याऽनुदितः' (४।२।४५) नलोपः । 'लूगृश् छेदने' (१५१९) लू, विपूर्व० । विलूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त० → न० । प्रबद्धश्चासौ विलूनश्च = प्रबद्धविलूनः, स्त्री चेत् ।

**[प्रबद्धविलूना]** प्रबद्धा चासौ विलूना च ॥छ॥

## केवल-मामक-भागधेय-पापा-ऽपर-समाना-ऽऽर्यकृत-सुमङ्गल-भेषजात् ॥२।४।२९॥

**[केवलमामकभागधेयपापाऽपरसमानाऽऽर्यकृतसुमङ्गलभेषजात्]** केवलश्च मामकश्च भागधेयश्च पापश्च अपरश्च समानश्च आर्यकृतश्च सुमङ्गलश्च 卐भेषजश्च = केवलमामकभागधेयपापाऽपरसमानाऽऽर्यकृतसुमङ्गलभेषजम्, तस्मात् ।

**[मामकी]** ममेयम् ॥छ॥

## भाज-गोण-नाग-स्थल-कुण्ड-काल-कुश-कामुक-कट-कबरात् पक्वा-ऽऽवपन-स्थूला-ऽकृत्रिमा-ऽमत्र-कृष्णा-ऽऽयसी-रिरंसु-श्रोणि-केशपाशे ॥२।४।३०॥

**[भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरात्]** भाजश्च गोणश्च नागश्च +स्थलश्च कुण्डश्च कालश्च कुशश्च कामुकश्च कटश्च कबरश्च = भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरम्, तस्मात् ।

**[पक्वाऽऽवपनस्थूलाऽकृत्रिमाऽमत्रकृष्णाऽऽयसीरिरंसुश्रोणिकेशपाशे]** 卐卐पक्वा च आवपनं च स्थूला च अकृत्रिमा च अमत्रं च कृष्णा च आयसी च रिरंसुश्च श्रोणिश्च केशपाशश्च = पक्वाऽऽवपनस्थूलाऽकृत्रिमाऽमत्रकृष्णाऽऽयसीरिरंसुश्रोणिकेशपाशम्, तस्मिन् ॥छ॥

## नवा शोणादेः ॥२।४।३१॥

**[शोणादेः]** शोण आदिर्यस्याऽसौ शोणादिस्तस्मात् ।

**[चान्द्रभागी वनराजिः]** चन्द्रभागस्य इयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णवर्णस्य' (।४।६८) अलोपः । तन्मते ङी ॥छ॥

## इतोऽक्त्यर्थात् ॥२।४।३२॥

**[अक्त्यर्थात्]** क्तेरर्थः = क्त्यर्थः । न क्त्यर्थोऽक्त्यर्थः । 'नञत्' (३।२।१२५) न० → अ०, तस्मात् ।

**[आत्मम्भरी, आत्मम्भरिः]** आत्मन् 'डुडुभृंगक् पोषणे च' (११४०) भृ । आत्मानं बिभर्त्तीति । 'कुक्ष्यात्मोदराद् भृगः खिः' (५।१।९०) खिप्र० → इ । 'खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः । अनेन ।

**[कृतिः]** 'डुकृंग् करणे' (८८८ ) कृ । करणं = कृतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति ।

**[हृतिः]** 'हृंग् हरणे' (८८५) हृ । हरणं = हृतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति ।

**[अजननिः]** 'जनैचि प्रादुर्भावे' (१२६५) जन् । अजननं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

---

P 卐 भेषजं च । P + स्थलं च ।

P 卐卐 पक्वश्च आवपनं च स्थूलं च अकृत्रिमं च अमत्रं च कृष्णश्च आयसी च रिरंसुश्च श्रोणिश्च केशपाशश्च ।

**[अकरणिः]** 'डुकृंग् करणे' (८८८) कृ । न करणमकरणम् । अकरणं ते भूयात् । 'नञोऽनिः शापे' (५।३।११७) अनिप्र० ।

**[ज्यानिः]** 'ज्यांश् हानौ' (१५२४) ज्या । ज्यानं = ज्यानिः । 'ग्ला-हा-ज्यः' (५।३।११८) अनिप्र० ।

**[ग्लानिः]** 'ग्लैं हर्षक्षये' (३१) ग्लै । 'आत् सन्ध्यक्षरस्य' (४।२।१) ग्ला । ग्लानं = ग्लानिः । 'ग्ला-हा-ज्यः' (५।३।११८) अनिप्र० ।

**[हानिः]** 'ओहांक् त्यागे' (११३१) हा । हानं = हानिः । 'ग्ला-हा-ज्यः' (५।३।११८) अनिप्र० । 'समानानां०' (१।२।१) दीर्घः ।

**[सातिः]** 'षोंच् अन्तकर्मणि' (११५०) षो । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सो । 'आत् सन्ध्यक्षरस्य' (४।२।१) सा । सानं = सातिः । 'तिक्कृतौ नाम्नि' (५।१।७१) तिक्प्र० → ति ।

**[सुरभिगन्धिः]** सुरभिगन्धो विद्यते यस्याः सा । 'सु-पूत्युत्-सुरभेर्गन्धादिद् गुणे' (७।३।१४४) इत्प्र० → इ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

**पद्धतेः ।।२।४।३३।।**

**[पद्धती, पद्धतिः]** पाद 'हनंक् हिंसा-गत्योः' (११००) हन् । 卐पादयोः हननं = पद्धतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति । 'यमि-रमि-नमि-गमि-हनि०' (४।२।५५) नलोपः । 'दन्त-पाद-नासिका०' (२।१।१०१) पाद० → पद् (?) ('हिम-हति-काषि-ये पद्' (३।२।९६) पादस्य पद्) । 'ततो हश्चतुर्थः' (१।३।३) ह० → ध० । अनेन ।।छ।।

**शक्तेः शस्त्रे ।।२।४।३४।।**

**[शक्ती, शक्तिः]** 'शक्लृंट् शक्तौ' (१३००) शक् । +शकनं = शक्तिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति । अनेन ।

**[शक्तिः-सामर्थ्यम्]** शकनं = शक्तिः ।।छ।।

**स्वरादुतो गुणादखरोः ।।२।४।३५।।**

**[अखरोः]** न खरुः = अखरुस्तस्मात् ।

**[चिचीषुः स्त्री]** 'चिंग्ट् चयने' (१२९०) चि । चेतुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) चि द्विर्वचनम् । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० । चिचीषणम् । 'सन्-भिक्षा-ऽऽशंसेरुः' (५।२।३३) उप्र० ।

**[खरुरियम्]** खरुरियं सिता, उक्तं च - 'खरुः स्यादश्व-हरयोर्दर्प-दन्त-सितेषु च' ।।छ।।

**श्येतैत-हरित-भरत-रोहिताद् वर्णात् तो नश्च ।।२।४।३६।।**

**[श्येतैतहरितभरतरोहिताद्]** श्येतश्च एतश्च हरितश्च भरतश्च रोहितं च = श्येतैतहरितभरतरोहितम्, तस्मात् ।

**[श्येनी, श्येता]** श्येत । अनेन ङी - त० → न० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । एवमग्रेऽपि ।।छ।।

**क्नः पलिता-ऽसितात् ।।२।४।३७।।**

**[पलिताऽसितात्]** पलितश्च असितश्च = पलिताऽसितम्, तस्मात् ।

---

P 卐 पादाभ्यां हन्यते । P + शक्यते - हिंस्यते परोऽनयेति शक्तिः ।

**[पलिक्नी, पलिता]** 'पल गतौ' (९८२) पल् । पल्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । अनेन डी - त० → क्न० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । द्वितीये 'आत्' (२।४।१८) आप् ।

**[असिक्नी, असिता]** 'असूच् क्षेपणे' (१२२१) अस् । अस्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । अनेन डी - त० → क्न० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । द्वितीये 'आत्' (२।४।१८) आप् ।।छ।।

### असह-नञ्-विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः ।।२।४।३८।।

**[असहनञ्विद्यमानपूर्वपदात्]** 卐 विद्यमानः(नं) पूर्वपदं यस्याऽसौ विद्यमानपूर्वपदः । सहश्च नञ् च विद्यमानपूर्वपदश्च = सहनञ्विद्यमानपूर्वपदम्, न सहनञ्विद्यमानपूर्वपदं = असहनञ्विद्यमानपूर्वपदम्, तस्मात् ।

**[स्वाङ्गात्]** + स्वं च तद् अङ्गं च = स्वाङ्गम्, तस्मात् ।

**[अक्रोडादिभ्यः]** क्रोड आदिर्येषां ते = क्रोडादयः । न क्रोडादयोऽक्रोडादयः, तेभ्यः ।

**[पीनस्तनी, पीनस्तना]** पीनौ स्तनौ यस्यां(याः) सा ।

**[अतिकेशी,अतिकेशा माला]** केशानतिक्रान्ता सा ।

**[स्वडी, स्वडा वृश्चिकी]** सु-अड । शोभनोऽडो यस्याः सा । अडो नाम वृश्चिकाद्यवयवः कण्टकः कथ्यते ।

**[सहकेशा]*** सह विद्यमानः केशा यस्याः सा । 'सहस्य सोऽन्यार्थे' (३।२।१४३) वा सभावः ।

**[अकेशा]** न विद्यन्ते केशा यस्याः सा ।

**[विद्यमानकेशा]** विद्यमानाः केशा यस्याः सा ।

**[बहुयवा]** बहवो यवा यस्यां सा ।

**[कल्याणक्रोडा]** कल्याणी क्रोडा यस्याः सा । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । 'क्रोडोऽङ्के तिन्दुकं फले' क्रोडशब्दः स्त्री-क्लीबे । (लिङ्गानुशासने-१)

**[कल्याणखुरा]** कल्याणौ खुरौ यस्याः सा ।

**[पीनगुदा]** पीनौ गुदौ यस्याः सा ।

**[एकशफा]** एकः शफो यस्याः सा ।

**[दीर्घवाला]** दीर्घा वाला यस्याः सा ।

**[भव्यभाला]** भव्यो भालो यस्याः सा । आलवाल-पल-भाल-पलाला(:) पुं-नपुंसकाः (लिङ्गानुशासने - २८) ।

**[कल्याणगोखा]** कल्याणी गोखा यस्याः सा ।

**[किश(स)लयकरा]** किसलयवत् करौ यस्याः सा ।

**[मृणालभुजा]** मृणालवद् भुजौ यस्याः सा ।

P 卐 सहश्च नञ् च विद्यमानश्च = सहनञ्विद्यमानम्, न सहनञ्विद्यमानं = असहनञ्विद्यमानम्, असहनञ्विद्यमानं पूर्वपदं यस्य तत्तस्मात् ।

P + स्वमङ्गं = स्वाङ्गम् ।

P * सह केशैर्वर्त्तते सा ।

**[परमशिखा]** परमा शिखा यस्याः सा ।

**[बहुशोफा]** बहुः शोफः यस्याः सा ।

**[बहुकफा]** बहुः कफो यस्याः सा ।

**[बहुज्ञाना]** बहु ज्ञानं यस्याः सा ।

**[दीर्घमुखा शाला]** दीर्घं मुखं यस्याः सा ।

**[पृथुमुखी]** पृथुलं मुखं यस्याः सा ।

**[द्विपादी]** द्वयोः पादयोः समाहारः । 'सु-संख्यात् (७।३।१५०) पाद०—>पाद्० । 'द्विगोः समाहारात्' (२।४।२२) ङीप्र० ।

**[त्रिपादी]** त्रयाणां पादानां समाहारः । 'सु-संख्यात्' (७।३।१५०) पाद०—>पाद्० । 'द्विगोः समाहारात्' (२।४।२२) ङीप्र० ।।छ।।

**नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गा-ऽङ्ग-गात्र-कण्ठात्** ।।२।४।३९।।

**[नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाऽङ्गगात्रकण्ठात्]** नासिका च उदरं च ओष्ठश्च जङ्घा च दन्तश्च कर्णश्च शृङ्गं च अङ्गं च गात्रं च कण्ठश्च = नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाऽङ्गगात्रकण्ठम्, तस्मात् ।

**[तुङ्गनासिकी, तुङ्गनासिका]** तुङ्गा नासिका यस्याः सा । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[कृशोदरी, कृशोदरा]** कृशमुदरं यस्याः सा ।

**[बिम्बोष्ठी, बिम्बोष्ठा]** बिम्बाकारौ ओष्ठौ यस्याः सा ।

**[दीर्घजङ्घी, दीर्घजङ्घा]** + दीर्घे जङ्घे यस्याः सा ।

**[समदन्ती, समदन्ता]** समा दन्ता यस्याः सा ।

**[चारुकर्णी, चारुकर्णा]** चारु कर्णौ यस्याः सा ।

**[तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा]** तीक्ष्णे शृङ्गे यस्याः सा ।

**[मृद्वङ्गी, मृद्वङ्गा]** मृदु अङ्गं यस्याः सा ।

**[सुगात्री, सुगात्रा]** शोभनं गात्रं यस्याः सा ।

**[स्निग्धकण्ठी, स्निग्धकण्ठा]** स्निग्धः कण्ठो यस्याः सा ।

**[सहनासिका]** सह विद्यमाना नासिका यस्याः सा ।

**[सोदरा]** सह उदरेण वर्त्तते ।

**[अनुदरा]** न विद्यते उदरं यस्याः सा ।

**[विद्यमानोदरा]** विद्यमानमुदरं यस्याः सा ।

**[पृथुजघना]** पृथु जघनमस्याः सा ।

**[सुललाटा]** शोभनं ललाटं यस्याः सा ।

P + दीर्घा जङ्घा यस्याः सा ।

**[दृढहृदया]** दृढं हृदयं यस्याः सा ।

**[कल्याणगुल्फा]** कल्याणौ गुल्फौ यस्याः सा ।

**[सुपार्श्वा]** 卐卐 शोभनौ पार्श्वौ यस्याः सा ॥छ॥

**नख-मुखादनाम्नि ॥२।४।४०॥**

**[नखमुखात्]** नखश्च मुखं च = नखमुखम्, तस्मात् ।

**[अनाम्नि]** न नाम = अनाम, तस्मिन् ।

**[शूर्पनखी, शूर्पनखा]** शूर्पाकारा नखा यस्याः सा ।

**[अतिनखी, अतिनखा]** नखानतिक्रान्ता सा ।

**[चन्द्रमुखी, चन्द्रमुखा]** चन्द्रवन्मुखं यस्याः सा ।

**[अतिमुखी, अतिमुखा]** अतिशयेन मुखं यस्याः सा ।

**[शूर्पणखा]** शूर्पाकारा नखा यस्याः सा ।

**[व्याघ्रणखा]** व्याघ्रस्येव नखा यस्याः सा ।

**[वज्रणखा]** वज्रवन्नखा यस्याः सा ।

**[गौरमुखा]** गौरं मुखं यस्याः सा ।

**[श्लक्ष्णमुखा]** श्लक्ष्णं मुखं यस्याः सा ।

**[कालमुखा]** कालं मुखं यस्याः सा ॥छ॥

**पुच्छात् ॥२।४।४१॥**

**[पुच्छात्]** पुच्छ पञ्चमी ङसि ।

**[दीर्घपुच्छी, दीर्घपुच्छा]** दीर्घं पुच्छं यस्याः सा ।

**[अतिपुच्छी, अतिपुच्छा]** पुच्छमतिक्रान्ता (या) सा ।

**[सपुच्छा]** सह विद्यमानं पुच्छं यस्याः सा ।

**[अपुच्छा]** न विद्यते पुच्छं यस्याः सा ।

**[विद्यमानपुच्छा]** विद्यमानं पुच्छं यस्याः सा ॥छ॥

**कबर-मणि-विष-शरादेः ॥२।४।४२॥**

**[कबरमणिविषशरादेः]** कबरश्च मणिश्च 卐 विषं च शरश्च = कबरमणिविषशराः । कबरमणिविषशरा आदयो यस्याऽसौ कबरमणिविषशरादिस्तस्मात् ।

**[कबरपुच्छी]** कबरं-कर्बुरं पुच्छं यस्याः सा ।

**[मणिपुच्छी]** मणिः पुच्छे यस्याः सा ।

**[विषपुच्छी]** विषं पुच्छे यस्याः सा ।

**[शरपुच्छी]** शरवत् पुच्छं यस्याः सा ।

---

P 卐卐 शोभने पार्श्वे यस्याः सा ।

P 卐 विषश्च ।

विभिन्नसूत्रकरणान्नवा इति निवृत्तिः ।।छ।।

**पक्षाच्चोपमादेः** ।।२।४।४३।।

**[पक्षात्]** पक्ष पञ्चमी ङसि ।

**[उपमादेः]** उपमा आदिर्यस्याऽसौ उपमादिस्तस्मात् ।

**[उलूकपक्षी शाला]** उलूकस्येव पक्षो(क्षौ) यस्याः सा ।

**[उलूकपुच्छी सेना]** उलूकवत् पुच्छं यस्याः सा ।।छ।।

**क्रीतात् करणादेः** ।।२।४।४४।।

**[क्रीतात्]** क्रीत पञ्चमी ङसि ।

**[करणादेः]** करणमादिरवयवो यस्याऽसौ करणादिस्तस्मात् ।

**[अश्वक्रीती]** अश्वेन क्रीयते स्म ।

**[धनक्रीती]** धन 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । धनेन क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । अनेन ङी ।

**[वस्त्रक्रीती]** वस्त्रेण क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त० ।

**[सुक्रीता]** सुखेन क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आत्' (२।४।१८) आप् ।

**[दुष्क्रीता]** दुःखेन क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आत्' (२।४।१८) आप् । 'निर्दुर्वहिराविष्प्रादुश्चतुराम्' (२।३।९) र०→ष० ।।छ।।

**क्तादल्पे** ।।२।४।४५।।

**[अभ्रविलिप्ती द्यौः]** अभ्र 'लिपींत् उपदेहे' (१३२४) लिप्, विपूर्व० । अल्पैरभ्रैर्विलिप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[सूपविलिप्ती स्थाली]** अल्पेन सूपेन विलिप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[चन्दनानुलिप्ता स्त्री]** अनल्पेन चन्दनेनाऽनुलिप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आत्' (२।४।१८) आप् ।।छ।।

**स्वाङ्गादेरकृत-मित-जात-प्रतिपन्नाद् बहुव्रीहेः** ।।२।४।४६।।

**[स्वाङ्गादेः]** स्वाङ्गमादिर्यस्याऽसौ, तस्मात् ।

**[अकृतमितजातप्रतिपन्नात्]** कृतश्च मितश्च जातश्च प्रतिपन्नश्च = कृतमितजातप्रतिपन्नम् । न कृतमितजातप्रतिपन्नं = अकृतमितजातप्रतिपन्नं, तस्मात् ।

**[शङ्खभिन्नी]** शङ्खौ भिन्नौ यस्याः सा ।

**[ऊरुभिन्नी]** 'भिदृंपी विदारणे' (१४७७) भिद् । भिद्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'रदादमूर्च्छमदः क्तयोर्दस्य च' (४।२।६९) द० – त० → न० । ऊरू भिन्नौ यस्याः सा ।

**[केशविलूनी]** केशा विलूना यस्याः सा ।

**[गलकोत्कृती]** गलकमुत्कृतं यस्याः सा । सर्वत्र अनेन ङी ।

**[दन्तकृता]** दन्ताः कृता यस्याः सा ।

**[दन्तमिता]** दन्ता मिता यस्याः सा ।

**[दन्तजाता]** दन्ता जाता यस्याः सा ।

**[दन्तप्रतिपन्ना]** दन्ताः प्रतिपन्ना यस्याः सा । सर्वत्र 'आत्' (२।४।१८) आप्प्र०→आ ।

**[पादपतिता]** पादयोः पतिता ॥छ॥

**अनाच्छादजात्यादेर्नवा** ॥२।४।४७॥

**[अनाच्छादजात्यादेः]** आच्छादश्चासौ जातिश्च = आच्छादजातिः । न आच्छादजातिरनाच्छादजातिः । अनाच्छादजातिरादिर्यस्याऽसौ अनाच्छादजात्यादिस्तस्मात् ।

**[शाङ्गरजग्धी, शाङ्गरजग्धा]** शाङ्गर 'अदं भक्षणे' (१०५९) अद् । अद्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यपि चाऽदो जग्ध्' (४।४।१६) अद्०→जग्धादेशः । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध०→द० । 'धुटो धुटि स्वे वा' (१।३।४८) धलोपः । शाङ्गरो जग्धोऽनया सा ।

**[पलाण्डुभक्षिती, पलाण्डुभक्षिता]** पलाण्डुः लसणकन्दः कथ्यते । 'भक्षण् अदने' (१७१७) भक्ष् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । भक्ष्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि'(४।३।८३) णिच्लोपः । पलाण्डुर्भक्षितोऽनया सा । अनेन ङी ।

**[वस्त्रच्छन्ना]** वस्त्र 'छदण् अपवारणे' (१९६४) छद् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । छाद्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'णौ दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्तम्' (४।४।७४) छन्ननिपातनम् । 卐 वस्त्रं छन्नमनया सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[वसनच्छन्ना]** वसनं छन्नमनया सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

+ **[मासजाता]** मास 'जनैचि प्रादुर्भावे' (१२६५) जन् । जायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आः खनि-सनि-जनः' (४।२।६०) न०→आ० । मासो जातोऽस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[संवत्सरजाता]** संवत्सरो जातोऽस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[बहुजाता]** बहवो जाता अस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[अजाता]** न जातोऽस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[सुजाता]** शोभनो जातोऽस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[सुखजाता]** सुखेन सुखं वा जातमस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[दुःखमाता]** दुःखेन दुखं वा जातमस्याः सा । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[कुण्डकृता]** कुण्ड 'डुकृंग् करणे' (८८८ ) कृ । क्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । कुण्डं कृतं यया सा ।

---

P 卐 वस्त्रं छन्नं यया सा ।

+ बृहद्वृत्तौ मासजातादिसप्तसु उदाहरणेषु जातास्थाने याताऽस्ति ।

**[कुण्डमिता]** कुण्डं मितं यया सा ।

**[पलाण्डुजाता]** पलाण्डुर्जातो यया सा ।

**[वृक्षप्रतिपन्ना]** वृक्षः प्रतिपन्नो यया सा ।

**[शाङ्गरप्रिया]** शाङ्गरः प्रियो यस्याः सा ।।छ।।

**पत्युर्नः** ।।२।४।४८।।

**[पत्युः]** पति पञ्चमी ङसि→अस् । 'इवर्णादेरस्वे०' (१।२।२१) य० । 'खि-ति-खी-तीय उर्' (१।४।३६) उरादेशः ।

**[दृढपत्नी, दृढपतिः]** दृढः पतिर्यस्याः सा ।

**[स्थिरपत्नी, स्थिरपतिः]** स्थिरः पतिरस्याः सा ।

**[स्थूलपत्नी, स्थूलपतिः]** स्थूलः पतिरस्याः सा ।

**[वृद्धपत्नी, वृद्धपतिः]** वृद्धः पतिरस्याः सा । सर्वत्र अनेन ङी - इकारस्य च नकारः ।

**[बहुस्थूलपतिः पुरी]** बहवः स्थूलपतयो यस्यां सा ।।छ।।

**सादेः** ।।२।४।४९।।

**[सादेः]** सह आदिना वर्त्तत इति सादिः । 'सहस्य सोऽन्यार्थे' (३।२।१४३) सभावः, तस्मात् ।

**[ग्रामपत्नी, ग्रामपतिः]** ग्रामस्य पतिः । अनेन ।

**[आशापत्नी, आशापतिः]** आशायाः पतिः । अनेन ।

**[राजपत्नी]** राज्ञः पत्नी । 'ऊढायाम्' (२।४।५१) ङीप्र०→ई- इकारस्य च नकारः, ततः समासः ।

**[शूद्रपत्नी]** शूद्रस्य पत्नी । 'ऊढायाम्' (२।४।५१) ङीप्र०→ई - इकारस्य च नकारः, ततः समासः ।।छ।।

**सपत्न्यादौ** ।।२।४।५०।।

**[सपत्न्यादौ]** सपत्नी आदिर्यस्याऽसौ सपत्न्यादिस्तस्मिन् ।

**[सपत्नी]** समानः पतिर्यस्याः ।

**[एकपत्नी]** 卐 एकः पतिरस्याः, एकस्य पतिर्वा ।

**[वीरपत्नी]** वीरः पतिरस्याः सा ।

**[पिण्डपत्नी]** पिण्डः पतिरस्याः सा ।

**[भ्रातृपत्नी]** भ्राता पतिर्यस्याः सा ।

**[पुत्रपत्नी]** पुत्रः पतिर्यस्याः सा ।

**[सपत्नीभार्यः]** सपत्नी भार्या यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[सापत्नः]** सपत्न्या अयं = सापत्नः । 'तस्येदम्' (६।३।१६०) अण्प्र० । अण्लुक् । 'ङ्यादेगौणस्याक्विप०' (२।४।९५) ङीनिवृत्तिः ।।छ।।

---

P 卐 एक एव पतिर्यस्याः ।

## ऊढायाम् ॥२।४।५१॥

**[पत्नी]** पत्युर्भार्या = पत्नी ।

**[वृषलपत्नी]** वृषलस्य पत्नी ।

'सादेः' (२।४।४९) इत्यनेन समासे सति ङी स्यात्, अतो न समासः क्रियते ॥छ॥

## पाणिगृहीतीति ॥२।४।५२॥

**[पाणिगृहीतीति]** 卐卐 पाणिगृहीती इति प्रकारो यस्याऽसौ । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[पाणिगृहीती]** पाणिर्गृहीतोऽस्याः ।

**[करगृहीती]** करो गृहीतोऽस्याः, करे वा गृहीता ।

**[पाण्यात्ती]** पाणिरात्तो गृहीतोऽस्याः सा ।

**[करात्ती]** करः आत्तो यस्याः सा । अनेन ङी ।

**[पाणीगृहीता]** पाणौ गृह्यते स्म ॥छ॥

## पतिवत्न्यन्तर्वत्न्यौ भार्या-गर्भिण्योः ॥२।४।५३॥

**[पतिवत्न्यन्तर्वत्न्यौ]** पतिवत्नी च अन्तर्वत्नी च = पतिवत्न्यन्तर्वत्न्यौ ।

**[भार्यागर्भिण्योः]** भार्या च गर्भिणी च = भार्यागर्भिण्यौ, तयोः ।

**[पतिवत्नी]** 卐 पतिर्विद्यते यस्याः सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । अनेन ङीप्र० - पतिवत्नीनिपात्यते ।

**[अन्तर्वत्नी]** + अन्तर्विद्यते यस्याः सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० → मत् । अनेन ङीप्र०- अन्तर्वत्नीनिपात्यते ॥छ॥

## जातेरयान्त-नित्यस्त्री-शूद्रात् ॥२।४।५४॥

**[जातेः]** जायतेऽन्तर्वृत्ताभिधान-प्रत्ययावस्या इति जातिस्तस्मात् ।

**[अयान्तनित्यस्त्रीशूद्रात्]** योऽन्ते यस्याऽसौ यान्तः । यान्तश्च नित्यस्त्री च शूद्रश्च = यान्तनित्यस्त्रीशूद्रम्, तस्मात् ।

**[नाडायनी]** नड । नडस्याऽपत्यं वृद्धं स्त्री । 'नडादिभ्य आयनण्' (६।१।५२) आयनण्प्र०→आयन । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः । अनेन ङी ।

**[चारायणी]** चरस्याऽपत्यं वृद्धं स्त्री = चारायणी । 'नडादिभ्य आयनण्' (६।१।५२) आनयण्प्र०→आयन । 'वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते' (७।४।१) वृद्धिः । अनेन ङी ।

**[कठी]** * कठेन प्रोक्तं वेदमधीते या = कठी । 'तेन प्रोक्ते' (६।३।१८१) अण्प्र० । 'प्रोक्तात्' (६।२।१२९)

---

P 卐卐 अखण्डं सूत्रं लिखित्वा सूत्रत्वाद् जस्लुप्यते स्म । P 卐 पतिरस्याऽस्तीति ।

P + अन्तरस्याऽस्तीति निपातनादाधारादपि मतुः ।

P * कठेन प्रोक्तं वेदं वेत्त्यधीते वा । 'तेन प्रोक्ते' (६।३।१८१) इत्यण् । तस्याऽप्यग्रे 'तद्वेत्त्यधीते' (६।२।११७) इत्यण् । 'प्रोक्तात्' (६।२।१२९) इति द्वि० अण्लोपः । 'कठादिभ्यो वेदे लुप्' (६।३।१८३) इति प्रथमस्याप्यणो लोपः, ततोऽनेन ङी ।

अण्लोपः । 'तद् वेत्त्यधीते' (६।२।११७) अण्प्र० । 'कठादिभ्यो वेदे लुप्' (६।३।१८३) अण्लोपः । अनेन ङी ।

**[बह्वृची]** बह्व्यः ऋचो यस्यां सा । अनेन ङी ।

**[इभ्या]** इभ । इभमर्हति = इभ्या । 'दण्डादेर्यः' (६।४।१७८) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[क्षत्रिया]** क्षत्रस्याऽपत्यं स्त्री । 'क्षत्रादियः' (६।१।९३) इयप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[वैश्या]** विशस्याऽपत्यं स्त्री । 'अनिदम्यणपवादे च दित्यदित्यादित्य-यमपत्युत्तरपदाञ्ञ्यः' (६।१।१५) ञ्यप्र०⟶य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः = वै । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

★**[आर्या]** 'ऋंक् गतौ' (११३५) ऋ । इयर्त्ति = गच्छति पुण्यभावमित्यार्या । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०⟶य । 'नामिनोऽकलि-हलेः' (४।३।५१) वृ० आर् । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[मनुषी]** मनुष्य । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः ।

**[मत्सी]** मत्स्य । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'मत्स्यस्य यः' (२।४।८७) यलोपः ।

**[बहुशू(सू)करा भूमिः]** बहवः सूकरा यस्यां सा । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[बहुब्राह्मणा शाला]** वहवो ब्राह्मणा यस्यां सा । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[सुपर्णी]** सुपर्ण । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।१८) अलोपः ।।छ।।

**पाक-कर्ण-पर्ण-वालान्तात्** ।।२।४।५५।।

**[पाककर्णपर्णवालान्तात्]** 卐 पाकश्च कर्णश्च पर्णश्च वालश्च = पाककर्णपर्णवालम् । पाककर्णपर्णवालमन्ते यस्याऽसौ, तस्मात् ।

**[ओदनपाकी]** ओदनस्येव पाको यस्याः सा ।

**[आखुकर्णी]** + आखोरिव कर्णौ यस्याः सा ।

**[शङ्कुकर्णी]** शङ्कोरिव कर्णौ यस्याः सा ।

**[मुद्गपर्णी]** 0 मुद्गस्येव पर्णानि यस्याः सा ।

**[सालपर्णी]** सालस्येव पर्णानि यस्याः सा ।

**[गोवाली]** गौरिव वाला यस्याः सा ।

**[अश्ववाली]** अश्व इव वाला यस्याः सा । अनेन सर्वत्र ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

---

★ धातुपारायणे - श० म० न्यासानुसन्धाने च - 'ऋं प्रापणे च' 'स्वामि-वैश्येऽर्यः' (५।१।३२) इति ये अर्यः, अन्यत्र घ्यणि आर्यः । मध्यमवृत्तौ - आर्या ।

P 卐 द्वन्द्वे कृते पाककर्णपर्णवाला अन्ते यस्याऽसौ, तस्मात् ।

P + आखुवत् कर्णौ यस्याः ।

P 0 मुद्गवत् पर्णानि यस्याः ।

**[बहुपाका यवागूः]** बहुः पाको यस्याः सा । 'आत्' (२।४।१८) आप्प्र०⟶आ । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।।छ।।

**असत्-काण्ड-प्रान्त-शतैकाञ्चः पुष्पात्** ।।२।४।५६।।

**[असत्काण्डप्रान्तशतैकाञ्चः]** संश्च काण्डश्च प्रान्तश्च शतश्च एकश्च अञ्च् च = सत्काण्डप्रान्तशतैकाञ्च् । न सत्काण्डप्रान्तशतैकाञ्च् = असत्काण्डप्रान्तशतैकाञ्च् तस्मात् ।

**[पुष्पात्]** पुष्प पञ्चमी ङसि- ।

**[शङ्खपुष्पी]** शङ्खवत् पुष्पाणि यस्यां सा ।

**[सुवर्णपुष्पी]** सुवर्णवत् पुष्पाणि यस्यां सा ।

**[हिरण्यपुष्पी]** हिरण्यवत् पुष्पाणि यस्यां सा । अनेन सर्वत्र ङी ।

**[सत्पुष्पा]** सन्ति = शोभनानि पुष्पाणि यस्यां सा ।

**[काण्डपुष्पा]** काण्डवत् पुष्पाणि यस्यां सा ।

**[प्रान्तपुष्पा]** प्रान्ते पुष्पाणि यस्यां सा ।

**[शतपुष्पा]** शतं पुष्पाणि यस्यां सा ।

**[एकपुष्पा]** एकं पुष्पं यस्यां सा ।

**[प्राक्पुष्पा]** प्राञ्चि पुष्पाणि यस्यां सा ।

**[प्रत्यक्पुष्पा]** प्रत्यञ्चः पुष्पाणि यस्यां सा । 'च-जः क-गम्' (२।१।८६) च०⟶क० । 'आत्' (२।४।१८) आप्प्र० ⟶ आ । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।।छ।।

**असं-भस्त्रा-ऽजिनैक-शण-पिण्डात् फलात्** ।।२।४।५७।।

**[असंभस्त्राऽजिनैकशणपिण्डात्]** सम् च भस्त्रा च 卐 अजिनं च एकश्च शणश्च पिण्डश्च = संभस्त्राऽजिनैकशणपिण्डम् । न संभस्त्राऽजिनैकशणपिण्डं = असंभस्त्राजिनैकशणपिण्डम्, तस्मात् ।

+ **[वासीफली]** वासीवत् फलानि यस्यां सा ।

**[पूगफली]** पूगवत् फलानि यस्यां सा ।

**[दाडिमफली]** दाडिमवत् फलानि यस्यां सा । अनेन सर्वत्र ङी ।

**[संफला]** सङ्गतानि फलानि यस्यां सा ।

**[भस्त्राफला]** भस्त्रावत् फलानि यस्यां सा ।

**[अजिनफला]** अजिनवत् फलानि यस्यां सा ।

**[एकफला]** एकं फलं यस्यां सा ।

**[शणफला]** शणवत् फलं यस्यां सा ।

**[पिण्डफला]** पिण्डवत् फलं यस्यां सा । 'आत्' (२।४।१८) आप्प्र० ⟶ आ । प्रथमा सि । 'दीर्घङ्याब्०'

P 卐 अजिनश्च ।

P + [वासीफली] वासीव फलं यस्याः सा ।

(१।४।४५) सिलोपः ।।छ।।

**अनञो मूलात् ।।२।४।५८।।**

**[अनञः]** न नञ् = अनञ् । 'नञत्' (३।२।१२५) न० → अ०, तस्मात् ।

**[दर्भमूली]** 卐卐 दर्भस्येव मूलानि यस्यां सा ।

**[शीर्षमूली]** ++ शीर्षवन्मूलानि यस्यां सा ।

**[अमूला]** **O** न विद्यन्ते मूलानि * यस्यां सा = अमूला ।।छ।।

**धवाद् योगादपालकान्तात् ।।२।४।५९।।**

**[पालकान्तात्]** पालकोऽन्ते यस्याऽसौ पालकान्तः । न पालकान्तोऽपालकान्तः । 'नञत्' (३।२।१२५) न० → अ०, तस्मात् ।

**[प्रष्ठी]** प्र-स्था । प्रतिष्ठते । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र०→अ । 'इडेत्-पुसि चाऽऽतो लुक्'(४।३।९४) आलोपः । 'प्रष्ठोऽग्रगे' (२।३।३२) षत्वम् । प्रष्ठस्य भार्या = प्रष्ठी ।

**[प्रचरी]** प्रचरस्य भार्या = प्रचरी ।

**[गणकी]** 'गणण् संख्याने' (१८७४) गण् । गणयतीति गणकः । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । गणकस्य भार्या = गणकी ।

**[महामात्री]** महामात्रस्य भार्या = महामात्री ।

**[प्राष्ठी]** प्रष्ठस्येयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[प्राचरी]** प्रचरस्येयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[परिसृष्टा]** परि 'सृजंत् विसर्गे' (१३४९) सृज् । परिसृज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०→ट० । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[प्रजाता]** प्र 'जनैचि प्रादुर्भावे' (१२६५) जन् । प्रजायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आः खनि-सनि-जनः' (४।२।६०) न०→आ० ।

**[प्रसूता]** प्र 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सू । प्रसूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[गोपालिका]** गो 'पलण् रक्षणे' (१६९९) पल् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । गोः (गाः) पालयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । गोपालकस्य भार्या । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्-तत्०'- (२।४।१११) इ ।

**[पशुपालिका]** पशु 'पलण् रक्षणे' (१६९९) पल् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'ञ्णिति'

---

P ++ शीर्षवन्मूलं यस्याम् ।

P 卐卐 दर्भवन्मूलं यस्याम् ।

P **O** न विद्यन्ते मूलं यस्याम् ।

P * लघुवृत्त्यवचू० यस्याः ।

(४।३।५०) उपान्त्यवृद्धिः । पशून् पालयतीति । 'णक-तृचौ' (५।१।४८) णकप्र० ⟶ अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । पशुपालकस्य भार्या । 'आत्' (२।४।१८) आप्प्र० ⟶ आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[सहिष्णुः]** 'षहि मर्षणे' (९९०) षह् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सह् । सहत इत्येवंशीलः । 'भ्राज्यलङ्कृग्-निराकृग्-भू-सहि-रुचि-वृति-वृधि-चरि-प्रजना-ऽपत्रप इष्णुः' (५।२।२८) इष्णुप्र० । सहिष्णोर्भार्या ॥छ॥

**पूतक्रतु-वृषाकप्यग्नि-कुसित-कुसि(सी)दादै च ॥२।४।६०॥**

**[पूतक्रतुवृषाकप्यग्निकुसितकुसि(सी)दात्]** पूतक्रतुश्च वृषाकपिश्च अग्निश्च कुसितश्च कुसीदं च = पूतक्रतुवृषाकप्यग्नि-कुसितकुसीदम्, तस्मात् ।

**[पूतक्रतायी]** 'पूगृश् पवने' (१५१८) पू । पूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ⟶ त । पूताः क्रतवो येन सः = पूतक्रतुः । पूतक्रतोर्भार्या ।

**[वृषाकपायी]** वृषाकपेर्भार्या

**[अग्नायी]** अग्नेर्भार्या ।

**[कुसितायी]** कुसितस्य भार्या ।

**[कुसि(सी)दायी]** कुसीदस्य भार्या । सर्वत्र अनेन ङी-ऐकारोऽन्ते च ॥छ॥

**मनोरौ च वा ॥२।४।६१॥**

**[मनावी, मनायी, मनुः]** मनोर्भार्या । अनेन वा ङी-ङीयोगे च औकार-ऐकारोऽन्ते ॥छ॥

**वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चाऽन्तः ॥२।४।६२॥**

**[वरुणेन्द्ररुद्रभवशवमृडात्]** वरुणश्च इन्द्रश्च रुद्रश्च भवश्च शर्वश्च मृडश्च = वरुणेन्द्ररुद्रभवशर्वमृडम्, तस्मात् ।

**[वरुणानी]** वरुणस्य भार्या ।

**[इन्द्राणी]** इन्द्रस्य भार्या ।

**[रुद्राणी]** रुद्रस्य भार्या ।

**[भवानी]** भवस्य भार्या ।

**[शर्वाणी]** शर्वस्य भार्या ।

**[मृडानी]** मृडस्य भार्या । सर्वत्र अनेन ङी - आनन्ते च ।

**[इन्द्राणी]** इन्द्रमाचष्टे । 'णिज्बहुलं०' (३।४।४२) णिच्प्र०⟶इ । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । इन्द्रयतीति क्विप् । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तन्मते ङी - आन् च । 'रषृवर्णान्नो ण०' (२।३।६३) न०⟶ण० ।

**[मातुलानी]** मातुलमाचष्टे । 'णिज्बहुलं०' (३।४।४२) णिच्प्र० ⟶ इ । 'त्रन्त्यस्वरादेः' (७।४।४३) अलोपः । मातुलयतीति क्विप् । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तन्मते ङी - आन् च ॥छ॥

---

卐 कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः - लघुवृत्त्यवचूरि ।

## मातुलाचार्योपाध्यायाद् वा ।।२।४।६३।।

**[मातुलाचार्योपाध्यायात्]** मातुलश्च आचार्यश्च उपाध्यायश्च = मातुलाचार्योपाध्यायम्, तस्मात् ।

**[मातुलानी, मातुली]** मातुलस्य भार्या ।

**[आचार्यानी, आचार्यी]** आचार्यस्य भार्या ।

**[उपाध्यायानी, उपाध्यायी]** उपाध्यायस्य भार्या । सर्वत्र अनेन ङी - आनन्ते च ।।छ।।

## सूर्याद् देवतायां वा ।।२।४।६४।।

**[सूर्याणी, सूर्या]** सूर्यस्य भार्या । अनेन ङीर्वा - ङीयोगे च आनन्ते ।

**[मानुषी-सूरी]** मनु । मनोरपत्यं = मनुष्यः । 'मनोर्याऽणौ षश्चान्तः' (६।१।९४) यप्र० । सूर्यस्यादित्यस्य मनुष्यस्य वा भार्या = मानुषी-सूरी । मानुषः(षी) इत्यत्र 'मनोर्याऽणौ षश्चान्तः' (६।१।९४) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । 'सूर्या-ऽगस्त्ययोरीये च' (२।४।८९) यलोपः ।।छ।।

## यव-यवना-ऽरण्य-हिमाद् दोष-लिप्युरु-महत्त्वे ।।२।४।६५।।

**[यवयवनाऽरण्यहिमात्]** यवश्च यवनश्च अरण्यं च हिमं च = यवयवनाऽरण्यहिमम्, तस्मात् ।

**[दोषलिप्युरुमहत्त्वे]** दोषश्च लिपिश्च ऊरुश्च महत्त्वं च = दोषलिप्युरुमहत्त्वम्, तस्मिन् ।

**[यवानी]** दुष्टो यवः = यवानी ।

**[यवनानी]** यवनानामियं लिपिः ।

**[अरण्यानी]** ऊरु-विस्तीर्णमरण्यम् ।

**[हिमानी]** महद्धिमम् ।

**[यावनी वृत्तिः]** यवनस्येयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी ।

**[यवनी]** यवनस्य भार्या । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

## आर्य-क्षत्रियाद् वा ।।२।४।६६।।

**[आर्यक्षत्रियात्]** आर्यश्च क्षत्रियश्च = आर्यक्षत्रियम्, तस्मात् ।

**[आर्याणी, आर्या]** आरात् दूरेण यातः पापात् = आर्यः, स्त्री चेत् । अनेन ङी - आनन्ते च । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[क्षत्रियाणी, क्षत्रिया]** क्षत्रस्याऽपत्यम् । 'क्षत्रादियः' (६।१।९३) इयप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - आनन्ते च । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[आर्यी]** आर्यस्य भार्या ।

**[क्षत्रियी]** क्षत्रियस्य भार्या ।।छ।।

## यञो डायन् च वा ॥२।४।६७॥

**[गार्गी, गार्ग्यायणी]** गर्गस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णे०' (७।४।६८) अलोपः । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । ङीयोगे च डायनन्ते विकल्पे । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[वात्सी, वात्स्यायनी]** वत्सस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । ङीयोगे च डायनन्ते विकल्पे । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ॥छ॥

## लोहितादिशकलान्तात् ॥२।४।६८॥

**[लोहितादिशकलान्तात्]** लोहित आदिर्यस्याऽसौ लोहितादिः । 卐 शकलोऽन्ते यस्याऽसौ शकलान्तः । लोहितादिश्चासौ शकलान्तश्च = लोहितादिशकलान्तम्, तस्मात् ।

**[लौहित्यायनी]** लोहित । लोहितस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायन् च । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[कात्यायनी]** + कति । कतेरपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । अनेन ङी - डायन् च । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[शाकल्यायनी]** शकलस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायन् च ॥छ॥

## षावटाद् वा ॥२।४।६९॥

**[षावटात्]** षश्च अवटश्च = षाऽवटम्, तस्मात् ।

**[पौतिमाष्यायणी, पौतिमाष्या]** 'पूगश् पवने' (१५१८) पू । पूयत इति पूतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० → ति । पूतयो माषा यस्य सः = पूतिमाषः । पूतिमाषस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायनन्ते च ।

**[शार्कराक्ष्यायणी, शार्कराक्ष्या]** शर्करा-अक्षि । शर्करा अक्षि यस्याऽसौ । 'अक्ष्णोऽप्राण्यङ्गे' (७।३।८५) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः । शर्कराक्षस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायनन्ते च ।

**[गौकक्ष्यायणी, गौकक्ष्या]** गो-कक्ष । गवां कक्षो यस्याऽसौ गोकक्षः । गोकक्षस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णे०' (७।४।६८) अलोपः । अनेन ङी - डायनन्ते च ।

**[आवट्यायनी, आवट्या]** अवटस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० → य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायनन्ते च ॥छ॥

---

P 卐 शकलोऽन्तो यस्याऽसौ ।

\+ श० म० न्यासानुसन्धाने - कायतेः 'पृषि-रञ्जि-सिकि-का-ला-वृभ्यः कित्' (उणा० २०८) कित्यतेऽकारलोपे च कतः ।

**कौरव्य-माण्डूका-ऽऽसुरेः ॥२।४।७०॥**

**[कौरव्यमाण्डूकाऽऽसुरेः]** कौरव्यश्च माण्डूकश्च आसुरिश्च = कौरव्यमाण्डूकाऽऽसुरि, तस्मात् ।

**[कौरव्यायणी]** कुरोरपत्यं वृद्धं स्त्री । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ज्यः' (६।१।११८) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । अनेन ङी-डायनन्ते च ।

**[माण्डूकायनी]** मण्डूकस्याऽपत्यं वृद्धं स्त्री । 'पीला-साल्वा-मण्डूकाद् वा' (६।१।६८) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी-डायनन्ते च ।

**[आसुरायणी]** 卐 असुरस्याऽपत्यं वृद्धं स्त्री । 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।२।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी - डायनन्ते च ॥छ॥

**इञ इतः ॥२।४।७१॥**

**[इञ इतः]** इञ् पञ्चमी ङसि । इत् पञ्चमी ङसि ।

**[सौतङ्गमी]** सुतं गच्छतीति । 'नाम्नो गमः खड्-डौ च विहायसस्तु विहः' (५।१।१३१) खप्र०→अ । 'खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः । सुतङ्गमेन निर्वृत्ता । 'सुतङ्गमादेरिञ्' (६।२।८५) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अवर्णेवर्णस्य (७।४।६८) अलोपः । अनेन ङी ।

**[मौनिचित्ती]** 卐卐 मुनिचित्तेन निर्वृत्तम् । 'सुतङ्गमादेरिञ्' (६।२।८५) इञ्प्र० → इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[वाराह्या]** वराह । वराहस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अनार्षे वृद्धेऽणिञो बहुस्वर-गुरूपान्त्यस्याऽन्तस्य ष्यः' (२।४।७८) ष्यादेशः→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[बालाक्या]** बलाकस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अनार्षे वृद्धेऽणिञो०' (२।४।७८) ष्यादेशः→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[कारीषगन्ध्या]** 'कृत् विक्षेपे' (१३३४) कृ । कीर्यते वायुनेति करीषः । 'कृ-तृभ्यामीषः' (उणा० ५५३) ईषप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । करीषस्येव गन्धो यस्याऽसौ । 'वोपमानात्' (७।३।१४७) इत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । करीषगन्धेरपत्यं वृद्धं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र०→अ । 'वृद्धिः स्वरोष्वादे०' (७।४।१) वृद्धिः । 'अनार्षे वृद्धेऽणिञो०' (२।४।७८) ष्यादेशः→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[कौमुदगन्ध्या]** कुमुदस्येव गन्धो यस्याऽसौ । 'वोपमानात्' (७।३।१४७) इत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । कुमुदगन्धेरपत्यं स्त्री । 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०→इ । 'अनार्षे वृद्धेऽणिञो०' (२।४।७८) ष्यादेशः →य । 'आत्' (२।४।१८) आप्प्र०→आ ॥छ॥

**नुर्जातेः ।२।४।७२॥**

**[अवन्ती]** अवन्तेरपत्यं स्त्री । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ज्यः' (६।१।११८) ञ्यप्र०→य । 'कुन्त्यवन्तेः स्त्रियाम्' (६।१।१२१) ञ्यलोपः । अनेन ङीप्र० ।

**[कुन्ती]** कुन्तेरपत्यं स्त्री । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ज्यः' (६।१।११८) ञ्यप्र०→य । 'कुन्त्यवन्तेः स्त्रियाम्'

P 卐 असुरस्य ऋषेरपत्यं वृद्धं स्त्री । P 卐卐 सुतङ्गमादिगणे - मुनिवित्त ।

(६।१।१२१) ञ्यलोपः । अनेन ङीप्र० ।

**[दाक्षी]** दक्षस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अवर्णेवर्णस्य (७।४।६८) अलोपः । अनेन ङी ।

**[प्लाक्षी]** प्लक्षस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[तैकायनी]** तिकस्याऽपत्यं वृद्धं स्त्री । 'तिकादेरायनिञ्' (६।१।१०७) आयनिञ्प्र०→आयनि । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[ग्लुचुकायनी]** ग्लुचुक । ग्लुचुकस्याऽपत्यं वृद्धं स्त्री । 'अदोरायनिः प्रायः' (६।१।११३) आयनिप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ङी ।

**[विट्]** विश् । विशोऽपत्यम् । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'द्रेरञणोऽप्राच्य-भर्गादेः' (६।१।१२३) अञ्लोपः । 'यज-सृज-मृज०' (२।१।८७) श०→ष० । 'धुटस्तृतीयः' (२।१।७६) ष०→ड० । 'विरामे वा' (१।३।५१) ड०→ट० ।

卐**[दरद्]** दरदोऽपत्यम् । 'पुरु-मगध-कलिङ्ग-सूरमस-द्विस्वरादण्' (६।१।११६) अण्प्र० । 'देरञणोऽप्राच्य-भर्गादेः' (६।१।१२३) अण्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'विरामे वा' (१।३।५१) द०→त० ।

**[अवन्तीः स्त्री]** अवन्तिमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । अवन्तीयतीति क्विप् । 'अतः' (४।३।८२) अलोपः । 'य्वोः प्वय्व्यञ्जने लुक्' (४।४।१२१) यलोपः ।

**[तित्तिरिः]** तित्तिरि । प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० ।

**[निष्कौशाम्बिः कन्या]** कुश-अम्ब । कुशेनाऽम्बोऽम्बनं यस्याऽसौ कुशाम्बः । कुशाम्बेन निर्वृत्ता । 'तेन निर्वृत्ते च' (६।२।७१) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम् (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । निर्गतः कौशाम्ब्याः । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयो-बहुव्रीहौ' (२।४।९६) ह्रस्वः । 'निर्दुर्बहिराविष्प्रादुश्चतुराम्' (२।३।९) र०→ष० ॥छ॥

**उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ्** ॥२।४।७३॥

**[अप्राणिनः]** न प्राणी = अप्राणी, तस्मात् ।

**[अयुरज्ज्वादिभ्यः]** रज्जुः आदिर्येषां ते = रज्ज्वादयः । युश्च रज्ज्वादयश्च = युरज्ज्वादयः । न युरज्ज्वादयोऽयुरज्ज्वा-दयस्तेभ्यः ।

**[कुरूः]** कुरु । कुरोरपत्यं स्त्री । दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः' (६।१।११८) ञ्यप्र० । 'कुरोर्वा' (६।१।१२२) ञ्यलोपः । अनेन ऊङ् । 'समानानां०' (१।२।१) दीर्घः ।

**[इक्ष्वाकूः]** इक्ष्वाकु । इक्ष्वाकोरपत्यम् । 'राष्ट्र-क्षत्रियात्०' (६।१।११४) अञ्प्र० । 'द्रेरञणोऽप्राच्यभर्गादेः' (६।१।१२३) अञ्लुप् । अनेन ऊङ् ।

**[ब्रह्मबन्धूः]** ब्रह्मा बन्धुरस्याः सा । अनेन ऊङ्प्र०→ऊ ।

**[धीवबन्धूः]** धीवा बन्धुरस्याः सा । अनेन ऊङ्प्र०→ऊ ।

---

卐 लघुवृत्तौ - दरत् ।

**[वधूः]** 'वहीं प्रापणे' (९९६) वह् । उह्यते मातुलेन विवाहकाले इति वधूः । 'वहेर्ध् च' (उणा० ८३२) ऊप्र० - हस्य ध् ।

**[अतिब्रह्मबन्धुः]** ब्रह्मा बन्धुरस्याः सा = ब्रह्मबन्धूः । ब्रह्मबन्धूमतिक्रान्तः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[चिकीर्षुः]** 'डुकृंग् करणे' (८८८ ) कृ । कर्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र०→स । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'ॠतां क्ङितीर्' (४।१।११६) इर् । 'सन्-यङश्च' (४।१।३) द्विर्वचनम् । 'व्यञ्जन०' (४।१।४४) र्लोपः । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । चिकीर्षणम् । 'सन्-भिक्षा-ऽऽशंसेरुः' (५।२।३३) उप्र० ।

**[अध्वर्युः स्त्री]** अध्वर् 'यांक् प्रापणे' (१०६२) या । अध्वरं यातीति । 'केवयु-भुरण्य्वध्वर्यादयः' (उणा० ७४६) अध्वर्युनिपातः ।

**[कथं तर्हि भीरु ! गतं निवर्तत इति ?]** 'ञिभींक् भये' (११३२) भी । बिभेतीत्येवंशीलः । 'भियो रु-रुक-लुकम्' (५।२।७६) रुप्र० ।

**["असूर्यंपश्यरूपा त्वं किमभीरुरर्यसे"]** 'ऋंक् गतौ' (११३५) ऋ । भृशं पुनः पुनर्वा इयर्त्ति । 'अट्यर्त्ति-सूत्रि-मूत्रि-सूच्यशूर्णोः' (३।४।१०) यङ्प्र०→य । 'क्य-यङाऽऽशीर्ये' (४।३।१०) गु० अर् । 'स्वराऽऽदेर्द्वितीयः' (४।१।४) र्यद्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) यलोपः । 'आ-गुणावन्यादेः' (४।१।४८) आ । वर्त्त० से ।।छ।।

### बाह्वन्त-कद्रु-कमण्डलोर्नाम्नि ।।२।४।७४।।

**[बाह्वन्तकद्रुकमण्डलोः]** बाहुरन्ते यस्याऽसौ बाह्वन्तः । बाह्वन्तश्च कद्रुश्च कमण्डलुश्च = बाह्वन्तकद्रुकमण्डलु, तस्मात् ।

**[मद्रबाहूः]** मद्रौ बाहू यस्याः सा ।

**[भद्रबाहूः]** भद्रौ बाहू यस्याः सा ।

**[कमण्डलूः]** क 'मडुण् भूषायाम्' (१६३३) मड् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नोऽन्तः । केन-पानीयेन मण्ड्यते इति कमण्डलुः । 'गूहलु-गुग्गुलु-कमण्डलवः' (उणा० ८२४) कमण्डलुनिपातः । अनेन ऊङ्प्र०→ऊ ।

**[वृत्तबाहुः]** वृत्तौ बाहू यस्याः ।।छ।।

### उपमान-सहित-संहित-सह-शफ-वाम-लक्ष्मणाद्यूरोः ।।२।४।७५।।

**[उपमानसहितसंहितसहशफवामलक्ष्मणात्]** 卐 उपमानं च सहितश्च संहितश्च सहश्च+ शफश्च-वामश्च लक्ष्मणश्च = उपमानसहितसंहितसहशफवामलक्ष्मणम्, तस्मात् ।

**[करभोरूः]** करभवत् ऊरू यस्याः सा ।

**[नागनासोरूः]** नागनासा इव ऊरू यस्याः सा । अनेन ऊङ् ।

**[कदलीस्तम्भोरू]** कदलीस्तम्भ इव ऊरू यस्याः सा ।

**[सहितोरूः]** सहितौ ऊरू यस्याः सा ।

---

P 卐 उपमानं च सहितश्च संहितश्च सहश्च शफश्च वामश्च लक्ष्मणश्च = उपमानसहितसंहितसहशफवामलक्ष्मणाः, ते आदयो यस्याऽसौ उपमानसहितसंहितसहशफवामलक्ष्मणादिः, स चासौ ऊरूश्च असौ, तस्मात् ।

+ उक्तं च लघुवृत्यवचूरौ-यद्यप्यमरसिंहेन' कविका तु खलीनोऽस्त्री, शफं क्लीबे खुरः पुमान्' इति शफशब्दस्य क्लीबत्वमुक्तं तथापि पुंस्त्वमपि प्रामाणिकमेव - 'शफः खुरे गवादीनां, मूले विटपिनामपीति' श्री हेमचन्द्रकोशात् । श० न्या० - सफशब्दः संक्लिष्टार्थोऽव्युत्पन्नो दन्त्यादिः ।

**[संहितोरू]** संहितौ ऊरू यस्याः सा ।

**[सहोरूः]** सह(हौ) विद्यमानौ ऊरू यस्याः सा ।

**[स(श)फोरूः]** शफवत् ऊरू यस्याः सा ।

**[वामोरूः]** वामौ ऊरू यस्याः सा ।

**[लक्ष्मणोरूः]** लक्ष्मणौ ऊरू यस्याः सा । अनेन सर्वत्र ऊङ्प्र० ।

**[वृत्तोरुः]** वृत्तौ ऊरू यस्याः सा ।

**[पीनोरुः]** पीनौ ऊरू यस्याः सा ।

**[करभमात्रूरुः]** करभवत् मात्रौ ऊरू यस्याः सा ॥छ॥

**नारी-सखी-पङ्गू-श्वश्रू** ॥२।४।७६॥

**[नारीसखीपङ्गूश्वश्रू]** नारी च सखी च पङ्गूश्च श्वश्रूश्च इति द्वन्द्वः, सूत्रत्वात् जस्लोपः ।

**[नारी]** नुर्नरस्य वा भार्या । अनेन ङ्यां नारीनिपात्यते ।

**[सखी]** सख्युर्भार्या, सह खेन वर्त्तते या सा, वा । अनेन ङ्यां सखीनिपात्यते ।

**[पङ्गूः]** पङ्गोर्भार्या । अनेन ऊङि पङ्गूरिति निपात्यते ।

**[श्वश्रूः]** श्वशुरस्य भार्या । अनेन ऊङि श्वश्रूरिति निपात्यते ॥छ॥

**यूनस्तिः** ॥२।४।७७॥

**[यूनस्तिः]** युवन् । पञ्चमी ङसि । 'श्वन्-युवन्-मघोनो ङीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व०→उ० । 'समानानां०' (१।२।१) दीर्घः । तिप्र० । प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । 'रः पदान्ते विसर्गस्तयोः' (१।३।५३) विसर्गः ।

**[युवतिः]** 'युक् मिश्रणे' (१०८०) यु । यूयते इति युवा । 'लू-पू-यु-वृषि-दंशि-द्यु-दिवि-प्रतिदिविभ्यः कित्' (उणा० ९०१) किद् अन्प्र० स्त्री चेत् युवतिः । अनेन तिप्र० ।

**[यूनी]** युवन् 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङीप्र० । 'श्वन्-युवन्-मघोनो ङीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व०→उ० । 'समानानां०' (१।२।१) दीर्घः ।

**[युवती]** 'युक् मिश्रणे' (१०८०) यु । यौति = मिश्रते इति युवतिः । 'योः कित्' (उणा० ६५८) किद् अतिप्र० । 'धातोरिवर्णोवर्णस्येयुव्०' (२।१।५०) उव् । 'इतोऽक्त्यर्थात्' (२।४।३२) ङीप्र० । 'समानानां०' (१।२।१) दीर्घः ।

**[अतियूनी]** युवानमतिक्रान्ता सा । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङीप्र० । 'श्वन्-युवन्-मघोनो०' (२।१।१०६) व०→उ० । 'समानानां०' (१।२।१) दीर्घः ।

**[निर्यूनी]** 卐 निर्गता यूनः = निर्यूनी । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङीप्र० । 'श्वन्-युवन्-मघोनो०' (२।१।१०६) व०→उ० । 'समानानां०' (१।२।१) दीर्घः ॥छ॥

**अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः** ॥२।४।७८॥

**[अनार्षे]** न आर्षं = अनार्षम् । 'अन् स्वरे' (३।२।१२९) अन्, तस्मिन् ।

---

P 卐 निःक्रान्ता यूनः ।

**[अणिञः]** अण् च इञ् च = + अणिञ्, तस्य ।

**[बहुस्वरगुरूपान्त्यस्य]** बहवः स्वरा यत्र तद् बहुस्वरम् । गुरुरुपान्त्ये यत्र तद् गुरूपान्त्यम् । बहुस्वरं च तद् गुरूपान्त्यं च = बहुस्वरगुरूपान्त्यम्, तस्य ।

**[कारीषगन्ध्या]** 'कृत् विक्षेपे' (१३३४) कृ । कीर्यते वायुनेति । 'कृ-तृभ्यामीषः' (उणा० ५५३) ईषप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । करीषस्येव गन्धो यस्याऽसौ । 'वोपमानात्' (७।३।१४७) इत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । करीषगन्धेरपत्यम् । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । अणोऽनेन ष्य । 'आत्' (२।४।१८) आप्प्र०→आ । 'समानानां०' (१।२।१) दीर्घः ।

**[कौमुदगन्ध्या]** कुमुदस्येव गन्धो यस्याऽसौ । 'वोपमानात्' (७।३।१४७) इत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । कुमुदगन्धेरपत्यं वृद्धं स्त्री । 'पौत्रादि वृद्धम्' (६।१।२) - 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः कौ । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । अणोऽनेन ष्य । 'आत्' (२।४।१८) आप्प्र०→आ । 'समानानां०' (१।२।१) दीर्घः ।

**[दैवदत्त्या]** देवदत्तस्याऽपत्यं वृद्धं स्त्री । 'पौत्रादि वृद्धम्' (६।१।२) 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१० वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन इञः→ष्यादेशः । 'आत्' (२।४।१८) आप्प्र० → आ ।

**[वाराहया]** वराहस्याऽपत्यं वृद्धम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन इञः→ष्यादेशः । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[बालाक्या]** बलाकाया अपत्यम् । 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । अनेन इञः→ष्यादेशः । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[वासिष्ठी]** वसिष्ठस्याऽपत्यं वृद्धं स्त्री । 'ऋषि-वृष्ण्यन्धक-कुरुभ्यः' (६।१।६१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी ।

**[वैश्वामित्री]** विश्वं मित्रमस्य । 'ऋषौ विश्वस्य मित्रे' (३।२।७९) विश्वस्य मित्रे दीर्घत्वम् । विश्वामित्रस्याऽपत्यं वृद्धं स्त्री । 'ऋषि-वृष्ण्यन्धक०' (६।१।६१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[वाराही]** वराहस्याऽपत्यं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[आहिच्छत्री]** अहिवत् छत्रं यस्यां सा = अहिच्छत्रा नगरी । 卐 अहिच्छत्रायां जाता । 'जाते' (६।३।९८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आ । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[कान्यकुब्जी]** कन्यकुब्जे जाता । 'जाते' (६।३।९८) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्'० (२।४।२०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[आर्त्तभागी]** ऋतः प्राप्तो भगः पुण्यं येन, अथवा ऋतेन सत्येन भज्यते वा ऋतभागः । ऋतभागस्याऽपत्यं वृद्धं स्त्री । 'विदादेर्वृद्धे' (६।१।४१) अञ्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

---

P + अणिञौ । P 卐 अहिच्छत्रे जाता ।

**[आर्ष्टिषेणी]** मृ(ऋ)ष्टिसेना । मृ(ऋ)ष्टिसेनाया अपत्यं वृद्धं स्त्री । 'विदादेर्वृद्धे' (६।१।४१) अञ्प्र०⟶अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृ० आर् । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[दाक्षी]** दक्षस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'नुर्जातेः' (२।४।७२) ङी ।

**[प्लाक्षी]** प्लक्षस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'नुर्जातेः' (२।४।७२) ङी ।

**[औपगवी]** गोः समीपं = उपगुः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । उपगोरपत्यं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[कापटवी]** कपटोरपत्यं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[दौवार्या]** द्वार । द्वारस्याऽपत्यं स्त्री ।卐 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०⟶इ । 'लोकात्' (१।१।३) द् पाठउ विश्लेषियइ । 'द्वारादेः' (७।४।६) औकारागमः । अनेन ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[औडुलोम्या]** उडुलोम्नोऽपत्यं स्त्री । 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । अनेन ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[सारलोम्या]** सारलोमन् । सारलोम्नोऽपत्यं स्त्री । 'बाह्वादिभ्यो गोत्रे' (६।१।३२) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'नोऽपदस्य०' (७।४।६१) अन्लोपः । अनेन ष्य⟶य । 'आत्' (२।४।१८) आप्प्र० ⟶आ ।

**[कारीषगन्धः]** करीषगन्धेरपत्यम् । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः ।

**[निर्वाराहिः]** निर्गतो वाराह्याः ।।छ।।

**कुलाख्यानाम्** ।।२।४।७९।।

**[कुलाख्यानाम्]** कुलमाख्यायते यकाभिस्ताः । क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । तासां = कुलाख्यानाम् । 'ह्रस्वाऽऽपश्च' (१।४।३२) नाम् ।

**[पौणिक्या]** पुणिकस्याऽपत्यं पौत्रादि स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[भौणिक्या]** भुणिकस्याऽपत्यं पौत्रं स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[मौखर्या]** मुखरस्याऽपत्यं वृद्धं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेनाऽणः⟶ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

**[गौप्त्या]** गुप्तस्याऽपत्यं वृद्धं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेनाऽणः⟶ष्य⟶य । 'आत्' (२।४।१८) आप्प्र०⟶आ ।

---

P 卐 'अत इञ्' (६।१।३१) इञ्प्र० ।

**[पौणिकी]** पुणिकस्याऽपत्यम् । प्रथमापत्ये इञः ष्यादेशो न भवति । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'इतोऽक्त्यर्थात्' (२।४।३२) ङी ।

**[गौतमी]** गोतमस्याऽपत्यं वृद्धं स्त्री । 'ऋषि-वृष्ण्यन्धक-कुरुभ्यः' (६।१।६१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

**क्रौड्यादीनाम् ।।२।४।८०।।**

**[क्रौड्यादीनाम्]** क्रौडिरादिर्येषां ते = क्रौड्यादयस्तेषाम् ।

**[क्रौड्या]** क्रोडस्याऽपत्यं वृद्धमनन्तरम् । 'अत इञ्' (६।१।३१) इञ्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन इञः→ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[लाड्या]** लडस्याऽपत्यं वृद्धमनन्तरम् । 'अत इञ्' (६।१।३१) इञ्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन इञः→ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[क्रौडेयः]** क्रौड्याया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'तद्धितयस्वरेऽनाऽऽति' (२।४।९२) यलोपः ।

**[चौपयतेयः]** चौपयत्याया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'तद्धितयस्वरेऽनाऽऽति' (२।४।९२) यलोपः ।।छ।।

**भोज-सूतयोः क्षत्रिया-युवत्योः ।।२।४।८१।।**

**[भोजसूतयोः]** भोजश्च सूतश्च = भोजसूतौ, तयोः ।

**[क्षत्रियायुवत्योः]** क्षत्रिया च युवतिश्च = क्षत्रियायुवती, तयोः ।

**[भोज्या]** भोजवंशे जाता क्षत्रिया । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[सूत्या]** प्राप्तयौवना मानुषी = सूत्या । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[भोजा]** भोज । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[सूता]** सूत । 'आत्' (२।४।१८) आप्प्र०→आ ।।छ।।

**दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्ठेविद्धेर्वा ।।२।४।८२।।**

**[दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेः]** दैवयज्ञिश्च शौचिवृक्षिश्च सात्यमुग्रिश्च काण्ठेविद्धिश्च = दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धि, तस्य ।

**[दैवयज्ञ्या, दैवयज्ञी]** देवा यज्ञे यस्याऽसौ देवयज्ञः । देवयज्ञस्याऽपत्यं वृद्धं स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र० → इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र० आ । 卐 'इञ इतः' (२।४।७१) ङी ।

**[शौचिवृक्ष्या, शौचिवृक्षी]** शुचयो वृक्षा यस्याऽसौ शुचिवृक्षः । शुचिवृक्षस्याऽपत्यं वृद्धं स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ । 卐 'इञ इतः' (२।४।७१) ङी ।

P 卐 'नुर्जातेः' (२।४।७२) ङी ।

**[सात्यमुग्र्या, सात्यमुग्री]** सत्यमुग्रं यस्याऽसौ सत्यमुग्रः । अत एव निर्देशाद् मकारागमः । सत्यमुग्रस्याऽपत्यं वृद्धं स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१० वृद्धिः । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ । 卐 'इञ इतः' (२।४।७१) ङी ।

**[काण्ठेविद्ध्या, काण्ठेविद्धी]** कण्ठे विध्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'ज्या-व्यधः क्ङिति' (४।१।८१) य्वृत् । 'तत्पुरुषे कृति' (३।२।२०) इत्यलुप्समासः । कण्ठेविद्धस्याऽपत्यं वृद्धं स्त्री । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । अनेन ष्य→य । 'आत्' (२।४।१८) आप्प्र० →आ । 卐 'इञ इतः' (२।४।७१) ङी ॥छ॥

**ष्या पुत्र-पत्योः केवलयोरीच् तत्पुरुषे** ॥२।४।८३॥

**[ष्या]** ष्या प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[पुत्रपत्योः]** पुत्रश्च पतिश्च = पुत्रपती, तयोः ।

**[तत्पुरुषे]** सश्चासौ पुरुषश्च = तत्पुरुषस्तस्मिन् ।

**[कारीषगन्धीपुत्रः]** करीषस्येव गन्धो यस्याऽसौ । 'वोपमानात्' (७।३।१४७) इत्समासान्तः । करीषगन्धेरपत्यं वृद्धं स्त्री । 'ङसोऽपत्ये' (६।१।२८) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णवर्णस्य' (७।४।६८) इलोपः । 'अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः' (२।४।७८) ष्य→य । 'आत्' (२।४।१८) आप्प्र०→आ । कारीषगन्ध्यायाः पुत्रः । अनेन ईच् → ई ।

**[कारीषगन्धीपतिः]** कारीषगन्ध्यायाः पतिः । अनेन ईच् → ई ।

**[कौमुदगन्धीपुत्रः]** कौमुदगन्ध्यायाः पुत्रः ।

**[कौमुदगन्धीपतिः]** कौमुदगन्ध्यायाः पतिः ।

**[परमकारीषगन्धीपुत्रः]** परमा चासौ कारीषगन्ध्या च = परमकारीषगन्ध्या । परमकारीषगन्ध्यायाः पुत्रः ।

**[परमकारीषगन्धीपतिः]** परमकारीषगन्ध्यायाः पतिः ।

**[गौकक्ष्यापुत्रः]** गौरिव कक्षो यस्याऽसौ गोकक्षः । गोकक्षस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० →य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः गौ । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । गौकक्ष्यायाः पुत्रः ।

**[इभ्यापुत्रः]** इभमर्हति । 'दण्डादेर्यः' (६।४।१७८) यप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । इभ्यायाः पुत्रः ।

**[क्षत्रियापुत्रः]** क्षत्र । क्षत्रस्याऽपत्यं स्त्री । 'क्षत्रादियः' (६।१।९३) इयप्र० । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । क्षत्रियायाः पुत्रः ।

**[कारीषगन्ध्याकुलम्]** कारीषगन्ध्यायाः कुलम् ।

**[कारीषगन्ध्यापुत्रकुलम्]** पुत्रस्य कुलं = पुत्रकुलम् । कारीषगन्ध्यायाः पुत्रकुलं = कारीषगन्ध्यापुत्रकुलम् ॥छ॥

**बन्धौ बहुव्रीहौ** ॥२।४।८४॥

**[कारीषगन्धीबन्धुः]** कारीषगन्ध्या बन्धुरस्य ।

---

P 卐 'नुर्जातेः' (२।४।७२) ङी ।

**[कौमुदगन्धीबन्धुः]** कौमुदगन्ध्या बन्धुरस्य ।

**[परमकारीषगन्धीबन्धुः]** परमा चासौ कारीषगन्ध्या च = परमकारीषगन्ध्या । परमकारीषगन्ध्या बन्धुरस्याऽसौ ।

**[परमकौमुदगन्धीबन्धुः]** परमा चासौ कौमुदगन्ध्या च = परमकौमुदगन्ध्या । परमकौमुदगन्ध्या बन्धुरस्याऽसौ । अनेन ष्य → ईच् ।

**[कारीषगन्ध्यापतिर्ग्रामः]** कारीषगन्ध्या पतिरस्याऽसौ ।

**[कारीषगन्ध्याबन्धुकुलः]** बन्धोः कुलं = बन्धुकुलम् । कारीषगन्ध्याया बन्धुकुलं यस्य सः = कारीषगन्ध्याबन्धुकुलः ।

**[अतिकारीषगन्ध्याबन्धुः]** कारीषगन्ध्यामतिक्रान्ता या सा = अतिकारीषगन्ध्या । अतिकारीषगन्ध्या बन्धुरस्याऽसौ अतिकारीषगन्ध्याबन्धुः ।।छ।।

### मात-मातृ-मातृके वा ।।२।४।८५।।

**[मातमातृमातृके]** मातश्च माता च मातृकश्च = मातमातामातृकम्, तस्मिन् ।

**[कारीषगन्धीमातः, कारीषगन्ध्यामातः]** कारीषगन्ध्या माता यस्य सः ।

**[परमकारीषगन्धीमातः, परमकारीषगन्ध्यामातः]** परमा चासौ कारीषगन्ध्या च = परमकारीषगन्ध्या । परमकारीषगन्ध्या माता यस्याऽसौ । अत एव निर्देशाद् मात आदेशः ।

**[कारीषगन्धीमाता, कारीषगन्ध्यामाता]** कारीषगन्ध्या माता यस्य सः ।

**[कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः]** कारीषगन्ध्या माता यस्याऽसौ । 'ऋन्नित्यदितः' (७।३।१७१) कच्प्र० →क । अनेन ईच् ।।छ।।

### अस्य ङ्यां लुक् ।।२।४।८६।।

**[कुरुचरी]** कुरु 'चर भक्षणे च' (४१० ) चर् । कुरुषु चरतीति । 'चरेष्टः' (५।१।१३८) टप्र०→अ । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । अनेन अलोपः ।

**[मद्रचरी]** मद्र 'चर भक्षणे च' (४१० ) चर् । मद्रेषु चरतीति । 'चरेष्टः' (५।१।१३८) टप्र०→अ । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङीप्र० । अनेन अलोपः ।

**[दण्डिनी]** दण्ड । दण्डोऽस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'स्त्रियां नृतोऽस्वस्त्रादेर्ङीः' (२।४।१) ङी ।

**[कर्त्री]** 'डुकृंग् करणे' (८८८ ) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'स्त्रियां नृतोऽस्वस्त्रादेर्ङीः' (२।४।१) ङी । 'इवर्णादे०' (१।२।२१) र० ।।छ।।

### मत्स्यस्य यः ।।२।४।८७।।

**[मत्सी]** मत्स्य 'गौरादिभ्यो०' (२।४।१९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[मात्सी]** मत्स्यो नाम कश्चित् तस्याऽपत्यं स्त्री । उणादयः(?) ('अत् इञ्' (६।१।३१) इञ्प्र०) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः ।।छ।।

### व्यञ्जनात् तद्धितस्य ।।२।४।८८।।

**[मनुषी]** मनु । मनोरपत्यं वृद्धं स्त्री । 'मनोर्याऽणौ षश्चान्तः' (६।१।९४) यप्र० - ष् अन्ते । 'गौरादिभ्यो०'

(२।४।१९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[सौमी दिक्]** सोमो देवता अस्याः । 'क-सोमाट्ट्यण्' (६।२।१०७) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[औचिती]** उचितस्य भावः । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी ।

**[चातुरी]** चतुरस्य भावः कर्म वा । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः । 'अणञेयेकण्-नञ्-स्नञ्०' (२।४।२०) ङी ।

**[सामिधेनी]** समिधो भावः । 'समिध आधाने टेन्यण्' (६।३।१६२) टेन्यण्प्र०→एन्य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[कारिकेयी]** कारिकाया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[हारिकेयी]** हारिकाया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[वैश्यी]** वैश्यस्य भार्या । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[आवट्या]** अवटस्याऽपत्यं वृद्धम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'आत्' (२।४।१८) आप्प्र०→आ ।।छ।।

## सूर्या-ऽगस्त्ययोरीये च ।।२।४।८९।।

**[सूर्याऽगस्त्ययोः]** सूर्यश्च अगस्त्यश्च = सूर्याऽगस्त्यौ, तयोः ।

**[मानुषी-सूरी]** सूर्य । सूर्यस्य भार्या = मानुषी-सूरी । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[सौरी प्रभा]** सूर्यस्येयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[आगस्ती]** अगस्त्यस्येयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[सौरीयः]** सूर्यो देवताऽस्य । 'देवता' (६।२।१०१) अण्प्र० । सौर्यस्याऽयम् । 'दोरीयः' (६।३।३२) ईयप्र० ।

**[आगस्तीयः]** अगस्त्यो देवताऽस्य । 'देवता' (६।२।१०१) अण्प्र० । आगस्त्यस्याऽयम् । 'दोरीयः' (६।३।३२) ईयप्र० ।

**[सौर्यः]** सूर्यो देवताऽस्य । 'देवता' (६।२।१०१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[आगस्त्यः]** अगस्त्यस्याऽयम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ ।

'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

## तिष्य-पुष्ययोर्भाणि ।।२।४।९०।।

**[तिष्यपुष्ययोः]** तिष्यश्च पुष्यश्च = तिष्यपुष्यौ, तयोः ।

**[भाणि]** 卐 भस्य अण् = भाण्, तस्मिन् ।

**[तैषी रात्रिः]** तिष्य । तिष्येण चन्द्रयुक्तेन युक्ता रात्रिः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः तै । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[तैषमहः]** तिष्येण चन्द्रयुक्तेन युक्तमहः । 'चन्द्रयुक्तात्०' (६।२।६) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः ।

**[पौषी रात्रिः]** पुष्येण चन्द्रयुक्तेन युक्ता रात्रिः । 'चन्द्रयुक्तात्०' (६।२।६) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्०' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । अनेन यलोपः ।

**[पौषमहः]** पुष्येण चन्द्रयुक्तेन युक्तमहः । 'चन्द्रयुक्तात्०' (६।२।६) अण् । शेषं पूर्ववत् । अहन्-प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । 'रो लुप्यरि' (२।१।७५) न०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[तैषः शिशुः]** तिष्ये भवः = तैषः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः तै । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[पौषः]** पुष्ये भवः = पौषः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः पौ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः । सर्वत्र ।

**[सैध्यमहः]** सिध्येन चन्द्रयुक्तेन युक्तमहः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः सै । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[तैष्यश्चरुः]** तिष्यो देवताऽस्य = तैष्यः । 'देवता' (६।२।१०१) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः तै । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[पौष्यम्]** पुष्यस्य माणवकस्येदं = पौष्यम् । 'तस्येदम्' (६।३।१६०) अण्प्र० → अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः पौ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

## आपत्यस्य क्य-च्व्योः ।।२।४।९१।।

**[आपत्यस्य]** न पतन्ति येन जातेन पूर्वजाः तदपत्यम् । 'नञो हलि-पतेः' (उणा० ३५८) यप्र० । अपत्ये भवः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः, तस्य ।

**[क्यच्व्योः]** क्यश्च च्विश्च = क्यच्वौ (च्वी), तयोः ।

**[गार्गीयति]** गर्ग । गर्गस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः गा । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । गार्ग्यमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । अनेन यलोपः । 'क्यनि' (४।३।११२) ई । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

---

P 卐 भेऽण् = भाण्, तस्मिन् । - लघुवृत्त्यवचूरि ।

**[वात्सीयति]** वत्स । वत्सस्याऽपत्यं वृद्धं स्त्री । 'गर्गादिर्यञ्' (६।१।४२) यञ्प्र०→य । शेषं 'गार्गीयति' वत् ।

**[गार्गायते]** गार्ग्य इवाचरति । 'क्यङ्' (३।४।२६) क्यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः आ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[वात्सायते]** वात्स्य इवाऽऽचरति । 'क्यङ्' (३।४।२६) क्यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः आ । वर्त्त० ते ।

**[गार्गीभूतः]** गार्ग्य 'भू सत्तायाम्' (१) भू । अगार्ग्यो गार्ग्यो भवति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० । 'कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्वे च्विः' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई ।

**[वात्सीभूतः]** अवात्स्यो वात्स्यो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० । 'कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्वे च्विः' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई । अनेन यलोपः ।

**[सांकाश्यीयति]** संकाश । संकाशेन निर्वृत्तं = सांकाश्यम् । 'सुपन्थ्यादेर्ञ्यः (६।२।८४) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । सांकाश्यमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'क्यनि' (४।३।११२) ई ।

**[सांकाश्यायते]** सांकाश्य इवाऽऽचरति । 'क्यङ्' (३।४।२६) क्यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः आ ।

**[सांकाश्यीभूतः]** असांकाश्यः सांकाश्यो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'कृ-भ्वस्तिभ्यां' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई । 'अप्रयोगीत्' (१।१।३७) च्विलोपः ।

**[कारिकेयीयति]** 'डुकृंग् करणे' (८८८) कृ । करणाय = कारिका । 'क्रियायां क्रियार्थायां०' (५।३।१३) णकचूप्र० →अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'आत्' (२।४।१८) आप्प्र०→आ । 'समानानां०' (१।२।१) दीर्घः । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ । कारिकाया अपत्यम् । 'ड्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । कारिकेयमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । 'क्यनि' (४।३।११२) ई । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[कारिकेयायते]** कारिका ? (कारिकेय) इवाऽऽचरति । 'क्यङ्' (३।४।२६) क्यङ्प्र०→य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः ।

**[कारिकेयीभूतः]** अकारिकेयः कारिकेयो भवति स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई ॥छ॥

**तद्धितय-स्वरेऽनाति** ॥२।४।९२॥

**[तद्धितयस्वरे]** यश्च स्वरश्च = यस्वरम्, 卐 तद्धितस्य यस्वरं = तद्धितयस्वरम्, तस्मिन् ।

**[अनाति]** न आत् = अनात्, तस्मिन् ।

**[गार्ग्यः]** गर्ग । गर्गस्याऽपत्यं वृद्धम् । 'गर्गादिर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । गार्ग्ये साधुः । 'तत्र साधौ' (७।१।१५) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः ।

---

P 卐 तद्धितं च तद् यस्वरं च = तद्धितयस्वरम् ।

**[गार्गकम्]** 卐 गर्गाणां समूहो गार्गकम् । 'गोत्रोक्ष-वत्सोष्ट्र-वृद्धा-ऽजोरभ्र-मनुष्य-राज-राजन्य-राजपुत्रादकञ्' (६।२।१२) अकञ्प्र०→अक । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[वात्सकम्]** वत्स । वत्सस्याऽपत्यं वृद्धम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । वत्सानां समूहः = वात्सकम् । 'गोत्रोक्ष-वत्सोष्ट्र-वृद्धा० (६।२।१२) अकञ्प्र०→अक । 'अवर्णेवर्णस्य' (७।४।१) अलोपः । अनेन यलोपः ।

**[गार्गीयः]** गार्ग्य । गार्ग्यस्याऽयं = गार्गीयः । 'दोरीयः' (६।३।३२) ईयप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः ।

**[वात्सीयः]** वात्स्य । वात्स्यस्याऽयं = वात्सीयः । 'दोरीयः' (६।३।३२) ईयप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अनेन यलोपः ।

**[सांकाश्यकः]** संकाश । संकाशेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । सांकाश्ये भवः । 'प्रस्थ-पुर-वहान्त-योपान्त्य-धन्वार्थात्' (६।३।४३) अकञ्प्र०→अक । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[काम्पील्यकः]** कम्पील । कम्पीलेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । काम्पील्ये भवः । 'प्रस्थ-पुर-वहान्त-योपान्त्य-धन्वार्थात्' (६।३।४३) अकञ्प्र०→अक । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[गार्ग्यरूप्यः]** गार्ग्य । गार्ग्यादागतम् । 'नृ-हेतुभ्यो रूप्य-मयटौ वा' (६।३।१५६) रूप्यप्र० ।

**[गार्ग्यायणः]** गर्गस्याऽपत्यं वृद्धं = गार्ग्यः । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । गार्ग्यस्याऽपत्यं युवा । 'यञिञः' (६।१।५४) आयनण्प्र०→आयन । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ ।

**[कारिकेयिः]** कारिकेयस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[हारिकेयिः]** हारिकेय । हारिकेयस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

## बिल्वकीयादेरीयस्य ।।२।४।९३।।

**[बिल्वकीयादेः]** बिल्वकीय आदिर्यस्याऽसौ बिल्वकीयादिः, तस्य ।

**[बैल्वकाः]** बिल्वाः सन्त्यस्यामिति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । बिल्वकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः । प्रथमा जस् ।

**[वैणुकाः]** वेणवः सन्त्यस्यामिति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । वेणुकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः । प्रथमा जस् ।

---

P 卐 गार्गकम् - गर्गस्याऽपत्यानि वृद्धानि । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र० । 'यञञोऽश्यापर्णान्त-गोपवनादेः' (६।१।१२६) इति यञो लोपे प्राप्ते 'न प्राग्जितीये स्वरे' (६।१।१३५) इत्यादिना अकञि प्राप्ते यलोपनिषेधे च इदं यलोपकरणम् । गर्गाणां समूहः = गार्गकम् । 'गोत्रोक्ष-वत्सोष्ट्र०' (६।२।१२) इत्यादिना अकञ् ।

**[वैत्रकाः]** वेत्राणि सन्त्यस्याम् । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । वेत्रकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः ।

**[वैतसकाः]** वेतस । वेतसा अत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । वेतसकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः ।

**[त्रैकाः]** त्रि । त्रयोऽत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । त्रिकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः ।

**[ताक्षकाः]** तक्षन् । तक्षाणो अत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । तक्षकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । अनेन ईयलोपः ।

**[ऐक्षुकाः]** इक्षु । इक्षवोऽत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । इक्षुकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र०—>अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अनेन ईयलोपः ।

**[काष्ठकाः]** काष्ठानि अत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । काष्ठकीयायां भवाः । 'कोपान्त्याच्चाऽण्' (६।३।५६) अण्प्र० । अनेन ईयलोपः ।

**[कापोतकाः]** कपोत । कपोता अत्र सन्ति । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र० —>आ । कपोतकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । अनेन ईयलोपः ।

**[क्रौञ्चकाः]** क्रुञ्चाः सन्ति अत्र । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । क्रुञ्चकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । अनेन ईयलोपः ।

**[नाडकीयः]** नडाः सन्त्यस्याम् । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । नडकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[प्लाक्षकीयः]** प्लक्ष । प्लक्षाः सन्त्यत्र । 'नडादेः कीयः' (६।२।९२) कीयप्र० । 'आत्' (२।४।१८) आप्प्र०—>आ । प्लक्षकीयायां भवाः । 'भवे' (६।३।१२३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[बिल्वकीयरूप्यम्]** बिल्वकीयादागतं = बिल्वकीयरूप्यम् । 'नृ-हेतुभ्यो रूप्य-मयटौ वा' (६।३।१५६) रूप्यप्र० ।।छ।।

**न राजन्य-मनुष्ययोरके ।।२।४।९४।।**

**[राजन्यमनुष्ययोः]** राजन्यश्च मनुष्यश्च = राजन्यमनुष्यौ, तयोः ।

**[अके]** अक सप्तमी ङि ।

**[राजन्यकम्]** राज्ञोऽपत्यानि । 'जातौ राज्ञः' (६।१।९२) यप्र० । राजन्यानां समूहः = राजन्यकम् । 'गोत्रोक्ष-वत्सोष्ट्र-वृद्धा-ऽजोरभ्र-मनुष्य-राज-राजन्य-राजपुत्रादकञ्' (६।२।१२) अकञ्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[मानुष्यकम्]** मनु । 卐 मनोरपत्यम् । 'मनोर्याऽणौ षश्चान्तः' (६।१।९४) यप्र०-षोऽन्तः । मनुष्याणां समूहः = मानुष्यकम् । 'गोत्रोक्ष-वत्सोष्ट्र-वृद्धा० (६।२।१२) अकञ्प्र०—>अक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य'

---

P 卐 मनोरपत्यानि ।

(७।४।६८) अलोपः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।।छ।।

**ङ्यादेगौणस्याक्विपस्तद्धितलुक्यगोणी-सूच्योः ।।२।४।९५।।**

**[ङ्यादेः]** + डीरादिर्यस्याऽसौ ङ्यादिस्तस्य ।

**[गौणस्य]** गौण षष्ठी ङस् ।

**[अक्विपः]** न क्विप् = अक्विप्, तस्य ।

**[तद्धितलुकि]** तद्धितस्य लुक् = तद्धितलुक्, तस्मिन् ।

**[अगोणीसूच्योः]** गोणी च सूची च = गोणीसूच्यौ । न गोणीसूच्यौ = अगोणीसूच्यौ, तयोः ।

**[सप्तकुमारः]** सप्तकुमार 'वयस्यनन्त्ये' (२।४।२१) ङी । सप्तकुमार्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये य-स्वरा-ऽऽदेर्लुबद्विः' (६।१।२४) अण्लोपः । अनेन ङीनिवृत्तिः ।

**[पञ्चधीवा]** 'डुधांग्क् धारणे च' (११३९) धा । दधातीति । 'मन्-वन्-क्वनिप्-विच्-क्वचित्' (५।१।१४७) वन्प्र० । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) आ०→ई० । 'ण-स्वरा-ऽघोषाद् वनो रश्च' (२।४।४) ङीप्र० - न०→र० । पञ्चभिर्धीवरीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङीनिवृत्तिः । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ।

**[पञ्चेन्द्रः]** पञ्चन्-इन्द्र । इन्द्रस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चान्तः' (२।४।६२) ङीप्र०-आनन्ते च । पञ्चेन्द्राण्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये०' (६।१।२४) अण्लोपः । अनेन ङीनिवृत्तिः ।

**[पञ्चाग्निः]** पञ्चन्-अग्नि । अग्नेर्भार्या । 'पूतक्रतु-वृषाकप्यग्नि-कुसित-कुसीदादै च' (२।४।६०) ङीप्र०-ऐ च । 'एदैतोऽयाय्' (१।२।२३) आय् । पञ्चाग्न्याय्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये य० (६।१।२४) अण्लोपः । अनेन ङीनिवृत्तिः । प्रथमा सि । 'सो रुः' (२।१।७२) र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[द्विस्त्रः]** द्वि-स्त्री । द्वाभ्यां स्त्रीभ्यां क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङीनिवृत्तिः ।

**[पञ्चयुवा]** 'युक् मिश्रणे' (१०८०) यु । यूयते इति युवा । 'लू-पू-यु-वृषि-दंशि०' (उणा० ९०१) किद् अन्प० स्त्री चेत् युवतिः । 'यूनस्तिः' (२।४।७७) तिप्र० । पञ्चभिर्युवतिभिःक्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) 卐 इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) * इकण्लोपः । अनेन ।

**[पञ्चखट्वः]** पञ्चभिः खट्वाभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन आप्निवृत्तिः ।

**[पञ्चसखः]** पञ्चन्-सखि । 'नारी-सखी-पङ्गू-श्वश्रू' (२।४।७६) ङीप्र० । पञ्चभिः सखीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ङीनिवृत्तिः ।

**[द्विपङ्गुः]** द्वि-पङ्गु । 'नारी-सखी-पङ्गू-श्वश्रू' (२।४।७६) ऊङ्प्र० पङ्गू-निपातः । द्वाभ्यां पङ्गूभ्यां क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ऊङ्निवृत्तिः ।

**[त्रिकरभोरूः]** त्रि । करभस्येव ऊरुः यस्याः सा । उतोऽप्राणिनश्चाऽयुरज्ज्वादिभ्य ऊङ् (२।४।७३) ऊङ्प्र०→ऊ।

---

P + ङी आदिर्यस्य ङ्यादिस्तस्य । P 卐 अण्प्र० । P * अण्लोपः ।

'समानानां०' (१।२।१) दीर्घः । तिसृभिः करभोरूभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ऊङ्लोपः ।

**[कुवलम्]** कुवल 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङी । कुवल्या विकारः फलम् । 'विकारे' (६।२।३०) अण्प्र० । 'फले' (६।२।५८) अण्लोपः ।

**[पञ्चप्रेयान्]** पञ्चन् - प्रिय । इमे प्रियाः, इमे प्रियाः, इमेऽमीषां मध्येऽतिशयेन प्रियाः = प्रेयांसः । 'गुणाङ्गाद् वेष्ठेयसू' (७।३।९) ईयसुप्र० । 'प्रिय-स्थिर-स्फिरोरु-गुरु-बहुल-तृप्र-दीर्घ-वृद्ध-वृन्दारकस्येमनि च प्रा-स्था-स्फा-वर-गर-बंह-त्रप-द्राघ-वर्ष-वृन्दम्' (७।४।३८) प्रियस्य प्रादेशः । 'अवर्णस्ये०' (१।२।६) ए । पञ्चभिः प्रेयोभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'न्स्महतोः' (१।४।८६) दीर्घत्वम् । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) सलोपः ।

**[अवन्ती]** अवन्ति । अवन्तेरपत्यम् । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः' (६।१।११८) ञ्यप्र०⟶य । 'कुन्त्यवन्तेः स्त्रियाम्' (६।१।१२१) ञ्यलोपः । 'नुर्जातेः' (२।४।७२) ङीप्र० । 'समानानां०' (१।२।१) दीर्घः ।

**[कुन्ती]** कुन्ति । कुन्तेरपत्यम् । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः' (६।१।११८) ञ्यप्र० । 'कुन्त्यवन्तेः स्त्रियाम्' (६।१।१२१) ञ्यलोपः । 'नुर्जातेः' (२।४।७२) ङीप्र० । 'समानानां०' (१।२।१) दीर्घः ।

**[कुरूः]** कुरु । कुरोरपत्यम् । 'दु-नादि-कुर्वित्-कोशला-ऽजादाञ्ञ्यः' (६।१।११८) ञ्यप्र० । 'कुरोर्वा' (६।१।१२२) ञ्यलोपः । 'उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ्' (२।४।७३) ऊङ्प्र०⟶ऊ । 'समानानां०' (१।२।१) दीर्घः ।

**[पञ्चकुमारी]** कुमारीमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र० । कुमारीयतीति क्विप् । पञ्चकुमार्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये०' (६।१।२४) अण्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[पञ्चेन्द्राणी]** पञ्चन् इन्द । इन्द्रस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चान्तः' (२।४।६२) ङीप्र० - आनन्ते । इन्द्राणीमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०⟶य । इन्द्राणीयतीति क्विप् । 'अतः' (४।३।८२) अलोपः । 'य्वोः प्वय्व्यञ्जने लुक्' (४।४।१२१) यलोपः । अप्रयोगीत् (१।१।३७) क्विप्लोपः । पञ्चेन्द्राण्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये०' (६।१।२४) अण्लोपः ।

**[पञ्चयुवती]** पञ्चन् 'युक् मिश्रणे' (१०८०) यु । यूयते इति युवा । 'लू-पू-यू-वृषि०' (उणा० ९०१) किद् अन्प्र० । स्त्री चेत् युवतिः । 'यूनस्तिः' (२।४।७७) तिप्र० । युवतिमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०⟶य । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । युवतीयतीति क्विप् । 'अतः' (४।३।८२) अलोपः । 'य्वोः प्वय्व्यञ्जने लुक्' (४।४।१२१) यलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । युवत्यो देवता अस्य । 'देवता' (६।२।१०१) अण्प्र० । 'द्विगोरनपत्ये०' (६।१।२४) अण्लोपः ।

**[औपगवीत्वम्]** गोः समीपं = उपगुः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । उपगोरपत्यम् । 'ङसोऽपत्ये' (६।१।२८) अण्प्र०⟶अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । औपगव्या भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० ।

**[हरीतकी]** हरीतकी । हरीतक्याः फलं विकारोऽवयवो वा । 'प्राण्यौषधिवृक्षेभ्योऽवयवे च' (६।२।३१) अण्प्र० । 'फले' (६।२।५८) अण्लोपः । अनेन ङीनिवृत्तिः । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० ।

**[कोशातकी]** कोशातकी । कोशातक्याः फलं विकारोऽवयवो वा । 'प्राण्यौषधिवृक्षेभ्योऽवयवे च' (६।२।३१) अण्प्र० । 'फले' (६।२।५८) अण्लोपः । अनेन ङीनिवृत्तिः । 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङीप्र० ।

**[पञ्चगोणिः]** पञ्चन्-गोण । 'भाज-गोण-नाग०' (२।४।३०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । पञ्चभिर्गोणीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[दशगोणिः]** दशन्-गोण । 'भाज-गोण-नाग०' (२।४।३०) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । दशभिर्गोणीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[पञ्चसूचिः]** पञ्चन्-सूचि । 'इतोऽक्त्यर्थात्' (२।४।३२) ङीप्र० । पञ्चभिः सूचीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[दशसूचिः]** दशन्-सूचि । 'इतोऽक्त्यर्थात्' (२।४।३२) ङीप्र० । दशभिः सूचीभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।।छ।।

**गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ** ।।२।४।९६।।

**[अनंशिसमासेयोबहुव्रीहौ]** अंश । अंशोऽस्याऽस्तीति अंशी । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । अंशिना समासोंऽशिसमासः । 卐 ईयांश्चासौ बहुव्रीहिश्च = ईयोबहुव्रीहिः । अंशिसमासश्च ईयोबहुव्रीहिश्च = अंशिसमासेयोबहुव्रीहिः । न अंशिसमासेयोबहुव्रीहिः = अनंशिसमासेयोबहुव्रीहिः । 'अन् स्वरे' (३।२।१२९) अन्, तस्मिन् ।

**[चित्रगुः]** चित्रा-गो । चित्रा गावो यस्याऽसौ । अनेन ह्रस्वः । 'परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्' (३।२।४९) पुंवद्भावः ।

**[पञ्चगुः]** पञ्चभिर्गोभिः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः । अनेन ह्रस्वः ।

**[निर्वाराणसिः]** निर्-वाराणसी । निर्गतो वाराणस्याः = निर्वाराणसिः । अनेन ह्रस्वः ।

**[निःश्रेयसिः]** निर्गतः श्रेयस्याः = निःश्रेयसिः । अनेन ह्रस्वः ।

**[अतिब्रह्मबन्धुः]** ब्रह्मा बन्धुरस्याः सा । 'उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ्' (२।४।७३) ऊङ्प्र०→ऊ । ब्रह्म-बन्धूमतिक्रान्तोऽसौ । अनेन ह्रस्वः ।

**[अतिवामोरुः]** वामे ऊरू यस्याः सा । 'उपमान-सहित-संहित-सह-शफ-वाम-लक्ष्मणाद्यूरोः' (२।४।७५) ऊङ्प्र० । वामोरूमतिक्रान्तोऽसौ । अनेन ह्रस्वः ।

**[सुगौः]** सु-गो । 卐卐 पूजितो गौः = सुगौः ।

**[राजकुमारी]** राजन् - कुमार 'वयस्यनन्त्ये' (२।४।२१) ङीप्र० । राज्ञः कुमारी = राजकुमारी ।

**[परमब्रह्मबन्धूः]** परमा चासौ ब्रह्मबन्धूश्च = परमब्रह्मबन्धूः ।

---

P 卐 ईयसा बहुव्रीहिः = ईयोबहुव्रीहिः P 卐卐 शोभना गौः

**[नक्षत्रमाला]** नक्षत्राणां माला ।

**[प्रियगौः]** गामिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र०→य । गव्यतीति क्विप् । 'अतः' (४।३।८२) अलोपः । 'य्वोः प्वय्व्यञ्जने लुक्' (४।४।१२१) यलोपः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रिया गौः अस्य ।

**[प्रियकुमारी चैत्रः]** कुमारीमिच्छति । 'अमाव्ययात् क्यन् च' (३।४।२३) क्यन्प्र० । कुमारीयतीति क्विप् । + प्रिया कुमारी यस्याऽसौ । 'परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्' (३।२।४९) पुंवद्भावः ।

**[अतितन्त्रीः]** तन्त्रीमतिक्रान्तोऽसौ

**[अतिलक्ष्मीः]** लक्ष्मीमतिक्रान्तोऽसौ ।

**[अतिश्रीः]** श्रियमतिक्रान्तोऽसौ ।

**[अतिभ्रूः]** भ्रुवमतिक्रान्तोऽसौ ।

**[गोकुलम्]** * गवां कुलम् ।

**[कुमारीप्रियः]** कुमारी प्रिया यस्याऽसौ । अनेन ह्रस्वः ।

**[कन्यापुरम्]** कन्यायाः पुरम् ।

**[सुगोप्रियः]** पूजितो गौः = सुगौः । सुगौः प्रिया यस्याऽसौ । अनेन ह्रस्वत् ।

**[राजकुमारीप्रियः]** राज्ञः कुमारी = राजकुमारी । राजकुमारी प्रिया यस्याऽसौ । अनेन ह्रस्वत् ।

**[पञ्चशालाप्रियः]** पञ्चशाला प्रिया यस्याऽसौ । अनेन ह्रस्वत् ।

**[अतिराजकुमारिः]** राज्ञः कुमारी = राजकुमारी । राजकुमारीमतिक्रान्तः असौ ।

**[अतिरत्नमालः]** रत्नानां माला = रत्नमाला । रत्नमालामतिक्रान्तः असौ ।

**[बहुकुमारीकः]** ईषदपरिसमाप्ता कुमारी = बहुकुमारीकः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[बहुब्रह्मबन्धूकः]** ब्रह्मा बन्धुरस्याः सा । 'उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ्' (२।४।७३) ऊङ्प्र० । ईषदपरिसमाप्ता ब्रह्मबन्धूः = बहुब्रह्मबन्धूकः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[अर्धपिप्पली]** पिप्पल्या अर्धम् ।

**[बहुश्रेयसी पुरुषः]** बह्व्यः श्रेयस्यो यस्याऽसौ । 'अधातूदृदितः' (२।४।२) ङीप्र० ।

**[प्रियश्रेयसी]** प्रिय-श्रेयस् । 'अधातूदृदितः' (२।४।२) ङी । प्रियाः श्रेयस्यो यस्याऽसौ । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

**क्लीबे** ॥२।४।९७॥

**[कीलालपम्]** कीलाल 'पां पाने' (२ ) पा । कीलालं पिबतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) विच्प्र० । 'अप्रयोगीत्' (१।१।३७) विज्लोपः । अनेन ह्रस्वः ।

**[ग्रामणि]** ग्राम 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । ग्रामं नयतीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । 'ग्रामाऽग्रान्नियः' (२।३।७१) न०→ण० । अनेन ह्रस्वः ।

---

P + प्रियश्चासौ कुमारी च ।

P * गोः कुलम् ।

**[नतभ्रु]** नता भ्रूर्यस्य तत् । अनेन ह्रस्वः ।

**[अतिहि]** ह्यमतिक्रान्तं यत् कुलं तत् ।

**[अतिरि]** रायमतिक्रान्तं यत् कुलं तत् ।

**[अतिद्यु]** द्यामतिक्रान्तं यत् कुलं तत् ।

**[अतिनु कुलम्]** नावमतिक्रान्तं यत् कुलं तत् ।

**[अधिस्त्रि]** अधिका स्त्री यत्र तत् ।

**[उपवधु]** वध्वाः समीपम् । अनेन ह्रस्वः ।

**[काण्डीभूतम्]** काण्ड 'भू सत्तायाम्' (१) भू । अकाण्डः काण्डो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । 'कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्वे च्विः' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्याऽन०' (४।३।१११) ई ।

**[शुक्लीभूतम्]** अशुक्लः शुक्लो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई ।।छ।।

**वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे ।।२।४।९८।।**

**[ईदूतः]** ईच्च ऊच्च = ईदूत्, 卐 तस्मात् ।

**[अनव्ययय्वृदीच्ङीयुवः]** + अव्ययश्च इश्च उश्च ऋच्च ईच्च ङीश्च इय् च उव् च = अव्ययय्वृदीच्ङीयुव् । न अव्ययय्वृदीच्ङीयुव् = अनव्ययय्वृदीच्ङीयुव्, तस्य ।

**[पदे]** उत्तरं च तत् पदं च = पदम्, तस्मिन् । 'ते लुग्वा' (३।२।१०८) उत्तरलोपः ।

**[लक्ष्मिपुत्रः, लक्ष्मीपुत्रः]** लक्ष्म्याः पुत्रः ।

**[ग्रामणिपुत्रः, ग्रामणीपुत्रः]** ग्रामण्यः पुत्रः ।

**[ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः]** ब्रह्मबन्ध्वाः पुत्रः ।

**[खलपुपुत्रः, खलपूपुत्रः]** खल 'पूग्श् पवने' (१५१८) पू । खलं पुनातीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । खलप्वः पुत्रः । अनेन विकल्पे ह्रस्वः ।

**[खट्वापादः]** खट्वायाः पादः ।

**[गोकुलम्]** गवां कुलम् ।

**[काण्डीभूतम्]** काण्ड 'भू सत्तायाम्' (१) भू । 卐卐 अकाण्डः काण्डो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । 'कृ-भ्वस्तिभ्यां कर्म-कतृभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई । 'अप्रयोगीत्' (१।१।३७) च्विलोपः ।

**[वृषलीभूतम्]** वृषल 'भू सत्तायाम्' (१) भू । अवृषलो वृषलो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११)

---

P 卐 तस्य । P + अव्ययं च ।

P 卐卐 अकाण्डं काण्डं भूतम् ।

क्तप्र०→त । 'कृ-भ्वस्तिभ्यां' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई । 'अप्रयोगीत्' (१।१।३७) च्विलोपः ।

**[ऊरीकृत्य]** ऊरी 'डुकृंग् करणे' (८८८ ) कृ । ऊरीकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप्→य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[उररीकृत्य]** उररी 'डुकृंग् करणे' (८८८ ) कृ । उररीकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप्→य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[इन्द्रहूपुत्रः]** इन्द्र 'ह्वेंग् स्पर्धा-शब्दयोः' (९९४) ह्वे । 'आत् सन्ध्यक्षरस्य' (४।२।१) ह्वा । इन्द्रं ह्वयतीति क्विप् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'दीर्घमवोऽन्त्यम्' (४।१।१०३) दीर्घः ऊ । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । इन्द्रह्वः पुत्रः ।

**[शकहूपुत्रः]** शक 'ह्वेंग् स्पर्धा-शब्दयोः' (९९४) ह्वे । 'आत् सन्ध्यक्षरस्य' (४।२।१) ह्वा । शकं ह्वयतीति क्विप् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'दीर्घमवोऽन्त्यम्' (४।१।१०३) दीर्घः ऊ । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । शकह्वः पुत्रः ।

**[कारीषगन्धीपुत्रः]** कारीषगन्ध्यायाः पुत्रः । 'ष्या पुत्र-पत्योः केवलयोरीच् तत्पुरुषे' (२।४।८३) ईच्→ई ।

**[कौमुदगन्धीपतिः]** कौमुदगन्ध्यायाः पतिः । 'ष्या पुत्र-पत्योः केवलयोरीच् तत्पुरुषे' (२।४।८३) ईच्→ई ।

**[गार्गीपुत्रः]** गर्ग । गर्गस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'यञो डायन् च वा' (२।४।६७) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । गार्ग्याः पुत्रः = गार्गीपुत्रः ।

**[वात्सीपुत्रः]** वत्स । वत्सस्याऽपत्यं वृद्धं स्त्री । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'यञो डायन् च वा' (२।४।६७) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । वात्स्याः पुत्रः ।

**[श्रीकुलम्]** श्रियः कुलम् ।

**[भ्रूकुलम्]** भ्रुवः कुलम् ।

**[यवक्रीकुलम्]** यव 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । यवान् क्रीणातीति क्विप् । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । यवक्रियः कुलम् ।

**[कटप्रूकुलम्]** कट च्युंङ् (५९४) - ज्युंङ् (५९५) - जुंङ् (५९६) 'प्रुंङ् गतौ' (५९७) प्रु । कटं प्रवते । 'दिद्युद्-ददृद्-जगज्जुहू-वाक्-प्राट्-धी-श्री-द्रू-स्त्रू-ज्वायतस्तू-कटप्रू-परिव्राट्-भ्राजादयः क्विप्' (५।२।८३) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । कटप्रुवः कुलम् ।

**[अग्नी पश्य]** अग्नि । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) औ सउं ई ।

**[पटू पश्य]** पटु । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) औ सउं ऊ ।।छ।।

**ङ्यापो बहुलं नाम्नि** ।।२।४।९९।।

**[ङ्यापः]** ङीश्च आप् च = ङ्याप्, तस्य ।

**[भरणिगुप्तः]** भरत । 'श्येतैत-हरित-भरत-रोहिताद् वर्णात् तो नश्च' (२।४।३६) ङीप्र०-त०→न० । 'रषृवर्णान्नो ण०'

(२।३।६३) न०—>ण० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । भरण्या गुप्तः ।

**[रोहिणिमित्रः]** रोहिण । 'रेवत-रोहिणाद् भे' (२।४।२६) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः । रोहिण्या मित्रः ।

**[महित्रातः]** मही 'त्रैङ् पालने' (६०५) त्रै । 'आत् सन्ध्यक्षरस्य' (४।२।१) त्रा । महीं त्रायते स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त ।

**[महिदत्तः]** मही 'डुदांग्क् दाने' (११३८) दा । महीं ददाति स्म । 'गत्यर्थाऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र० —>त । 'दत्' (४।४।१०) दा०—>ददादेशः ।

**[महिगुप्तः]** मह्यां गुप्तः ।

**[शिलवहम्]** शिला 'वहीं प्रापणे' (९९६) वह् । शिलां वहतीति । 'लिहादिभ्यः' (५।१।५०) अच्प्र०—>अ ।

**[शिलप्रस्थम्]** शिला प्र-स्था (२।२।२०) सूत्रवत् । शिलां प्रकर्षेण तिष्ठतीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० —>अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । अनेन सर्वत्र ह्रस्वत् ।

**[रेवतिमित्रः, रेवतीमित्रः]** रेवत्या मित्रः ।

**[पृथिविदत्तः, पृथिवीदत्तः]** पृथिवीं ददाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । 'दत्' (४।४।१०) ददादेशः ।

**[गङ्गमहः, गङ्गामहः]** 卐 गङ्गायां महः-तेजः ।

**[गङ्गदेवी, गङ्गादेवी]** गङ्गा चासौ देवी च ।

**[शिंशपस्थलम्, शिंशपास्थलम्]** शिंशपानां स्थलम् । सर्वत्र अनेन विकल्पे ह्रस्वत् ।

**[फल्गुनीमित्रः]** फल्गुन्या मित्रः ।

**[नान्दीमुखम्]** नान्द्या मुखम् ।

**[नान्दीतूर्यम्]** नान्द्याः तूर्यम् ।

**[नान्दीकरः]** नान्द्याः करः ।

**[नान्दीघोषः]** नान्द्याः घोषः ।

**[महीफलम्]** मह्यां फलम् ।

**[महीकरः]** मह्यां करः ।

**[महीविशालः]** महीवद् विशालं यत्र ।

**[लोमकागृहम्]** लोमकाया गृहम् ।

**[लोमकाखण्डः]** लोमकायाः खण्डः ।

**[लेपिकागृहम्]** लेपिकाया गृहम् ।

**[लेपिकाखण्डः]** लेपिकायाः खण्डः ।

**[गङ्गाद्वारम्]** गङ्गाया द्वारम् ।

---

P 卐 गङ्गाया महः ।

**[श्रीपुरम्]** श्रियाः पुरम् ।

**[विष्टापुरम्]** विष्टायाः पुरम् ।

**[नदीस्रोतः]** नद्याः स्रोतः ।

**[खट्वापादः]** खट्वायाः पादः ॥छ॥

**त्वे ॥२।४।१००॥**

**[रोहिणित्वम्, रोहिणीत्वम्]** रोहिण 'रेवत-रोहिणाद् भे' (२।४।२६) ङी । रोहिण्या भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० ।

**[अजत्वम्, अजात्वम्]** अजाया भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । अज 'अजादेः' (२।४।१६) आप्, ततः समासः ॥छ॥

**भ्रुवोऽच्च कुंस-कुटयोः ॥२।४।१०१॥**

**[कुंसकुट्योः]** 卐卐 कुंसश्च कुटी च (कुटिश्च), तयोः ।

**[भ्रुकुंसः, भ्रकुंसः]** + भ्रुवः कुंसः । अनेन ह्रस्वः - द्वितीये अकारश्च ।

**[भ्रुकुटिः, भ्रकुटिः]** भ्रुवः कुटिः । अनेन ह्रस्वः - द्वितीये अकारश्च ॥छ॥

**मालेषीकेष्टकस्यान्तेऽपि भारि-तूल-चिते ॥२।४।१०२॥**

**[मालेषीकेष्टकस्य]** माला च इषीका च इष्टका च = मालेषीकेष्टकम् । 'क्लीबे' (२।४।९७) ह्रस्वत्, तस्य ।

**[भारितूलचिते]** भारी च तूलश्च चितश्च = भारितूलचितम्, तस्मिन् ।

**[मालभारी]** माला 'टुडुभृंग्क् पोषणे च' (११४०) भृ । मालां बिभर्त्तीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।

**[उत्पलमालभारी]** उत्पलानां माला = उत्पलमाला । उत्पलमालां बिभर्त्तीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।

**[मालभारिणी]** मालां बिभर्त्तीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङीप्र० । 'रषृवर्णान्नो ण०' (२।३।६३) न०⟶ण० ।

**[उत्पलमालभारिणी]** उत्पलमालां बिभर्त्तीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०⟶इन् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङीप्र० । 'रषृवर्णान्नो ण०' (२।३।६३) न०⟶ण० ।

**[इषीकतूलम्]** इषीकायास्तूलम् ।

**[मुञ्जेषीकतूलम्]** मुञ्जा चासौ इषीका च = मुञ्जेषीका । मुञ्जेषीकायास्तूलम् ।

**[इष्टकचितम्]** इष्टकाभिश्चितम् ।

---

P 卐卐 कुंसश्च कुटिश्च = कुंसकुटी, तयोः ।

P + 'कुसु भासार्थाः' (१७९५) कुस् । भ्रुवौ कुंसयति । 'कर्मणोऽण्' (५।१।७२) अण्प्र० ।

**[पक्वेष्टकचितम्]** पक्व चासौ इष्टका च = पक्वेष्टका । पक्वेष्टकया चितम् ।।छ।।

**गोण्या मेये** ।।२।४।१०३।।

**[गोणिः]** गोण 'भाज-गोण-नाग०' (२।४।३०) ङी । गोण्या मितः = गोणिः । अनेन ह्रस्वः ।।छ।।

**ङ्यादीदूतः के** ।।२।४।१०४।।

**[ङ्यादीदूतः]** ङीश्च आच्च ईच्च ऊच्च = ङ्यादीदूत्, तस्य ।

**[कुमारिका]** कुमार 'वयस्यनन्त्ये' (२।४।२१) ङी । ह्रस्वः(वा) कुमारी = कुमारिका । 'ह्रस्वे' (७।३।४६) कप्प्र० →क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन ह्रस्वत् ।

**[पट्विका]** पटु 'स्वरादुतो गुणादखरोः' (२।४।३५) ङी । 卐 ह्रस्वा पट्वी = पट्विका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन ह्रस्वत् ।

**[सोमपकः]** सोम 'पां पाने' (२) पा । सोमं पिबतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।११७) विच्प्र० । 'अप्रयोगीत्' (१।१।३७) विज्लोपः । ह्रस्वः सोमपाः = सोमपकः । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[कीलालपकः]** कीलाल 'पां पाने' (२) पा । कीलालं पिबतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) विच्प्र० । 'अप्रयोगीत्' (१।१।३७) विज्लोपः । ह्रस्वः कीलालपा(:) = कीलालपकः । 'ह्रस्वे' (७।३।४६) कप्प्र० →क । अनेन ह्रस्वत् ।

**[सोमपिका]** ह्रस्वः सोमपाः = सोमपिका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र० →आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[कीलालपिका]** ह्रस्वः कीलालपा(:) = कीलालपिका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।११) इ ।

**[लक्ष्मिका]** ह्रस्वा लक्ष्मीः = लक्ष्मिका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[तन्त्रिका]** ह्रस्वा तन्त्रीः = तन्त्रिका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[वधुका]** ह्रस्वा वधूः = वधुका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[यवागुका]** ह्रस्वा यवागूः = यवागुका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[ब्रह्मबन्धुका]** ह्रस्वा ब्रह्मबन्धूः = ब्रह्मबन्धुका । 'ह्रस्वे' (७।३।४६) कप्प्र०→क । अनेन ह्रस्वत् ।

**[काकः]** 'ककि लौल्ये' (६१८) कक् । ककनं = काकः । 'भावाऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[पाकः]** 'डुपचींष् पाके' (८९२) पच् । पचनं = पाकः । 'भावाऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च०→क० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।।छ।।

**न कचि** ।।२।४।१०५।।

**[बहुकुमारीकः]** बहु 'स्वरादुतो गुणादखरोः' (२।४।३५) ङीप्र० । बह्व्यः कुमार्यो यस्याऽसौ । 'ऋन्नित्यदितः' (७।३।१७१) कच्प्र०→क । 'परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्' (३।२।४९) पुंवत् ।

P 卐 कुत्सिता-अल्पा-अज्ञाता वा पट्वी = पट्विका । 'प्राग् नित्यात् कप्' (७।३।२८) कप्प्र० ।

**[बहुकीलालपाकः]** बहवः कीलालपा यत्राऽसौ । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[बहुलक्ष्मीकः]** बह्व्यो लक्ष्म्यो यस्याऽसौ । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[बहुब्रह्मबन्धूकः]** ब्रह्मन्-बन्धु । ब्रह्मा बन्धुरस्याः सा = ब्रह्मबन्धूः । 'उतोऽप्राणिनश्चाऽयु-रज्ज्वादिभ्य ऊङ्' (२।४।७३) ऊङ्प्र०→ऊ । 'समानानां०' (१।२।१) दीर्घः । बह्व्यो ब्रह्मबन्ध्वो यस्याऽसौ । 'ऋन्नित्यदितः' (७।३।१७१) कच्प्र०→क ।

**[खारीकम्]** खार्या क्रीतम् । 'खारी-काकणीभ्यः कच्' (६।४।१४९) कच्प्र०→क ।

**[काकणीकम्]** काकण्या क्रीतम् । 'खारी-काकणीभ्यः कच्' (६।४।१४९) कच्प्र०→क ।

**[नैषादकर्षुकः]** निषादकर्षू । निषादकर्ष्वां जातः । 'उवर्णादिकण्' (६।३।३९) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'ऋवर्णोवर्ण-दोसिसुसशश्वदकस्मात्त इकस्येतो लुक्' (७।४।७१) इकण्संबंधिन इकारस्य लोपः । 'ङ्यादीदूतः के' (२।४।१०४) ह्रस्वः ।

**[शाबरजम्बुकः]** शबरजम्बू । शबरजम्ब्वां जातः । 'उवर्णादिकण्' (६।३।३९) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'ऋवर्णोवर्ण-दोसिसुसशश्वदकस्मात्त इकस्येतो लुक्' (७।४।७१) इकण्संबंधिन इकारस्य लोपः । 'ङ्यादीदूतः के' (२।४।१०४) ह्रस्वः ।।छ।।

**नवाऽऽपः ।।२।४।१०६।।**

**[प्रियखट्वकः, प्रियखट्वाकः]** प्रिया खट्वा यस्याऽसौ । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क । अनेन विकल्पे ह्रस्वत् ।

**[बहुमालकः, बहुमालाकः]** बह्व्यो माला यस्याऽसौ । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क । अनेन विकल्पे ह्रस्वत् ।।छ।।

**इच्चाऽपुंसोऽनित्क्याप्परे ।।२।४।१०७।।**

**[अपुंसः]** न पुमान् = अपुमान् । 'नञत्' (३।२।१२५) न०→अ०, 卐 तस्य ।

**[अनित्क्याप्परे]** न् इद् अनुबन्धो यस्याऽसौ नित् । न नित् = अनित् । 'नञत्' (३।२।१२५) न०→अ० । 卐卐 अनिच्चासौ क् च = अनित्क्, तस्मिन् । आबेव परो यस्मादसौ आप्परः, तस्मिन् ।

**[खट्विका, खट्वका, खट्वाका]** खट्व 'आत्' (२।४।१८) आप्प्र०→आ । अल्पा खट्वा । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । 'समानानां०' (१।२।१) दीर्घः । अनेन आ०→इ० । द्वितीये ह्रस्वश्च ।

**[प्रियखट्विका, प्रियखट्वका, प्रियखट्वाका]** प्रिया खट्वा यस्याः सा = प्रियखट्वा । ह्रस्वा प्रियखट्वा । + 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क (?) ('ह्रस्वे' (७।३।४६) कप्प्र०→क) । अनेन इ । द्वितीये ह्रस्वश्च ।

**[सर्विका]** कुत्सिता-ऽल्पा-ऽज्ञाता वा सर्वा = सर्विका । * 'प्राग् नित्यात् कप्' (७।३।२८) कप्प्र०→क । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[दुर्गका]** दुर्ग 'आत्' (२।४।१८) आप्प्र०→आ । अनुकम्पिता दुर्गादेवी दुर्गका । 'ते लुग्वा' (३।२।१०८) इति

---

P 卐 तस्मात् ।

P 卐卐 अनित्संबंधी क् ।

P + 'प्राग् नित्यात् कप्' । (७।३।२८) कप्प्र०→क ।

P * 'यावादिभ्यः कः' (७।३।१५) कप्र० ।

देवीशब्दलोपः । 'लुक्युत्तरपदस्य कप्न्' (७।३।३८) कप्न्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । 'ङ्यादीदूतः के' (२।४।१०४) ह्रस्वः ।

**[खट्वाता]** खट्वाया भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र०→त । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[मालाता]** मालाया भावः । 'भावे त्व-तल्' (७।१।५५) तल्प्र०→त । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[अतिप्रियखट्वाका]** प्रिया खट्वा यस्याऽसौ प्रियखट्वाकः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क । 'परतः स्त्री पुम्वत्०' (३।२।४९) पुंवद्भावः । प्रियखट्वाकमतिक्रान्ताऽसौ अतिप्रियखट्वाका । 'आत्' (२।४।१८) आप्प्र० →आ ।

**[मातृका]** मातृ । मातुस्तुल्या = मातृका । 'तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः' (७।१।१०८) कप्र० । 'आत्' (२।४।१८) आप्प्र०→आ ।।छ।।

## **स्व-ज्ञा-ऽज-भस्त्रा-ऽधातुत्ययकात्** ।।२।४।१०८।।

**[स्वज्ञाऽजभस्त्राऽधातुत्ययकात्]** धातुश्च त्यश्च = धातुत्यौ, न धातुत्यौ = अधातुत्यौ । 'नञत्' (३।२।१२५) न० →अ० । यश्च कश्च = यकौ ।[0] अधातुत्यौ च यकौ च = अधातुत्ययकौ । स्वश्च ज्ञा(ज्ञ)श्च अजश्च भस्त्रश्च अधातुत्ययकौ च = स्वज्ञाजभस्त्राधातुत्ययकम्, तस्मात् ।

**[स्विका, स्वका]** स्व । कुत्सिता स्वा-ज्ञातिः = स्विका ।[x] 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वत् ।

**[अस्विका, अस्वका]** न स्वा = अस्वा । कुत्सिता अस्वा = अस्विका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र० →क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चा-पुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वत् ।

**[निःस्विका, निःस्वका]** निर्गता स्वा = निःस्वा । कुत्सिता निःस्वा = निःस्विका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[बहुस्विका, बहुस्वका]** ईषदपरिसमाप्ता स्वा = बहुस्वा । कुत्सिता बहुस्वा = बहुस्विका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसो०' (२।४।१०७) ह्रस्वः ।

**[ज्ञिका, ज्ञका]** ज्ञ 'आत्' (२।४।१८) आप्प्र०→आ । कुत्सिता ज्ञा = ज्ञिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[अज्ञिका, अज्ञका]** न ज्ञा = अज्ञा । कुत्सिता अज्ञा = अज्ञिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र० →क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[निर्ज्ञिका, निर्ज्ञका]** निर्गता ज्ञा = निर्ज्ञा । कुत्सिता निर्ज्ञा = निर्ज्ञिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र० →क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[बहुज्ञिका, बहुज्ञका]** ईषदपरिसमाप्ता ज्ञा = बहुज्ञा । कुत्सिता बहुज्ञा = बहुज्ञिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ । द्वितीये 'इच्चापुंसो०' (२।४।१०७) ह्रस्वः ।

**[अजिका, अजका]** अज 'आत्' (२।४।१८) आप्प्र०→आ । कुत्सिता अजा = अजिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते'

---

P 0 अधातुत्ययोर्यकौ ।

P x 'प्राग् नित्यात् कप्' (७।३।२८) कप्प्र० । अग्रेऽपि सर्वत्राऽनेन कप्, यत्र विशेषस्तत्र कथ्यते ।

(७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[अनजिका, अनजका]** न अजा = अनजा । कुत्सिता अनजा = अनजिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चापुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[निरजिका, निरजका]** निर्गता अजा = निरजा । कुत्सिता निरजा = निरजिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[बह्वजिका, बह्वजका]** ईषदपरिसमाप्ता अजा = बह्वजा । कुत्सिता बह्वजा = बह्वजिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[निर्भस्त्रिका, निर्भस्त्रका]** निर्गता भस्त्रा यस्याः सा = निर्भस्त्रा । कुत्सिता निर्भस्त्रा = निर्भस्त्रिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[बहुभस्त्रिका, बहुभस्त्रका]** ईषदपरिसमाप्ता भस्त्रा = बहुभस्त्रा । कुत्सिता बहुभस्त्रा = बहुभस्त्रिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[अतिभस्त्रिका, अतिभस्त्रका]** भस्त्रामतिक्रान्ता सा = अतिभस्त्रा । कुत्सिता अतिभस्त्रा = अतिभस्त्रिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ० । अनेन इ । द्वितीये 'इच्चाऽपुंसो०' (२।४।१०७) ह्रस्वः ।

**[परमभस्त्रिका, परमभस्त्रका, परमभस्त्राका]** परमा चासौ भस्त्रा च = परमभस्त्रा । अल्पा परमभस्त्रा = परमभस्त्रिका । 'कुत्सिता० (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ-ह्रस्वश्च ।

**[इभ्यिका, इभ्यका]** इभ । इभमर्हति । 'दण्डादेर्यः' (६।४।१७८) यप्र० । कुत्सिता इभ्या = इभ्यिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । पूर्वेण ह्रस्वः ।

**[क्षत्रियिका, क्षत्रियका]** क्षत्रिय 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता क्षत्रिया = क्षत्रियिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसो०' (२।४।१०७) ह्रस्वः ।

**[आर्यिका, आर्यका]** आर्य 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता आर्या = आर्यिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[चटकिका, चटकका]** चटक 'आत्' (२।४।१०८) आप्प्र०⟶आ । कुत्सिता चटका = चटकिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) ह्रस्वः ।

**[मूषकिका, मूषकका]** मूषक 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता मूषका = मूषकिका । 'कुत्सिता-ऽल्पा०'

(७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसो०' (२।४।१०७) ह्रस्वः ।

**[एलकिका एलकका]** एलक 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता एलका = एलकिका । 'कुत्सिता-ऽल्पा०' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । अनेन इ । द्वितीये 'इच्चाऽपुंसो०' (२।४।१०७) ह्रस्वः ।

**[सुनयिका]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी, सुपूर्व० । सुनयनम् । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता सुनया = सुनयिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो' (२।४।१०७) इ ।

**[सुशयिका]** सु 'शीङ्क् स्वप्ने' (११०५) शी । सुशयनम् । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता सुशया = सुशयिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[अशोकिका]** 'शुच शोके' (९९) शुच् । शोचनं = शोकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०⟶अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । 'क्तेऽनिटश्चजोः क-गौ घिति' (४।१।१११) च०⟶क० । न शोकोऽशोकः । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता अशोका = अशोकिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[सुपाकिका]** 'डुपचींष् पाके' (८९२) पच्, सुपूर्व० । सुपचनं = सुपाकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० ⟶अ । 'क्तेऽनिटश्च-जोः क-गौ घिति' (४।१।१११) च०⟶क० । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता सुपाका = सुपाकिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[दाक्षिणात्यिका]** दक्षिणा । दक्षिणायां (णस्यां) भवा । 'दक्षिणा-पश्चात्-पुरसस्त्यण्' (६।३।१३) त्यण्प्र०⟶त्य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता दाक्षिणात्या । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[पाश्चात्यिका]** पश्चाद्भवा । 'दक्षिणा-पश्चात्-पुरसस्त्यण्' (६।३।१३) त्यण्प्र०⟶त्य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता पाश्चात्या = पाश्चात्यिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र० ⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[इहत्यिका]** इह भवा । 'क्वेहाऽमा-त्र-तसस्त्यच्' (६।३।१६) त्यच्प्र०⟶त्य । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुत्सिता इहत्या = इहत्यिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र०⟶आ । 卐 'इच्चाऽपुंसोऽनित्क्याप्परे' (२।४।१०७) इ ।

**[अमात्यिका]** अमा । अमा भवा । 'क्वेहाऽमा-त्र-तसस्त्यच्' (६।३।१६) त्यच्प्र०⟶त्य । 'आत्' (२।४।१८) आप्प्र० ⟶आ । कुत्सिता अमात्या = अमात्यिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०⟶क । 'आत्' (२।४।१८) आप्प्र० ⟶आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ ।

**[स्विका]** कुत्सिता स्वा-आत्मा आत्मीया वा = स्विका । 'लोकात्' (१।१।३) "आ" अग्रे विश्लेषियइ । 'त्यादि-

P 卐 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्' (७।३।२९) अक्प्र० । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ ।

**[सांकाश्यिका]** संकाश । संकाशेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । सांकाश्ये भवा । 'योपान्त्याद् गुरूपोत्तमादसुप्रख्यादकञ्' (७।१।७२) अकञ्प्र०→अक (?) । ('प्रस्थ-पुर-वहान्त०' (६।३।४३) अकञ्प्र०→अक) । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[काम्पील्यिका]** कम्पील । कम्पीलेन निर्वृत्तम् । 'सुपन्थ्यादेर्ञ्यः' (६।२।८४) ञ्यप्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । काम्पील्ये भवा । 'प्रस्थ-पुर-वहान्त-योपान्त्य-धन्वार्थात्' (६।३।४३) अकञ्प्र०→अक । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[हार्दिकिका]** हृदिक । हृदिकं भजति । 'गोत्र-क्षत्रियेभ्योऽकञ् प्रायः' (६।३।२०८) अकञ्प्र०→अक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आर् । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[श्वाफल्किका]** श्वफल्क । श्वफल्कं भजति । 'गोत्र-क्षत्रियेभ्योऽकञ् प्रायः' (६।३।२०८) अकञ्प्र०→अक । 'वृद्धिः स्वरेष्वादेः०' (७।४।१) वृद्धिः आ । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[कथं बह्वपत्यिका ?, बह्वपत्यका ?]** ईषदपरिसमाप्ता अपत्या = वह्वपत्या । कुत्सिता बह्वपत्या । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । 'इच्चाऽपुंसो०' (२।४।१०७) इ-ह्रस्वश्च ।

**[शुष्किका]** 'शुषंच् शोषणे' (१२०८) शुष् । शुष्यति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'क्षै-शुषि-पचो म-क-वम्' (४।२।७८) त०→क० । 'आत्' (२।४।१८) आप्प्र०→आ । कुत्सिता शुष्का = शुष्किका । 'कुत्सिता-ऽल्पा०' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।।छ।।

**द्व्येष-सूत-पुत्र-वृन्दारकस्य** ।।२।४।१०९।।

**[द्व्येषसूतपुत्रवृन्दारकस्य]** द्विश्च एषश्च सूतश्च पुत्रश्च वृन्दारकश्च = द्व्येषसूतपुत्रवृन्दारकम्, तस्य ।

**[द्विके, द्वके]** द्वि । कुत्सिते द्वे = द्विके । 'लोकात्' (१।१।३) "इ" विश्लेषियइ । 'त्यादि-सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्' (७।३।२९) अक्प्र० । 'आ द्वेरः' (२।१।४१) इ०→अ० । 'आत्' (२।४।१८) आप्प्र०→आ । प्रथमा औ । 'औता' (१।४।२०) आ०→ए० । अनेन इ ।

**[एषिका, एषका]** एतद् । कुत्सिता एषा = एषिका । 'लोकात्' (१।१।३) "अद्" विश्लेषियइ । 'त्यादि-सर्वादेः' (७।३।२९) अक्प्र० । 'आ द्वेरः' (२।१।४१) द०→अ० । 'लुगस्या०' (२।१।११३) अलोपः । प्रथमा सि । 'तः सौ सः' (२।१।४२) त०→स० । 'आत्' (२।४।१८) आप्प्र०→आ । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । अनेन इ ।

**[अस्विका]** न स्वा = अस्वा । कुत्सिताऽल्पाऽज्ञाता वा अस्वा = अस्विका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[सूतिका, सूतका]** सूत 'आत्'(२।४।१८) आप्प्र०→आ । 卐 ह्रस्वा सूता = सूतिका । 'ह्रस्वे' (७।३।४६) कप्प्र० →क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

---

P 卐 कुत्सिता सूता । 'प्राग् नित्यात् कप्' (७।३।२८) कप्प्र० ।

**[पुत्रिका, पुत्रका]** पुत्र । कृत्रिमः पुत्रः = पुत्रकः, स्त्री चेत् = पुत्रिका । 'तनु-पुत्रा-ऽणु-बृहती-शून्यात् सूत्र-कृत्रिम-निपुणा-ऽऽच्छादन०' (७।३।२३) कप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[वृन्दारिका, वृन्दारका]** वृन्द ।+ वृन्दमस्याऽस्तीति । 'वृन्दादारकः' (७।२।११) आरकप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र० → आ । अनेन इ ।

**[एषिका]** 'इषत् इच्छायाम्' (१४१९) इष् । इच्छतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[एतिकाः]** एता एव । 'यावादिभ्यः कः' (७।३।१५) कप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।१११) इ ।।छ।।

### वौ वर्तिका ।।२।४।११०।।

**[वर्तिका, वर्तका-शकुनिः]** 'वृतूङ् वर्त्तने' (९५५) वृत् । वर्त्तत इति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[वर्तिका-भागुरिर्लोकायतस्य व्याख्यात्रीत्यर्थः]** वृत् । वर्त्तमानं प्रयुङ्क्ते । 'प्रयोक्तृव्या०' (३।४।२०) णिग्प्र० । वर्त्तयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०' (२।४।११) इ ।।छ।।

### अस्याऽयत्-तत्-क्षिपकादीनाम् ।।२।४।१११।।

**[अयत्तत्क्षिपकादीनाम्]** क्षिपक आदिर्येषां ते = क्षिपकादयः, यच्च तच्च क्षिपकादयश्च = यत्तत्क्षिपकादयः, न यत्तत्क्षिपकादयः = अयत्तत्क्षिपकादयस्तेषाम्

**[जटलिका]** जटा । जटा अस्य सन्ति । 'काला-जटा-घाटात् क्षेपे' (७।२।२३) इलप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । कुत्सिताऽल्पाऽज्ञाता वा जटिला = जटिलिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[बधिरिका]** कुत्सिताऽल्पाऽज्ञाता वा बधिरा = बधिरिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[मुण्डिका]** कुत्सिताऽल्पाऽज्ञाता वा मुण्डा = मुण्डिका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[कारिका]** 'डुकृंग् करणे' (८८८) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[पाचिका]** 'डुपचींष् पाके' (८९२) पच् । पचतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'च-जः क-गम्' (२।१।८६) च०→क० । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[मद्रिका]** मद्रेषु भवा = मद्रिका । 'वृजि-मद्राद् देशात् कः' (६।३।३८) कप्र० । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[गोका]** गो । कुत्सिता गौः = गोका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ ।

---

P + प्रशस्तं वृन्दमस्याऽस्ति ।

**[नौका]** नौ । कुत्सिता नौः = नौका । 'कुत्सिता-ऽल्पा-ऽज्ञाते' (७।३।३३) कप्प्र०→क । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[जीवका]** 'जीव प्राणधारणे' (४६५) जीव् । जीवतादित्याशास्यमाना जीवका । 'आशिष्यकन्' (५।१।७०) अकन्प्र० →अक । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[नन्दका]** 'टुनदु समृद्धौ' (३१२) नद् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) नन्द् । नन्दतादित्याशास्यमाना = नन्दका । 'आशिष्यकन्' (५।१।७०) अकन्प्र०→अक । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[शका]** 'शक्लृंट् शक्तौ' (१३००) शक् । शक्नोतीति । 'अच्' (५।१।४९) अच्प्र०→अ । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[तका]** 'तक हसने' (५१) तक् । तकतीति । 'अच्' (५।१।४९) अच्प्र०→अ । 'आत्' (२।४।१८) आप्प्र० →आ ।

**[कारकः]** 'डुकृंग् करणे' (८८८ ) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

**[हारकः]** 'हृंग् हरणे' (८८५) हृ । हरतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

**[बहुपरिव्राजका मथुरा]** परिव्रजन्तीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । वहवः परिव्राजका यस्यां सा ।

**[बहुमद्रका सेना]** मद्र । मद्रेषु भवा । 'वृजि-मद्राद् देशात् कः' (६।३।३८) कप्र० । बहवो मद्रका यस्यां सा ।

**[यका]** यद् । कुत्सिता या = यका । 'लोकात्' (१।१।३) "अद्" विश्लेषियइ । त्यादि-सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्' (७।३।२९) अक्प्र० । 'आ द्वेरः' (२।१।४१) द० अ० । ' लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[सका]** तद् । कुत्सिताऽल्पाऽज्ञाता वा सा = सका । 'लोकात्' (१।१।३) "अद्" विश्लेषियइ । 'त्यादि-सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्' (७।३।२९) अक्प्र० । 'आ द्वेरः' (२।१।४१) द०→अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । प्रथमा सि । 'तः सौ सः' (२।१।४२) त०→स० । 'दीर्घङ्याव्०' (१।४।४५) सिलोपः ।

**[क्षिपका]** 'क्षिपींत् प्रेरणे' (१३१७) क्षि । क्षिपतीति । 'ध्रु-धून्दि-रुचि-तिलि-पुलि-कुलि-क्षिपि-क्षुपि-लिखिभ्यः कित्' (उणा० २९) किद् अकप्र० ।

**[ध्रुवका]** 'ध्रुं स्थैर्ये च' (१६) ध्रु । ध्रुवतीति । 'ध्रु-धून्दि-रुचि-तिलि-पुलि-कुलि-क्षिपि-क्षुपि-लिखिभ्यः कित्' (उणा० २९) किद् अकप्र० ॥छ॥

### नरिका-मामिका ॥२।४।११२॥

**[नरिकामामिका]** नरिका च मामिका च = नरिकामामिका । 卐 प्रथमा सि । सूत्रत्वाल्लोपः ।

**[नरिका]** नर 'कैं शब्दे' (३६) कै । 'आत् सन्ध्यक्षरस्य' (४।२।१) का । नरान् कायतीति । 'आतो डोऽह्वा-वा मः' (५।१।७६) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । अनेन इ ।

**[मामिका]** अस्मद् । ममेयं = मामिका । 'युष्मदस्मदोऽञीनञौ युष्माकाऽस्माकं चास्यैकत्वे तु तवक-ममकम्'

P 卐 प्रथमा औ ।

(६।३।६७) अञ्प्र० - अस्मद्० ममकादेशः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'आत्' (२।४।१८) आप्प्र०—>आ । अनेन इ ।।छ।।

**तारका-वर्णका-ऽष्टका ज्योतिस्-तान्तव-पितृदेवत्ये** ।।२।४।११३।।

**[तारकावर्णकाऽष्टका]** तारका च वर्णका च अष्टका च = तारकावर्णकाऽष्टका । + प्रथमा सि । सूत्रत्वाल्लोपः ।

**[ज्योतिस्तान्तवपितृदेवत्ये]** ज्योतिश्च तान्तवश्च पितृदेवत्यं च = ज्योतिस्तान्तवपितृदेवत्यम्, तस्मिन् ।

**[तारका ज्योतिः]** 'तॄ प्लवन-तरणयोः' (२७) तॄ । तरतीति । 'णक-तृचौ' (५।१।४८) णकप्र०—>अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'आत्' (२।४।१८) आप्प्र०—>आ । अन्यत्र "**तारिका**" ।

**[वर्णका तान्तवः प्रावरणविशेषः]** 'वर्णण् वर्णक्रिया-विस्तार-गुणवचनेषु' (१८७०) वर्ण । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०—>इ । 'अतः' (४।३।८२) अलोपः । वर्णयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०—>अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'आत्' (२।४।१८) आप्प्र०—>आ । अन्यत्र "**वर्णिका**" ।

**[अष्टका पितृदेवत्यं कर्म]** 'अशौटि व्याप्तौ' (१३१४) अश् । अश्नुत इति । 'इष्यशि-मसिभ्यस्तकक्' (उणा० ७७) तकक्प्र०—>तक । 'यज-सृज-मृज-राज-भ्राज-भ्रस्ज-व्रस्च-परिव्राजः शः षः' (२।१।८७) श०—>ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०—>ट० । 'आत्' (२।४।१८) आप्प्र०—>आ । पितैव देवता = पितृदेवता,卐 पितृदेवतार्थं कर्म । 'देवतान्तात् तदर्थे' (७।१।२०) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानाद०' (१।४।४६) अलोपः । अन्यत्र "**अष्टिका खारी**" अष्टन् । अष्टौ द्रोणाः परिमाणमस्या(:) सा = अष्टिका । 'शेषाद् वा' (७।३।१७५) कच्प्र०—>क, (?) । ('संख्या-ऽतेश्चाऽशत्-ति-ष्टेः कः' (६।४।१३०) कप्र०) । 'आत्' (२।४।१८) आप्प्र०—>आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ । खारी प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।।छ।।

*।। इत्याचार्यश्रीहेमचन्द्रविरचितायां बृहद्वृत्तौ द्वितीयस्याध्यायस्य चतुर्थः पादः– – द्वितीयोऽध्यायः संपूर्णः ।।*

---

P + तत् । P 卐 पितृदेवतायै इदं कर्म ।

॥ अर्हम् ॥

## ॥ अथ तृतीयाऽध्यायस्य प्रथमः पादः ॥

**धातोः पूजार्थस्वति-गतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च ॥३।१।१॥**

**[धातोः]** 'डुधांग्क् धारणे च' (११३९) धा । दधाति क्रियाभिधानव्यक्तिमिति धातुः । 'कृ-सि-कम्यमि-गमि-तनि-मनि-जन्यसि-मसि-सच्यवि-भा-धा-गा-ग्ला-म्ला-हनि-हा-या-हि-क्रुशि-पूभ्यस्तुन्' (उणा० ७७३) तुन्प्र० । तस्य तस्माद्वा ।

**[पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः]** सुश्च अतिश्च = स्वती, पूजा अर्थो ययोस्तौ = पूजार्थौ, पूजार्थौ च तौ स्वती च = पूजार्थस्वती । अधिश्च परिश्च = अधिपरी,卐 गतमर्थो ययोस्तौ = गतार्थौ, गतार्थौ च तौ अधिपरी च = गतार्थाधिपरी । अतिक्रमोऽर्थो यस्याऽसौ अतिक्रमार्थः, अतिक्रमार्थश्चासावतिश्च = अतिक्रमाऽर्थातिः, पूजार्थस्वती च गतार्थाधिपरी च अतिक्रमार्थातिश्च = पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थाति(त)यः । 'वृजैण् वर्जने' (१९५५) वृज् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातीन् वर्जयतीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र०→अ । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[प्रादिः]** प्र आदिर्यस्याऽसौ प्रादिः ।

**[उपसर्गः]** उप-समीपे धातोः भूत्वा सृज्यते इत्युपसर्गः ।

**[प्रणयति]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी, अनेन प्रपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अदुरुपसर्गाऽन्तरो ण-हिनु-मीनाऽऽनेः' (२।३।७७) न०→ण० ।

**[परिणयति]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी, अनेन परिपूर्व० । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अदुरुपसर्गाऽन्तरो ण-हिनु-मीनाऽऽनेः' (२।३।७७) न०→ण० ।

**[अभिषिञ्चति]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच्, अनेन अभिपूर्व० । वर्त्त० तिव् । 'तुदादेः शः' (३।४।८१) शप्र०→अ । 'मुचादि-तृफ-दृफ-गुफ०' (४।४।९९) नोऽन्तः ।

**[प्रलम्भः]** 'डुलभिंष् प्राप्तौ' (७८६) लभ्, अनेन प्रपूर्व० । प्रलम्भनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'उपसर्गात् खल्घञोश्च' (४।४।१०७) नोऽन्तः ।

---

P 卐 गतस्वाऽर्थौ(र्थो) ययोस्तौ ।

**[उपलम्भः]** 'डुलभिंष् प्राप्तौ' (७८६) लभ्, अनेन उपपूर्व० । उपलम्भनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० →अ । 'उपसर्गात् खल्घञोश्च' (४।४।१०७) नोऽन्तः ।

**[प्रनायको देशः]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । नयतीति नायकः । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । प्रगता नायका यस्मात् सः ।

**[सुसिक्तं भवता]** सु 'षिंचींत् क्षरणे' (१३२१) । षिच् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच् । 卐 पूजार्थं सिच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिट०' (४।१।१११) च०→क० (?) । ('च-जः क-गम्' (२।१।८६) च०→क०) ।

**[सुस्तुतं भवता]** सु 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्तु । 'निमित्ताऽभावे नैमित्तिकस्याऽप्यभावः' (न्यायसंग्रहः १/२९) स्तु । पूजार्थं स्तवनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[अतिसिक्तं भवता]** + 'पूजार्थं सेचनं = अतिसिक्तम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[अतिस्तुतं भवता]** पूजार्थं स्तवनं = अतिस्तुतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[सुषिक्तं नाम किं तवात्र ?]** सुसिच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिट०' (४।१।१११) च०→क० (?) । ('च-जः क-गम्' (२।१।८६) च०→क०) ।

**[अध्यागच्छति, आगच्छत्यधि]** अधि-आङ्, अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'गमिषद्यमश्छः' (४।२।१०६) म०→छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ०→च० । उपरिगच्छतीत्यर्थः ।

**[पर्यागच्छति, आगच्छति परि]** परि-आङ्, अम (३९२) - द्रम (३९३) - हम्म (३९४) मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'गमिषद्यमश्छ' (४।२।१०६) म०→छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ०→च० । सर्वतो गच्छतीत्यर्थः ।

**[पर्यानीतम्]** परि आनीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'अदुरुपसर्गान्तरो०' (२।३।७७) णत्वं न भवति ।

**[अति सिक्त्वा]** अतिक्रमेण सेचनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ।

**[अति स्तुत्वा]** अतिक्रमेण स्तवनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ।

**[अतिशय्य]** अति-शी । अतिशयनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । अधिको भूत्वेत्यर्थः ।

**[प्रतिष्ठते]** प्रतिष्ठते = प्रचलतीत्यर्थः ।

---

P 卐 सेचनं = सेकः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० । पूजितं सिच्यते स्म ।

P + अतिशयेन पूजितं सिच्यते स्म = अतिसिक्तम् ।

**[प्रवसति]** प्रवसति = गच्छति इत्यर्थः ।

**[प्रलीयते]** प्रलीयते = विनश्यति इत्यर्थः ।

**[प्रतीक्षते]** प्रतीक्षते = प्रतिपालयतीत्यर्थः ।

**[प्रतिपालयति]** प्रतिपालयति = प्रतीक्षते इत्यर्थः ।

**[प्राणिति]** प्र 'अन प्राणने' (१०८९) अन् । वर्त्त० तिव् । 'रुत्पञ्चकाच्छिदयः' (४।४।८८) इट्→इ । 'द्वित्वेऽप्यन्तेप्यनितेः परेस्तु वा' (२।३।८१) न०→ण० ।

**[निष्टपति]** निस् 'तपं सन्तापे' (३३३) तप् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'निसस्तपेऽनासेवायाम्' (२।३।३५) षत्वम् । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०→ट०

**[प्रलम्बते]** प्र 'लबुङ् अवस्रंसने च' (७६६) लब् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) लम्ब् । वर्त्त० ते । 'कर्त्तर्यनद्भ्य शव्' (३।४।७१) शव् ।

**[प्रार्थयते]** प्र 'अर्थणि उपयाचने' (१९३१) अर्थ । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।१७) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[विजयते]** वि 'जिं अभिभवे' (८ ) जि । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'परा-वेर्जेः' (३।३।२८) आत्मनेपदम् ।

**[विजानाति]** वि 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । वर्त्त० तिव् । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । 'जा ज्ञा-जनोऽत्यादौ' (४।२।१०४) जा ।

**[निमीलति]** नि 'मील निमेषणे' (४१५) मील् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[निखञ्जति]** नि 'खजु गतिवैकल्ये' (१४७) खज् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) खञ्ज् । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् ।

**[प्रेजुः]** प्र 'यजीं देवपूजासङ्गतिकरणदानेषु' (९९१) यज् । परोक्षा उस् । 'यजादि-वचेः किति' (४।१।७९) इत्यादिना य्वृत् य०→इ० । 'द्विर्धातुः परोक्षा ङे०' (४।१।१) "इज्" द्वित्वम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) जलोपः । अन्तरङ्गत्वाद् दीर्घत्वं तत एत्वम् । अथवा यज्, परोक्षा उस् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् य०→इ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्वित्वम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) जलोपः । प्रथममेत्वं ततो अय् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) यलोपः । पुनरेत्वं कार्यम् ।

**[प्रोपुः]** प्र 'डुवपीं बीजसन्ताने' (९९५) वप् । परोक्षा उस् । 'यजादि-वचेः किति' (४।१।७९) इत्यादिना य्वृत् व०→उ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) "उप्" द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) पलोपः । अन्तरङ्गत्वाद् दीर्घत्वं तत ओत्वम् । अथवा वप्, परोक्षा उस् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'द्विर्धातुः परोक्षा-ङे०' (४।१।१) द्वित्वम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) पलोपः । प्रथममोत्वं ततो अव् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) वलोपः । पुनरोत्वं कार्यम् ।

**[सुमनायते]** सुमनस् । शोभनं मनो यस्याऽसौ सुमनाः । असुमनाः सुमना भवति । 'च्व्यर्थे भृशादेः स्तोः' (३।४।२९) क्यङ्प्र०→य - सलोपश्च । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[दुर्मनायते]** दुर्मनस् । दुष्टं मनो यस्याऽसौ दुर्मनाः । अदुर्मना दुर्मना भवति । 'च्व्यर्थे भृशादेः स्तोः' (३।४।२९) क्यङ्प्र०→य-सलोपश्च । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अभिमनायते]** अभि मनो यस्याऽसौ अभिमनाः । अनभिमना अभिमना भवति । 'च्व्यर्थे भृशादेः स्तोः' (३।४।२९) क्यङ्प्र०→य - सलोपश्च । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः । वर्त्त० ते । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अतिहस्तयति]** अति - हस्तिन् । हस्तिनातिक्रामति । 'णिज्बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र०→इ । 'त्रन्त्यस्वरादेः' (७।४।४३) अन्त्यस्वरादिलोपः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[अभिषेणयति]** अभि - सेना । सेनया अभियाति । 'णिज्बहुलं नाम्नः कृगादिषु' (३।४।४२) णिच्प्र० । 'त्रन्त्यस्वरादेः' (७।४।४३) अन्त्यस्वरादिलोपः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।।छ।।

**ऊर्याद्यनुकरण-च्वि-डाचश्च गतिः ।।३।१।२।।**

**[ऊर्याद्यनुकरणच्विडाचः]** ऊरी आदिर्येषां ते = ऊर्यादयः । 'ऊर्यादयश्च अनुकरणं च च्विश्च डाच् च = ऊर्याद्यनुकरण-च्विडाचः, प्रथमा जस् ।

**[गतिः]** गम् । गमनं = गतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति ।

**[ऊरीकृत्य]** ऊरी 'डुकृंग् करणे' (८८८ ) कृ । ऊरीकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[उररीकृत्य]** उररी 'डुकृंग् करणे' (८८८ ) कृ । उररीकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[ऊरीकृतम्]** ऊरीकरणम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[उररीकृतम्]** उररीकरणम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[खाट्कृत्य]** खाट्करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[फूत्कृत्य]** फूत्करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[शुक्लीकृत्य]** अशुक्लस्य शुक्लस्य करणं पूर्वम् । 'कृ-भ्वस्तिभ्यां-कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्याऽनव्ययस्य' (४।३।१११) ई । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[घटीकृत्य]** अघटस्य घटस्य करणं पूर्वम् । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वावर्णस्याऽनव्ययस्य' (४।३।१११) ई । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यबादेशः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[पटपटाकृत्य]** पटत् । अपटत् पटत् करणं पूर्वम् । 'अव्यक्ताऽनुकरणादनेकस्वरात् कृ-भ्वस्तिनाऽनितौ द्विश्च' (७।२।१४५) डाच्प्र०→आ, पटत् द्विर्वचनं च । 'डाच्यादौ' (७।२।१४९) अग्रेतनस्य तकारस्य लोपः । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[सपत्राकृत्य]** असपत्रस्य सपत्रस्य करणं पूर्वम् । 'सपत्र-निष्पत्रादतिव्यथने' (७।२।१३८) डाच्प्र०→आ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अलोपः । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[प्रकृत्य]** प्रकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[पराकृत्य]** पराकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[प्रकृतम्]** प्रकरणं = प्रकृतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[पराकृतम्]** पराकरणं = पराकृतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।।छ।।

**कारिका स्थित्यादौ ।।३।१।३।।**

**[स्थित्यादौ]** स्थितिरादिर्यस्याऽसौ स्थित्यादिस्तस्मिन् ।

**[कारिकाकृत्य]** 'डुकृंग् करणे' (८८८) कृ । करणं = कारिका । 'भावे' (५।३।१२२) णकप्र० । 'अस्याऽयत्०' (२।४।१११) इ । कारिकायाः करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः ।

**[कारिकां कृत्वा]** करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० ।।छ।।

**भूषा-ऽऽदर-क्षेपेऽलं-सदसत् ।।३।१।४।।**

**[भूषाऽऽदरक्षेपे]** भूषा च आदरश्च क्षेपश्च = भूषाऽऽदरक्षेपम्, तस्मिन् ।

**[अलंसदसत्]** अलं च सच्च असच्च । प्रथमा जस् । सूत्रत्वात् लोपः ।

**[अलंकृत्य]** अलंकरणं पूर्वम् ।

**[अलंकृतम्]** अलंकरणं = अलंकृतम् । 'क्लीवे क्तः' (५।३।१२३) क्तप्र०→त ।

**[सत्कृत्य]** सत्करणं पूर्वम् ।

**[सत्कृतम्]** सत्करणं = सत्कृतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[असत्कृत्य]** असत्करणं पूर्वम् ।

**[असत्कृतम्]** असत्करणं = असत्कृतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[अलं कृत्वा]** अलं करणेन । 'निषेधेऽलं-खल्वोः क्त्वा' (५।४।४४) क्त्वाप्र०→त्वा ।

**[सत् कृत्वा]** सद्विद्यमानं करणं पूर्वम् । क्त्वाप्र० ।

**[असत् कृत्वा]** असदविद्यमानं करणं पूर्वम् । क्त्वाप्र० ॥छ॥

**अग्रहा-ऽनुपदेशेऽन्तरदः ॥३।१।५॥**

**[अग्रहाऽनुपदेशे]** न ग्रहोऽग्रहः । न उपदेशोऽनुपदेशः । अग्रहश्च अनुपदेशश्च = अग्रहाऽनुपदेशम्, तस्मिन् ।

**[अन्तरदः]** अन्तर् च अदस् च = अन्तरदः । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[अन्तर्हत्य]** अन्तर् 'हनंक् हिंसा-गत्योः' (११००) हन् । अन्तर्हननं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'यपि' (४।२।५६) - नलोपः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[अदः कृत्यैतत् करिष्यतीति चिन्तयति]** अदःकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[अन्तर्हत्वा मूषिकां श्येनो गतः]** अन्तर्हन(ण)नं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ।

**[अदः कृत्वा गतः]** अदस्, अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः ॥छ॥

**कणे-मनस् तृप्तौ ॥३।१।६॥**

**[कणेमनस्]** + कणे च मनश्च = कणेमनः । 卐 औ । सूत्रत्वात् लोपः ।

**[कणेहत्य पयः पिबति]** कणेहननं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'यपि' (४।२।५६) नलोपः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[मनोहत्य पयः पिबति]** मनोहननं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'यपि' (४।२।५६) नलोपः । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ॥छ॥

**पुरोऽस्तमव्ययम् ॥३।१।७॥**

**[पुरोऽस्तम्]** पुरस् च अस्तम् च = पुरोऽस्तम् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ('अव्ययस्य' (३।२।७) सिलोपः) । 'अतोऽति रोरुः' (१।३।२०) र०→उ० ।

**[अव्ययम्]** 'इंण्क् गतौ' (१०७५) इ, विपूर्व० । न व्येति = न क्षयं यातीत्यव्ययम् । 'लिहादिभ्यः' (५।१।५०) अच्प्र० ।

**[पुरस्कृतम्]** पुरस्करणम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । 'नमस्-पुरसो गतेः०' (२।३।१) र०→स० ।

**[अस्तंगत्य पुनरुदेति सविता]** अस्तङ्गमनं पूर्वम् । 'वा मः' (४।२।५७) मलोपः ।

**[अस्तंगतानि दुःखानि]** अस्तम् अम (३९२) - द्रम (३९३) - हम्म (३९४) मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । अस्तंगमनानि । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०→इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[पुरः कृत्वा]** पुर् द्वितीया शस् ।

**[अस्तं कृत्वा काण्डं गतः]** 'असूच् क्षेपणे' (१२२१) अस् । अस्यते । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ॥छ॥

---

P + कणेश्च । P 卐 तत् ।

**गत्यर्थ-वदोच्छः** ॥३।१।८॥

**[गत्यर्थवदः]** गतिरर्थो येषां ते = गत्यर्थाः, गत्यर्थाश्च वद् च = गत्यर्थवद्, तस्य ।

**[अच्छगत्य]** अच्छशब्दोऽभिशब्दार्थे दृढार्थे च । अच्छगमनं पूर्वम् ।

**[अच्छव्रज्य]** अच्छ धृज (१३०) - धृजु (१३१) - ध्वज (१३२) - ध्वजु (१३३) - ध्रज (१३४) - ध्रजु (१३५) - वज (१३६) - 'व्रज गतौ' (१३७) व्रज् । अच्छव्रजनं पूर्वम् ।

**[अच्छोद्य]** अच्छ 'वद व्यक्तायां वाचि' (९९८) वद् । अच्छवदनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० ।

**[अच्छ कृत्वा गतः]** अच्छ करणं पूर्वम् । क्त्वाप्र० ॥छ॥

**तिरोऽन्तर्धौ** ॥३।१।९॥

**[अन्तर्धौ]** अन्तर्धानम् । 'अन्तर्धिः' (५।३।८९) किप्र० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः, तस्मिन् ।

**[तिरोभूय]** तिरस् 'भू सत्तायाम्' (१) भू । तिरोभवनं पूर्वम् ।

**[तिरोधाय]** तिरोधानं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् ॥छ॥

**कृगो नवा** ॥३।१।१०॥

**[तिरस्कृत्य, तिरःकृत्य, तिरःकृत्वा]** तिरस् 'डुकृंग् करणे' (८८८ ) कृ । तिरस्करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'तिरसो वा' (२।३।२) र०→स० ।

**[तिरः कृत्वा काष्ठं गतः]** करणं पूर्वम् ॥छ॥

**मध्ये-पदे-निवचने-मनस्युरस्यनत्याधाने** ॥३।१।११॥

**[मध्येपदेनिवचनेमनस्युरसि]** 卐 मध्ये च पदे च निवचने च मनसि च उरसि च = मध्येपदेनिवचनेमनस्युरसि । प्रथमा जस् । सूत्रत्वात् लोपः ।

**[अनत्याधाने]** न अत्याधानमनत्याधानम्, तस्मिन् ।

**[मध्येकृत्य, मध्ये कृत्वा]** मध्येकरणं पूर्वम् ।

**[पदेकृत्य, पदे कृत्वा]** पदेकरणं पूर्वम् ।

**[निवचनेकृत्य, निवचने कृत्वा]** निवचनेकरणं पूर्वम् ।

**[मनसिकृत्य, मनसि कृत्वा]** मनसिकरणं पूर्वम् ।

**[उरसिकृत्य, उरसि कृत्वा]** उरसिकरणं पूर्वम् । सर्वत्र 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । एवमग्रेऽपि समासः ॥छ॥

**उपाजे-ऽन्वाजे** ॥३।१।१२॥

**[उपाजेऽन्वाजे]** उपाजे च अन्वाजे च = उपाजेऽन्वाजे । प्रथमा औ । सूत्रत्वात् लोपः ।

---

P 卐 मध्येश्च पदेश्च निवचनेश्च मनसिश्च उरसिश्च ।

**[उपाजेकृत्य, उपाजे कृत्वा]** उपाजेकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् ।

**[अन्वाजेकृत्य, अन्वाजे कृत्वा]** अन्वाजेकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् ।।छ।।

## स्वाम्येऽधिः ।।३।१।१३।।

**[स्वाम्ये]** स्व । स्वमस्याऽस्तीति स्वामी । 'स्वान्मिन्नीशे' (७।२।४९) मिन्प्र० - दीर्घश्च आ । स्वामिनो भावः = स्वाम्यम् । 'पति-राजान्तगुणाङ्गराजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०—>य । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्त्यस्वरादिलोपः, तस्मिन् ।

**[चैत्रं ग्रामेऽधिकृत्याधि कृत्वा वा गतः]** अधिकरणं पूर्वम् । अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गच्छति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । 'यमि-रमि-नमि०' (४।२।५५) मलोपः ।।छ।।

## साक्षादादिश्च्व्यर्थे ।।३।१।१४।।

**[साक्षादादिः]** साक्षात् आदिर्यस्याऽसौ ।

**[च्व्यर्थे]** 卐 च्वेरर्थः = च्व्यर्थस्तस्मिन् ।

**[साक्षात्कृत्य, साक्षात् कृत्वा]** असाक्षात् साक्षात्करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[मिथ्याकृत्य, मिथ्या कृत्वा]** अमिथ्या मिथ्याकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[लवणीकृत्य]** अलवणस्य लवणस्य करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई ।

**[उष्णीकृत्य]** अनुष्णस्य उष्णस्य करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या०' (४।३।१११) ई ।।छ।।

## नित्यं हस्ते-पाणावुद्वाहे ।।३।१।१५।।

**[हस्तेपाणौ]** हस्ते च पाणौ च = हस्तेपाणौ । औ । सूत्रत्वात् लोपः ।

**[हस्तेकृत्य]** हस्तेकरणं पूर्वम् ।

**[पाणौकृत्य]** पाणौकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः ।।छ।।

## प्राध्वं बन्धे ।।३।१।१६।।

**[प्राध्वंकृत्य]** प्राध्वंकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः ।

---

P 卐 च्विरर्थो यस्य सः च्व्यर्थस्तस्मिन् ।

**[प्राध्वं कृत्वा शकटं गतः]** प्रगतमध्वानम् । 'उपसर्गादध्वनः' (७।३।७९) अत्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । ततोऽम् । 'अतः स्यमोऽम्' (१।४।५७) अम् ॥छ॥

**जीविकोपनिषदौपम्ये ॥३।१।७७॥**

**[जीविकोपनिषद्]** जीविका च उपनिषद् च = जीविकोपनिषद् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[औपम्ये]** 卐 उपमा । उपमाया भावः । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) आलोपस्तस्मिन् ।

**[जीविकाकृत्य]** जीविकामिव करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः ।

**[उपनिषत्कृत्य]** उपनिषदिव करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य०' (४।४।११३) तोऽन्तः ॥छ॥

**नाम नाम्नैकार्थ्ये समासो बहुलम् ॥३।१।१८॥**

**[ऐकार्थ्ये]** एकोऽर्थो यस्याऽसौ एकार्थः । एकार्थस्य भावः = ऐकार्थ्यम् । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तस्मिन् ।

**[समासः]*** समस्यन्ते = संक्षिप्यन्तेऽनेकार्थानि नामानीति समासः ।

**[बहुलम्]** बहु 'लांक् आदाने' (१०६८) ला । + बहून् प्रवृत्ति-निवृत्त्यादीन् अर्थान् लातीति । 'क्वचित्' (५।१।१७१) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

नित्यसमासत्वाद् वाक्यं न भवतीति तात्पर्यार्थम् ।

**[कुम्भकारः]** कुम्भं करोत्यत्र नन्वत्र कुंभं(भ)शब्दाद् द्वितीया न प्राप्नोति किन्तु 'कर्मणि कृतः' (२।२।८३) इति षष्ठी, सत्यम् - न नाम्येकस्वरात्०' (३।२।९) इत्यत्राऽमो ग्रहणात् ।

**[छात्राणां पञ्चमः]** छात्राणामित्याद्यत्र 'तृप्तार्थ-पूरणा-ऽव्यया०' (३।१।८५) इति समासो न स्यात् ।

**[रामो जामदग्न्यः]** जमदग्नि । जमदग्नेरपत्यं [वृद्धं] जामदग्न्यः । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः ।

**[विस्पष्टपटुः]** विस्पष्टं पटुः ।

**[विविक्तकषायः]** विविक्तं कषायः ।

**[व्यक्तलवणः]** व्यक्तं लवणः ।

**[संपन्नमधुरः]** संपन्नं मधुरः ।

**[पट्वम्लः]** पटुं अम्लः ।

---

P 卐 उपमानमुपमा । 'उपसर्गादातः' (५।३।११०) अङ्प्र० । उपमैव = औपम्यम् । 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) ट्यण्प्र० ।

P * समसनं = समासः । समस्यन्ते नामान्यत्रेति वा समासः । 'व्यञ्जनाद् घञ्' (५।३।१३२) घञ्प्र० ।

P + बहु लातीति । 'आतो डोऽह्वा-वा-मः' (५।१।७६) डप्र० ।

**[निपुणपण्डितः]** निपुणं पण्डितः ।

**[कुशलदक्षः]** कुशलं दक्षः ।

**[चपलवत्सलः]** चपलं वत्सलः ।

**[दारुणाध्यायकः]** अधीतेऽध्यायकः । णकप्र० । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । दारुणमध्यायकः ।

**[अनाज्ञाताध्यायकः]** अ(ना)ज्ञातमध्यायकः ।

**[अयुताध्यायकः]** अयुतं - असंमिलितमध्यायकः ।

**[अद्भुताध्यायकः]** अद्भुतमध्यायकः ।

**[भृशाध्यायकः]** भृशमध्यायकः ।

**[घोराध्यायकः]** घोरमध्यायकः ।

**[परमाध्यायकः]** परममध्यायकः ।

**[स्वध्यायकः]** सुष्ठु अध्यायकः ।

**[अत्यध्यायकः]** अतिशयेनाऽध्यायकः ।

**[सर्वचर्मीणो रथः]** सर्वश्चर्मणा कृतः । 'सर्वचर्मण ईनेनञौ' (६।३।१९५) ईनप्र० । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः ।

**[अद्यश्वीना गौः]** अद्य-श्वस् । अद्य श्वो वा विजायते । 'समांसमीनाऽद्यश्वीना-ऽद्यप्रातीना-ऽऽगवीन-साप्तपदीनम्' (७।१।१०५) ईनप्र० । 'प्रायोऽव्ययस्य' (७।४।६५) अस्लोपः । श्व(स्)शब्देन कल्पः कथ्यते ।

**[दशैकादशिकः]** दशभिरेकादश = दशैकादश, तान् गृह्णाति । 'दशैकादशादिकश्च' (६।४।३६) इकप्र० ।

**[ऊर्ध्वमौहूर्तिकम्]** ऊर्ध्वं मुहूर्ताद्भवः(वम्) । सप्तमी चोर्ध्वमौहूर्तिके' (५।३।१२) "मौ" निर्देशात् । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः मौ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[और्ध्वदेहिकम्]** ऊर्ध्वं देहाद्भवः(वम्) । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र०⟶इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऊ० ⟶ औ ।

**[और्ध्वदमिकम्]** ऊर्ध्वं दमिकात् (?) (दमात्) भवः(वम्) । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र०⟶इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ ।

**[कृतपूर्वी कटम्]** कृतः(तं) पूर्वं कटोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।

**[भुक्तपूर्वी ओदनम्]** भुक्तः(क्तं) पूर्वमोदनोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः ।

**[गतपूर्वी ग्रामम्]** गतः(तं) पूर्वं ग्रामोऽनेन । 'पूर्वमनेन सादेश्चेन्' (७।१।१६७) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । कल्पे इत्यादौ उत्तरपदप्रधानत्वात् ।

**[दृष्टपूर्वः]** दृष्टः पूर्वम् ।

**[श्रुतपूर्वः]** श्रुतः पूर्वम् ॥छ॥

४४

**सुज्-वाऽर्थे संख्या संख्येये संख्यया बहुव्रीहिः ॥३।१।१९॥**

**[सुज्वार्थे]** सुच् च वाश्च = सुज्वौ, सुज्वोरर्थः = सुज्वार्थस्तस्मिन् ।

**[बहुव्रीहिः]** 卐 बहवो व्रीहयो यस्य सः ।

**[द्विदशाः]** द्वि-दशन् । द्वौ वारावस्येति द्विः । 'द्वि-त्रि-चतुरः सुच्' (७।२।११०) सुच्प्र० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः । द्विर्दश । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । प्रथमा जस् । एवमग्रेऽपि ।

**[त्रिचतुराः]** त्रयो वा चत्वारो वा = त्रिचतुराः । 'नञ्-सु-व्युप-त्रेश्चतुरः' (७।३।१३१) अप्समासान्तः ।

**[पञ्चषाः]** पञ्चन् - षष् । पञ्च वा षड् वा । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[सप्ताष्टाः]** सप्त वा अष्टौ वा = सप्ताष्टाः । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।।छ।।

**आसन्ना-ऽदूरा-ऽधिका-ऽध्यर्द्धा-ऽर्द्धादिपूरणं द्वितीयाद्यन्यार्थे ॥३।१।२०॥**

**[आसन्नाऽदूराऽधिकाऽध्यर्द्धाऽर्द्धादिपूरणम्]** अर्द्धमादिर्यस्य तदर्द्धादि, अर्द्धादि च तत् पूरणं च = अर्द्धादिपूरणम् । अधिकमर्द्धं यस्याऽसौ । आसन्नं च अदूरं च अधिकं च अध्यर्द्धं च अर्द्धादिपूरणं च = आसन्नाऽदूराऽधिकाऽध्यर्द्धाऽर्द्धादिपूरणम् ।

**[द्वितीयाद्यन्यार्थे]** + द्वितीया आदिर्यासां ताः = द्वितीयादयः, द्वितीयादयश्च तद् अन्यश्च = द्वितीयाद्यन्यत्, तस्याऽर्थो द्वितीयाद्यन्यार्थः, तस्मिन् ।

**[आसन्नदशाः]** आसन्ना दशत्वं येषां येभ्यो वा ते । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र० ।

**[आसन्नविंशाः]** आसन्ना विंशतिर्येषां येभ्यो वा ते । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र० । 'विंशतेस्तेर्डिति' (७।४।६७) तिलोपः । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[आसन्नत्रिंशाः]** आसन्ना त्रिंशद् येषां ते ।

**[अदूरदशाः]** अदूरे दश येषां ते ।

**[अदूरविंशाः]** अदूरे विंशतिर्येषां ते ।

**[अदूरत्रिंशाः]** अदूरे त्रिंशद् येषां ते ।

**[अधिकदशाः]** अधिका दश येषां ते ।

**[अधिकविंशाः]** अधिका विंशत्(तिः) येषां ते ।

**[अधिकत्रिंशाः]** अधिका त्रिंशद् येषां ते ।

**[अध्यर्द्धविंशाः]** अध्यर्द्धा विंशतिर्येषां ते । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र० । 'विंशतेस्तेर्डिति' (७।४।६७) तिलोपः । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[अध्यर्द्धत्रिंशाः]** अध्यर्द्धा त्रिंशद् येषां ते ।

---

P 卐 बहूनर्थान् व्रीणातीति बहुव्रीहिः ।

P + द्वितीया आदिर्यस्य तद् द्वितीयादि, द्वितीयादि च तदन्यच्च ।

**[अध्यर्द्धचत्वारिंशा]** अध्यर्द्धा चत्वारिंशद् येषां ते ।

**[अर्द्धपञ्चमविंशाः]** पञ्चन् । पञ्चानां पूरणः = पञ्चमः । 'नो मट्' (७।१।१५९) मट्प्र०—>म । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । अर्द्धं पञ्चमं येषां ते । अर्द्धपञ्चमा विंशतयो येषां ते ।

**[अर्द्धचतुर्थविंशाः]** अर्द्धं चतुर्थं येषां ते । अर्द्धचतुर्था विंशतयो येषां ते ।

**[अर्द्धतृतीयविंशाः]** अर्द्धं तृतीयं येषां ते । अर्द्धतृतीया विंशतयो येषां ते । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र० । 'विंशतेस्तेर्डिति' (७।४।६७) तिलोपः । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।।छ।।

**अव्ययम् ।।३।१।२१।।**

**[अव्ययम्]** न-वि-'इंण्क् गतौ' (१०७५) इ । न व्येति - क्षरति स्वस्वरूपादित्यव्ययम् । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र०—>अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'नञत्' (३।२।१२५) न०—>अ० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५०) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[उपदशाः]** उप-समीपे दश येषां ते ।

**[उपविंशाः]** उप-समीपे विंशतिर्येषां ते ।

**[उपत्रिंशाः]** उप-समीपे त्रिंशद्येषां ते ।

**[उपचत्वारिंशाः]** उप-समीपे चत्वारिंशद्येषां ते । 'प्रमाणी-संख्याड्डः' (७।३।१२८) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । प्रथमा जस् । 'अत आ स्यादौ०' (१।४।१) दीर्घः । 'समानानां०' (१।२।१) दीर्घः । 'सो रुः' (२।१।७२) स०—>र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।।छ।।

**एकार्थं चानेकं च ।।३।१।२२।।**

**[एकार्थम्]** एकः समानोऽर्थोऽधिकरणं यस्य तत् ।

**[अनेकम्]** न एकमनेकम् । 'अन् स्वरे' (३।२।१२९) अन् ।

**[आरूढवानरो वृक्षः]** आरूढो वानरो यं सः = आरूढवानरः ।

**[उपहृतबलिर्यक्षी]** उपहृतो बलिरस्यै सा । यक्ष 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[वीरपुरुषको ग्रामः]** वीराः पुरुषाः सन्त्यस्मिन् = वीरपुरुषकः । 'शेषाद् वा' (७।३।१७५) कच्प्र०—>क ।

**[सुसूक्ष्मजटकेशः]** 卐 सूक्ष्मा जटा येषां ते = सूक्ष्मजटाः । 'परतः स्त्री पुम्वत्०' (३।२।४९) पुम्वत् । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । शोभनाः सूक्ष्मजटाः केशा अस्य सः ।

**[समन्तशितिरन्ध्रः]** संजातान्यन्तेषु शितीनि रन्ध्राण्यस्मिन् सः ।

**[पञ्चगवधनः]** पञ्चन् । गो । पञ्च गावो धनमस्य सः । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[पञ्चनावप्रियः]** पञ्च नावः प्रिया अस्य सः ।

---

P 卐 सूक्ष्मा जटा येषु ते = सूक्ष्मजटास्तपस्विनः ।

**[उच्चैर्मुखः]** उच्चैः स्थाने मुखं यस्य सः = उच्चैर्मुखः ।

**[कर्तुकामः]** कर्तुं कामोऽस्य सः । 'तुमश्च मनः कामे' (३।२।१४०) मलोपः ।

**[हर्तुकामः]** हर्तुं कामोऽस्य सः । 'तुमश्च मनः कामे' (३।२।१४०) मलोपः ।

**[राजन्वती भूरनेन]** राजन् । शोभनो राजा विद्यते यस्यां सा । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०—>मत् । 'राजन्वान् सुराज्ञि' (२।१।९८) म०—>व० । 'अधातूदृदितः' (२।४।२) ङी ।।छ।।

**उष्ट्रमुखादयः ।।३।१।२३।।**

**[उष्ट्रमुखादयः]** उष्ट्रमुखमादिर्येषां ते ।

**[वृषस्कन्धः]** वृषस्कन्धवत् स्कन्धो यस्य सः ।

**[हरिणाक्षी]** हरिणाक्षिणी इव अक्षिणी यस्याः सा । 'सक्थ्यक्ष्णः स्वाङ्गे' (७।३।१२६) टः समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) इन्लोपः(?) ('अवर्णेवर्णस्य' (७।४।६८) इलोपः) । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी ।

**[इभकुम्भस्तनी]** इभकुम्भाविव स्तनौ यस्याः सा । 'असह-नञ्-विद्यमानपूर्वपदात्०' (२।४।३८) ङी ।

**[नागनासोरुः]** नागनासे(सा) इव ऊरू यस्याः सा । 'उतोऽप्राणिन०' (२।४।७३) ऊङ्प्र०—>ऊ ।

**[चन्द्रमुखी]** चन्द्रवन्मुखं यस्याः सा । 'नख-मुखादनाम्नि' (२।४।४०) ङी ।

卐 **[कमलमुखी]** कमलवन्मुखं यस्याः सा ।

**[चक्रनितम्बा]** चक्रवन्नितम्बं यस्याः सा ।

**[पितृस्थानः]** पितुरिव स्थानमस्य ।

**[पितृस्थानीयः]** पितरीव स्थानीयमस्मिन् । 'दोरीयः' (६।३।३२) ईयप्र० ।

ततो मध्यस्थं वाक्यं कार्यम् । उपमानपदस्य यथासंभवं लोपः इति कोऽर्थः ? - उष्ट्रमुखशब्दमध्यस्थितमुखस्य लोप इत्यर्थः ।

**[उरसिलोमा]** उरसि स्थितानि लोमान्यस्य ।

**[उदरेमणिः]** उदरे स्थितो मणिर्यस्याऽसौ ।

**[वहेगडुः]** वह(हे) स्थितौ(तो) गडुर्यस्याऽसौ । बलीवर्दानां स्कन्धप्रदेशः ।

**[कण्ठेकालः]** कण्ठे कालोऽमीषूदाहरणेषु 'अमूर्द्ध-मस्तकात् स्वाङ्गाद्०' (३।२।२२) अलुप्समासो व्यधिकरणो वा इति कोऽर्थः ? असमानाधिकरण्यम् ।

**[प्रपलाशः, प्रपतितपलाशः]** प्रपतितानि पलाशान्यस्य सः ।

**[उद्रश्मिः, उद्गतरश्मिः]** उद्गता रश्मयः - किरणा यस्य सः ।।छ।।

**सहस्तेन ।।३।१।२४।।**

**[सहस्तेन]** सह प्रथमा सि । 'सो रुः' (२।१।७२) स०—>र० । 'च-ट-ते सद्वितीये' (१।३।७) र०—>स० । तद् तृतीया टा । 'आ द्वेरः' (२।१।४१) द०—>अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'टा-ङसोरिन-स्यौ' (१।४।५)

---

卐 मध्यमवृत्तौ - बृहद्वृत्तौ च - कमलवदना ।

इन । 'अवर्णस्ये०' (१।२।६) ए ।

**[सपुत्र आगतः]** सपुत्र आगत इत्यत्र 'सहात् तुल्ययोगे' (७।३।१७८) कच् न भवति ।

**[सच्छात्र आगतः]** सच्छ(छा)त्र आगत इत्यत्र 'सहात् तुल्ययोगे' (७।३।१७८) कच् न भवति ।

**[सकर्मकः]** सह कर्मणा वर्त्तते यः सः = सकर्मकः ।

**[सलोमकः]** सह लोमभिर्वर्त्तते = सलोमकः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[सपक्षकः]** सह पक्षैर्वर्त्तत इति सपक्षकः ।।छ।।

**दिशो रूढ्याऽन्तराले** ।।३।१।२५।।

**[दक्षिणपूर्वा दिक्]** दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा । 'सर्वादयोऽस्यादौ' (३।२।६१) पुम्वत् । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । पुनरपि 'आत्' (२।४।१८) आप्प्र०→आ ।

**[पूर्वोत्तरा]** पूर्व(र्वा)-उत्तरा मांडणी । पूर्वस्याश्च उत्तरस्याश्च दिशोर्यदन्तरालं सा ।

**[उत्तरपश्चिमा]** उत्तरा । पश्चिमा । उत्तरस्याश्च पश्चिमायाश्च दिशोर्यदन्तरालं सा ।

**[दक्षिणपश्चिमा]** दक्षिणा । पश्चिमा । दक्षिणस्याश्च पश्चिमायाश्च दिशोर्यदन्तरालं सा । 'सर्वादयोऽस्यादौ' (३।२।६१) पुम्वत् ।

**[ऐन्द्रयाश्च कौबेर्याश्च दिशोर्यदन्तरालमिति वाक्यमेव]** इन्द्रो देवताऽस्याः सा । कुबेरो देवताऽस्याः सा । 'देवता' (६।२।१०१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ-औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

**तत्राऽऽदाय मिथस्[1]तेन[2] प्रहृत्य[3]ेति[4] सरूपेण युद्धेऽव्ययीभावः** ।।३।१।२६।।

**[तत्र]** तत्र प्रथमैक० सि ।

**[आदाय]** आदाय सप्तमी ङि ।

**[मिथः]** मिथस् प्रथमैक० सि ।

**[सरूपेण]** समानं रूपं यस्याऽसौ, तेन । 'समानस्य धर्मादिषु' (३।२।१४९) स० । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० ।

**[अव्ययीभावः]** अव्यय 'भू सत्तायाम्' (१) भू । 卐 अनव्ययस्याऽव्ययस्य भवनमव्ययीभावः । 'कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्याऽनव्ययस्य' (४।३।१११) ई । 'अप्रयोगीत्' (१।१।३७) च्विलोपः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः औ । 'ओदौतोऽवाव्' (१।२।२४) आव् । प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[केशाकेशि]** केशेषु च केशेषु च मिथ आदाय कृतं युद्धम् । 'इज् युद्धे' (७।३।७४) इच्समासान्तः→इ । 'इच्यस्वरे दीर्घ आच्च' (३।२।७२) दीर्घः ।

**[कचाकचि]** कचेषु च कचेषु च मिथो गृहीत्वा कृतं युद्धं इति कचाकचि । 'इज् युद्धे' (७।३।७४) इच्समासान्तः

---

P मिथस्[1] षष्ठी, तेन[2] सि, प्रहृत्य[3] ङि, इति[4] ङि एतेषां सूत्रत्वाद् विभक्तेर्लोपः ।

P 卐 अनव्ययमव्ययं भवति ।

→इ । 'इच्यस्वरे०' (३।२।७२) दीर्घ आ ।

**[बाहूबाहवि]** वाहुभिश्च बाहुभिश्च मिथो गृहीत्वा कृतं युद्धम् । 'इज् युद्धे' (७।३।७४) इच्समासान्तः→इ । 'इच्यस्वरे०' (३।२।७२) दीर्घः ।

**[दण्डादण्डि]** दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धम् । 'इज् युद्धे (७।३।७४) इच्समासान्तः→इ । 'इच्यस्वरे०' (३।२।७२) दीर्घः ।

**[यष्टायष्टि]** यष्टिभिश्च यष्टिभिश्च मिथः प्रहृत्य कृतं युद्धम् । 'इच्यस्वरे०' (३।२।७२) इ०→आ० ।

**[मुष्टामुष्टि]** मुष्टिभिश्च मुष्टिभिश्च मिथः प्रहृत्य कृतं युद्धं इति मुष्टामुष्टि । 'इज् युद्धे' (७।३।७४) इच्समासान्तः →इ । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । 'इच्यस्वरे०' (३।२।७२) इ०→आ० ।

**[अस्यसि]** असिभिश्च असिभिश्च मिथः प्रहृत्य कृतं युद्धम् । 'इच्यस्वरे दीर्घ आच्च' (३।२।७२) इत्यनेन (दीर्घ आ) कथं न भवति ? अस्वरात् । सर्वत्र 'अनतो लुप्' (३।२।६) सिलोपः । क्रियाविशेषणमिति केचित् ।

**[हस्ते च हस्ते च गृहीत्वा कृतं सख्यम्]** सखि । सख्युर्भावः = सख्यम् । 'सखि-वणिग्-दूताद् यः' (७।१।६३) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ॥छ॥

## नदीभिर्नाम्नि ॥३।१।२७॥

**[नदीभिः]** नदी तृतीया भिस् ।

**[नाम्नि]** नामन् सप्तमी ङि । 'ई-ङौ वा' (२।१।१०९) अस्य लुक् ।

**[उन्मत्तगङ्गं देशः]** उन्मत्ता गङ्गा यत्र तत् । 'परतः स्त्री०' (३।२।४९) पुम्वत् । 'क्लीबे' (२।४।९७) ह्रस्वः । 'अमव्ययीभाव०' (३।२।२) अम् ।

**[तूष्णींगङ्गम्]** तूष्णीं गङ्गा यत्र तत् ।

**[शनैगङ्गम्]** शनैर्गङ्गा यत्र तत् । प्रथमा सि । 'अमव्ययीभाव०' (३।२।२) अम् सर्वत्र ।

बहुवचननिर्देशात् तद्विशेषाणां स्वरूपस्य च ग्रहणं नदीभिरिति बहुत्वविशेषाश्च । गङ्गा-नर्मदाद्याः स्वरूपं सिन्धुश्रवन्तीत्यादि ।

**[शीघ्रगङ्गो देशः]** शीघ्रा गङ्गा यत्राऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । 'परतः स्त्री०' (३।२।४९) पुम्वत् सर्वत्र ।

**[शुष्कतापी]** शुष्का चासौ तापी च । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

## संख्या समाहारे ॥३।१।२८॥

**[समाहारे]** सम्-आङ् 'हृंग् हरणे' (८८५) हृ । समन्तादाहरणं = समाहारः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र० →अ । 'नामिनोऽकलि-हलेः' (४।३।५१) आर्, तस्मिन् ।

**[द्वियमुनम्]** द्वयोर्यमुनयोः समाहारः = द्वियमुनम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[त्रिगङ्गम्]** त्रयाणां (तिसृणां) गङ्गानां समाहारः । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[पञ्चनदम्]** पञ्चानां नदीनां समाहारः । 'गौणमुख्ययोः०' (न्यायसंग्रहः १।२२) इति न्यायात्, 'संख्याया नदी-गोदावरीभ्याम्' (७।३।९१) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) ईलोपः ।

**[सप्तगोदावरम्]** सप्तानां गोदावरीणां समाहारः । 'संख्याया नदी-गोदावरीभ्याम्' (७।३।९१) अत्समासान्तः ।

'अवर्णेवर्णस्य' (७।४।६८) ईलोपः । प्रथमा सि । 'अमव्ययीभावस्या०' (३।२।२) अम् ।

**[एकनदी]** 卐 एका नदी = एकनदी । 'पुम्वत् कर्मधारये' (३।२।५७) पुम्वत् ।

**[द्वीरावतीको देशः]** द्वे इरावत्यौ यत्र सः । 'ऋन्नित्यदितः' (७।३।१७१) कच्प्र०→क ।

**[द्विगोदावरि]** द्वयोर्गोदावर्योः समाहारः = द्विगोदावरि । 'क्लीबे' (२।४।९७) ह्रस्वः । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।।छ।।

## वंश्येन पूर्वार्थे ।।३।१।२९।।

**[वंश्येन]** वंश । वंशे भवः = वंश्यः । 'दिगादिदेहांशाद् यः' (६।३।१२४) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । सप्तमी ङि (?) (तेन) ।

**[पूर्वार्थे]** पूर्वस्य उपचारात् पूर्वपदस्याऽर्थः = पूर्वार्थस्तस्मिन् ।

**[एकमुनि व्याकरणस्य]** एको मुनिर्वंश्यो व्याकरणस्य = एकमुनि । प्रथमा सि । 'अनतो लुप्' (३।२।६) सिलोपः ।

**[द्विमुनि व्याकरणस्य]** द्वौ मुनी वंश्यौ व्याकरणस्य = द्विमुनि । प्रथमा औ । 'अनतो लुप्' (३।२।६) औलोपः ।

**[त्रिमुनि व्याकरणस्य]** त्रयो मुनयो वंश्या व्याकरणस्य । प्रथमा जस् । 'अनतो लुप्' (३।२।६) इत्यनेन जस् लोपः ।

**[सप्तकाशि राज्यस्य]** सप्त काशयो वंश्या राज्यस्य = सप्तकाशि राज्यस्य ।

**[त्रिकोशलं राज्यस्य]** त्रयः कोशला वंश्या राज्यस्य = त्रिकोशलम् । प्रथमा जस् । 'अमव्ययी०' (३।२।२) अम् ।

**[एकविंशतिभारद्वाजं कोशलस्य]** एकविंशतिर्भारद्वाजा वंश्या अस्य सः । 'अनतो लुप्' (३।२।६) सिलोपः । भरद्व-(द्वा)जस्येदम् । 'तस्येदम्' (६।३।१६०) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । न त्वपत्ये 'यञञो०' (६।१।१२६) इत्यनेन लोपः स्यात् ।

**[द्विमुनिकं व्याकरणम्]** द्वौ मुनी वंश्यावस्य = द्विमुनिकम् । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।।छ।।

## पारे-मध्ये-ऽग्रे-ऽन्तः षष्ठ्या वा ।।३।१।३०।।

**[पारेमध्येऽग्रेऽन्तः]** + पारे च मध्ये च अग्रे च अन्तश्च = पारेमध्येऽग्रेऽन्तर् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ('अव्ययस्य' (३।२।७) सिलोपः) ।

**[षष्ठ्या]** षष्ठी तृतीया टा ।

**[पारेगङ्गम्]** गङ्गायाः पारम् । 'प्रथमोक्तं प्राक्' (३।१।१४८) पूर्वि । 'क्लीबे' (२।४।९७) ह्रस्वः । अनेन ए ।

**[पारेसमुद्रम्]** समुद्रस्य पारम् । 'प्रथमोक्तं प्राक्' (३।१।१४८) पूर्वि ।

**[मध्येगङ्गम्]*** गङ्गाया मध्यम् । अनेन ए ।

**[मध्येसमुद्रम्]** समुद्रस्य मध्यम् ।

**[अग्रेवणम्]** वनस्याऽग्रम् । अनेन ए । 'निष्प्रा-ऽग्रे-ऽन्तः-खदिर०' (२।३।६६) न०→ण० ।

---

P 卐 एका चासौ नदी च । 'सर्वादयोऽस्यादौ' (३।२।६१) इति पुम्वत् ।

P + पारेश्च मध्येश्च अग्रेश्च अन्तश्च ।

P * मध्यं गङ्गायाः ।

**[अग्रेसेनम्]** सेनाया अग्रम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[अन्तर्गिरम्]** गिरेरन्तः । 'गिरि-नदी-पौणमास्याग्रहायण्यपञ्चमवर्ग्याद् वा' (७।३।९०) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः ।

**[गङ्गापारम्]** गङ्गायाः पारं = गङ्गापारम् । अग्रेऽप्येवम् ।

**[गिर्यन्तः]** गिर्यन्त इत्यत्र 'तृप्तार्थ-पूरणा-ऽव्यया-ऽतृश्०' (३।१।८५) इत्यनेन निषिद्धोऽपि बाहुलकाद्भवति ॥छ॥

**यावदियत्त्वे ॥३।१।३१॥**

**[यावदियत्त्वे]** यावत् प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । इदम् । इदं परिमाणमस्य । 'इदं-किमोऽतुरिय्-किय् चास्य' (७।१।१४८) इदंस्थाने इयादेशः-अतुप्रत्ययश्च । इयतो भावः = इयत्त्वम् । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । सप्तमी ङि । 'अवर्णस्ये०' (१।२।६) ए ।

**[यावदमत्रमतिथीन् भोजय]** यावन्त्यमत्राणि = यावदमत्रम् । प्रथमा जस् । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुञ्जानान् प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः ।

**[यावद् दत्तं तावद् भुक्तम्]** यावत् प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः । 'डुदांग्क् दाने' (११३८) दा । दीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'दत्' (४।४।१०) दा इत्यस्य दत् । 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिट०' (४।१।१११) ज०→ग० (?) । ('च-जः क-गम्' (२।१।८६) ज०→ग०) । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग०→क० ॥छ॥

**पर्यपा-ऽऽङ्-बहिरच् पञ्चम्या ॥३।१।३२॥**

**[पर्यपाऽऽङ्बहिरच्]** परिश्च अपश्च आङ् च बहिश्च अच्च = पर्यपाऽऽङ्बहिरच् । 卐 प्रथमा जस् ।

पञ्चम्यर्थप्रधानात् प्रथमा क्रियाविशेषणविवक्षायां तु द्वितीया, यथा-**आमे खलं संचरतामित्यादि** ।

**[परित्रिगर्त्तम्]** परि त्रिगर्त्तेभ्यः = परित्रिगर्त्तम् ।

**[आग्रामम्]** आ ग्रामात् ।

**[बहिर्ग्रामम्]** बहिर्ग्रामात् ।

**[प्राग्ग्रामम्]** प्र 'अञ्चू गतौ च' (१०५ ) अञ्च् । प्राञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अञ्चः' (२।४।३) ङी । प्राच्यामदूरे वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेगौणस्या०' (२।४।९५) ङीनिवृत्तिः । 'च-जः क-गम्' (२।१।८६) च०→क० । प्राग् ग्रामात् ।

**[प्रत्यग्ग्रामम्]** प्रति 'अञ्चू गतौ च' (१०५) अञ्च् । प्रत्यञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अञ्चः' (२।४।३) ङी । प्रतीच्यामदूरे वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेर्गौणस्या०' (२।४।९५) ङीनिवृत्तिः । 'च-जः क-गम्' (२।१।८६) च०→क० । प्रत्यग् ग्रामात् ।

**[अपाग्ग्रामम्]** अप 'अञ्चू गतौ च' (१०५ ) अञ्च् । अपाऽञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः ।

---

P 卐 तत् ।

'अञ्चः' (२।४।३) ङी । अपाच्यामदूरे वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेर्गौणस्या०' (२।४।९५) ङीनिवृत्तिः । 'च-जः क-गम्' (२।१।८६) च० → क० । अपाग् ग्रामात् ।

**[उदग्ग्रामं वृष्टो मेघः]** उद् 'अञ्चू गतौ च' (१०५ ) अञ्च् । उदञ्चतीति क्विप् । 'अञ्चोऽनर्चायाम्' (४।२।४६) नलोपः । 'अञ्चः' (२।४।३) ङी । उदच्यामदूरे वसति । 'अदूरे एनः' (७।२।१२२) एनप्र० । 'लुबञ्चेः' (७।२।१२३) एनलोपः । 'ङ्यादेर्गौणस्या०' (२।४।९५) ङीनिवृत्तिः । 'च-जः क-गम्' (२।१।८६) च०→क० । उदग् ग्रामात् ।

**[परि वृक्षं विद्योतते विद्युत्]** वृक्ष द्वितीया अम् ।।छ।।

## लक्षणेनाऽभि-प्रत्याभिमुख्ये ।।३।१।३३।।

**[अभिप्रत्याभिमुख्ये]** अभिश्च प्रतिश्च = अभिप्रती । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ई । अभिमुखस्य भावः । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः, तस्मिन् ।

**[अभ्यग्नि शलभाः पतन्ति]** अभि अग्निं = अभ्यग्नि इत्यत्र द्वितीया । 'अनतो लुप्' (३।२।६) लोपः ।

**[प्रत्यग्नि शलभाः पतन्ति]** प्रति अग्निं = प्रत्यग्नि इत्यत्र द्वितीया । 'अनतो लुप्' (३।२।६) लोपः ।

**[स्रुघ्नं प्रति गतः]** प्रति गच्छति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त ।

**[येनाग्निस्तेन गतः]** येन-तेनौ प्रत्यर्थौ ।

**[अभ्यङ्का गावः]** अभिमुखोऽङ्को यासां ताः = अभ्यङ्काः ।।छ।।

## दैर्घ्येऽनुः ।।३।१।३४।।

**[दैर्घ्ये]** दीर्घस्य भावः = दैर्घ्यम् । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः, तस्मिन् ।

**[अनुयमुनं मथुरा]** अनु यमुनां दीर्घा । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[वृक्षमनु विद्योतते विद्युत्]** विपूर्व० 'द्युति दीप्तौ' (९३७) द्युत् । विद्योतत इत्येवंशील । 'दिद्युद्-ददृद्-जगज्जुहू०' (५।२।८३) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।।छ।।

## समीपे ।।३।१।३५।।

**[अनुवनमशनिर्गता]** अनु वनस्य समीपमनुवनम् । प्रथमा-सप्तमी वा ।

**[अनुनृपं पिशुनाः]** अनु नृपस्य समीपम् । सप्तमी ङि । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।।छ।।

## तिष्ठद्ग्वित्यादयः ।।३।१।३६।।

**[तिष्ठद्ग्वित्यादयः]** तिष्ठद्गु इति आदिर्येषां ते ।

**[तिष्ठद्गु]** 'ष्ठां गतिनिवृत्तौ' (५ ) ष्ठा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । 'निमित्ताभावे०' (न्याय० १/२९) स्था । तिष्ठन्तीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु-पा-घ्रा०' (४।२।१०८) तिष्ठ आदेशः । 'लुगस्या०' (२।१।११३) अलोपः । 'अधातूदृदितः' (२।४।२) ङी ।

तिष्ठन्त्यो गावो यत्र सः कालस्तिष्ठद्गु । 'परतः स्त्री०' (३।२।४९) पुम्वत् । 'क्लीबे' (२।४।९७) ह्रस्वत् । तिष्ठन्ति गावो यस्मिन्नित्यर्थकथनमात्रमेवाऽस्ति अथवैतदेव क्रियते, यतः तिष्ठन्तीति शतृ ततो मध्यस्थः समासः कार्यः । 'क्लीबे' (२।४।९७) ह्रस्वत् । प्रथमा सि । 'अमव्ययीभावस्याऽतो०' (३।२।२) सि०→अम्० । 'अनतो लुप्' (३।२।६) अम्लोपः, सर्वत्र ज्ञेयः ।

**[वहद्गु]** 'वहीं प्रापणे' (९९६) वह् । वहन्तीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'अधातूदृदितः' (२।४।२) ङी । वहन्त्यो गावो यत्र सः कालो वहद्गु । 'परतः स्त्री०' (३।२।४९) पुंवत् । 'क्लीबे' (२।४।९७) ह्रस्वत् । वहन्ति गावो यस्मिन्नित्यर्थ-कथनमेवाऽस्ति । अग्रे तिष्ठद्गुवद् ज्ञेयः ।

**[आयतीगवम्]** 'इंण्क् गतौ' (१०७५) इ, आङ्पूर्व० । आयन्तीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० →अत् । 'ह्विणोरप्विति व्-यौ' (४।३।१५) यादेशः । 'अधातूदृदितः' (२।४।२) ङी । आयन्त्यो गावो यस्मिन् काले सः । आयन्ति गावो यस्मिन्नित्यर्थकथनमेवाऽस्ति, अत एव निपातनाद् अत्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । पुंवद्भावभावश्च येन प्रथमान्ता एवाऽन्यपदार्थे समस्यन्ते तेन किं सिद्धम् ।

**[खलेयवम्]** खले यवा यस्मिन् देशे तत् ।

**[अधोनाभम्]** नाभेरधोऽधोनाभम् । अत एव निपातनादत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । प्रथमा सि । 'अमव्ययीभावस्याऽतो०' (३।२।२) अम् ।

**[समपदाति]** समत्वं पदातीनां = समपदाति ।

**[समभूमिः]** समा चासौ भूमिश्च ।

**[समपदातिः]** समाश्च ते पदातयश्च = समपदातिः ।

**[विषमम्]** विषमत्वं समस्य, विषमत्वं समायाः, विषमाः समा यत्र तत् ।

**[निष्षमम्]** निर्गतत्वं समस्य, निर्गतत्वं समायाः, निर्गताः समा यत्र तत् ।

**[दुष्षमम्]** दुष्टत्वं समस्य, दुष्टत्वं समायाः, दुष्टाः समा यत्र तत् ।

**[अपरसमम्]** अपरत्वं समस्य, अपरत्वं समायाः, अपराः समा यत्र तत् । सर्वत्र 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[पापसमम्]** समायाः पापस्य, पापाः समानि यत्र, पापा समा = पापसमम् ।

**[पुण्यसमम्]** समायाः पुण्यत्वं, पुण्यानि समानि यत्र, पुण्या समा = पुण्यसमम् ।

**[पापसमम्]** पापेन समम् ।

**[प्राह्णम्]** प्र । अहन् । प्रगतं प्रकृष्टत्वं वाऽह्नः । 'अतोऽह्नस्य' (२।३।७३) न०→ण०, निपातनादह्नादेशः ।

**[प्ररथम्]** प्रगतत्वं प्रकृष्टत्वं वा रथस्य = प्ररथम् ।

**[प्रमृगम्]** प्रगतत्वं प्रकृष्टत्वं वा मृगा यत्र तत् ।

**[प्रदक्षिणम्]** प्रकृष्टत्वं दक्षिणायाः = प्रदक्षिणम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[प्राह्णः]** प्रगतमहः = प्राह्णः । 'अतोऽह्नस्य' (२।३।७३) न०→ण० ।

**[प्ररथः]** प्रगतो रथः ।

**[प्रमृगः]** प्रगतो मृगः = प्रमृगः ।

**[प्रान्तम्]** प्रगतत्वमन्तस्य = प्रान्तम् ।

**[समपक्षम्]** समत्वं पक्षाणाम् ।

**[समानतीर्थम्]** समानत्वं तीर्थस्य ।

**[समानतीरम्]** समानत्वं तीरस्य = समानतीरम् ।

**[द्विमुसलि]** द्वौ मुसलौ यत्र प्रहरणे तत् । 'द्विदण्डयादिः' (७।३।७५) इच्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[परमतिष्ठद्गु]** परमं च तत् तिष्ठद्गु च ।

**["अतिष्ठद्गु जपन् सन्ध्याम्"]** 'अतिष्ठद्गु 'क्रियाविशेषणात्' (२।२।४१) अम् । 'जप मानसे च' (३३८) जप् । जपतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः । सन्ध्यामन्त्रोऽपि सन्ध्यतां(याम्) ।

**[प्रसव्यम्]** प्रगतं सव्यस्य ।

**[अपसव्यम्]** अपगतं सव्यस्य ।

**[यत्प्रभृति]** यस्मात् प्रभृति ।

**[तत्प्रभृति]** तस्मात् प्रभृति ।

**[इतः प्रभृति]** अस्मात् प्रभृति ।।छ।।

**नित्यं प्रतिनाऽल्पे** ।।३।१।३७।।

**[प्रतिना]** प्रति तृतीया टा । 'टः पुंसि ना' (१।४।२४) ना ।

**[शाकप्रति]** शाकस्याऽल्पत्वम् । नित्यं समासत्वादर्थकथनमेतत् ।।छ।।

**संख्या-ऽक्ष-शलाकं परिणा द्यूतेऽन्यथावृत्तौ** ।।३।१।३८।।

**[संख्याऽक्षशलाकम्]** संख्या च अक्षश्च शलाका च = संख्याऽक्षशलाकम् । 'क्लीबे' (२।४।९७) ह्रस्वत् । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[परिणा]** परि तृतीया टा । 'टः पुंसि ना' (१।४।२४) ना ।

**[द्यूते]** द्यूत सप्तमी ङि ।

**[अन्यथावृत्तौ]** अन्यथावर्त्तनमन्यथावृत्तिस्तस्याम् ।

**[एकपरि]** एकेनाऽक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जये = एकपरि ।

**[द्विपरि]** द्वाभ्यामक्षाभ्यां शलाकाभ्यां वा न तथा वृत्तं यथा पूर्वं जये = द्विपरि ।

**[त्रिपरि]** त्रिभिरक्षैः शलाकाभिर्वा न तथा वृत्तं यथा पूर्वं जये = त्रिपरि ।

**[चतुष्परि]** चतुर्भिरक्षैः शलाकाभिर्वा न तथा वृत्तं यथा पूर्वं जये = चतुष्परि ।

**[शलाकापरि]** शलाकया न तथा वृत्तं यथा पूर्वं जये = शलाकापरि ।।छ।।

**विभक्ति-समीप-समृद्धि-व्यृद्धयर्थाभावा-ऽत्यया-ऽसंप्रति-पश्चात्-क्रम-ख्याति-युगपत्-सदृक्-संपत्-साकल्याऽन्तेऽव्ययम्** ॥३।१।३९॥

**[विभक्तिसमीपसमृद्धिव्यृद्धयर्थाभावाऽत्ययाऽसंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्संपत्साकल्याऽन्ते]** विभजनं = विभक्तिः । संगता ऋद्धिः = समृद्धिः । विगता ऋद्धिः = व्यृद्धिः । अर्थस्याऽभावोऽर्थाभावः । 卐 न त्ययोऽत्ययः । न संप्रति = असंप्रति । विभक्तिश्च समीपं च समृद्धिश्च व्यृद्धिश्च अर्थाभावश्च अत्ययश्च असंप्रतिश्च पश्चाच्च क्रमश्च ख्यातिश्च युगपच्च सदृक् च संपच्च साकल्यं च अन्तश्च = विभक्तिसमीपसमृद्धिव्यृद्धयर्थाभावाऽत्ययाऽसंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्संपत्साकल्याऽन्तम्, तस्मिन् ।

**[अधिस्त्रि निधेहि]**+ स्त्रीषु अधि । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[उपकुम्भम्]** कुम्भस्य समीपं = उपकुम्भम् । सि । 'अमव्ययीभाव०' (३।२।२) अम्, अग्रे सर्वत्र कार्यः ।

**[उपाग्नि]** अग्नेः समीपम् ।

**[उपशरदम्]** शरदः समीपम् । 'शरदादेः' (७।३।९२) अत्समासान्तः ।

**[सुमद्रम्]** मद्रस्य राज्ञोऽपत्यानि । 'पुरु-मगध-कलिङ्ग-सूरमस-द्विस्वरादण्' (६।१।११६) अण्प्र० । 'बहुष्वस्त्रियाम्' (६।१।१२४) अण्लोपः । मद्राणां शोभना ऋद्धिः ।

**[सुमगधम्]** मगधानां शोभना ऋद्धिः ।

**[सुभिक्षम्]** भिक्षायाः शोभना ऋद्धिः ।

**[दुर्यवनम्]** यवनानामृद्धयभावः = दुर्यवनम् ।

**[दुर्भिक्षम्]** भिक्षाया ऋद्धयभावः = दुर्भिक्षम् ।

**[निर्मक्षिकम्]** मक्षिकाणामभावः = निर्मक्षिकम् । 'क्लीवे' (२।४।९७) ह्रस्वः ।

**[निर्मशकम्]** मशकानामभावः = निर्मशकम् ।

**[अमक्षिकम्]** मक्षिकाणामभावः = अमक्षिकम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[उन्मशकम्]** मशकानामभावः = उन्मशकम् ।

**[निवातम्]** वातस्याऽभावः = निवातम् ।

**[अतिवर्षम्]** वर्षाणामतीतत्वमतिवर्षम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[अतिशीतम्]** शीतानामतीतत्वं = अतिशीतम् ।

**[निशीतम्]** शीतानामतीतत्वं = निशीतम् ।

**[निहिमम्]** हिमानामतीतत्वं = निहिमम् ।

**[अतृणम्]** तृणानामतीतत्वं = अतृणम् ।

**[नितृणम्]** तृणानामतीतत्वं = नितृणम् ।

**[अतिकम्बलम्]** कम्बलस्योपभोगं प्रति नायं कालोऽतिकम्बलम् ।

---

P 卐 अत्ययनमत्ययः ।

P + स्त्रीषु अधिकृत्य ।

**[अतितैसृकम्]** तिसृका नाम ग्रामः तस्यां भवानि जातानि वा । 'भवे' (६।३।१२३) अण्प्र०—>अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः तै । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । तैसृकाणामाच्छादनानां न संप्रत्युपभोगोऽयं कालः ।

**[अत्याम्रम्]** आम्राणां न संप्रत्युपभोगोऽयं कालः ।

**[अनुरथं याति]** रथस्य पश्चादनुरथम् ।

**[अनुपादातम्]** पदाति । पदातीनां समूहः । 'षष्ठ्याः समूहे' । (६।२।९) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । पादातस्य पश्चादनुपादातम् ।

**[अनुज्येष्ठं प्रविशन्तु]** ज्येष्ठस्याऽनुक्रमेणाऽनुज्येष्ठम् । प्र 'विशंत् प्रवेशने' (१४१५) विश् । पञ्चमी अन्तु । 'तुदादेः शः' (३।४।८१) शप्र०—>अ । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[अनुवृद्धं साधूनर्चय]** वृद्धानामनुक्रमेणाऽनुवृद्धम् । 'अर्च(र्चि)ण् पूजायाम्' (१९५४) अर्च् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०—>इ । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः ।

**[इतिभद्रबाहु]** इति भद्रबाहुः ।

**[तद्भद्रबाहु]** तद् भद्रबाहुः ।

**[अहोभद्रबाहु]** अहो भद्रबाहुः ।

**[सचक्रं धेहि]** चक्रेण सहैककालं चक्राणि युगपद्वा = सचक्रम् । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'डुधांग्क् धारणे च' (११३९) धा । पञ्चमी हि । 'हौ दः' (४।१।३१) आ०—>ए० ।

**[सधुरं प्राज]** धुरया सहैककालम् । 'धुरोऽनक्षस्य' (७।३।७७) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । 'अकालेऽव्ययीभावे' (३।२।१४६) सभावः सर्वत्र । 'अज क्षेपणे च' (१३९) अज्, प्रपूर्व० । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः ।

**[सव्रतम्]** व्रतस्य सदृशं = सव्रतम् ।

**[सशीलम्]** शीलस्य सदृशं = सशीलम् ।

**[सकिखि]** किखेः सदृशं = सकिखि, लउकडि नाम जीवस्य(वः) ।

**[सदेवदत्तम्]** देवदत्तस्य सदृशं = सदेवदत्तम् ।

**[सब्रह्म साधूनां, संपन्नं ब्रह्मेत्यर्थः]** सह । ब्रह्मन् । संपन्नं ब्रह्म = सब्रह्म ।

**[सवृत्तं मुनीनाम्]** संपन्नं वृत्तं = सवृत्तम् ।

**[सक्षत्रमिक्ष्वाकूणाम्]** संपन्नं क्षत्रं = सक्षत्रम् । 'अकालेऽव्ययीभावे' (३।२।१४६) सर्वत्र सहस्य सभावः ।

**[सतुषम्]** तुषैः साकल्यम् ।

**[सपिण्डैषणमधीते]** सह पिण्डैषणा, सपिण्डैषणामन्तं कृत्वा तत् । 'क्लीबे' (२।४।९७) ह्रस्वत् । प्रथमा सि । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् ।

**[सषड्जीवनिकायमधीते]** सह षड्जीवनिकाया, सषड्जीवनिकायमन्तं कृत्वा तत् । 'क्लीबे' (२।४।९७) ह्रस्वत् । प्रथमा सि । 'अमव्ययीभाव०' (३।२।२) अम् । 'अकालेऽव्ययीभावे' (३।२।१४६) सर्वत्र सहस्य सभावः ।।छ।।

**योग्यता-वीप्सा-ऽर्थानतिवृत्ति-सादृश्ये ॥३।१।४०॥**

**[योग्यतावीप्साऽर्थानतिवृत्तिसादृश्ये]** योग्यता च वीप्सा च अर्थानतिवृत्तिश्च सादृश्यं च = योग्यतावीप्साऽर्थानतिवृत्तिसादृश्यम्, तस्मिन् ।

**[अनुरूपं चेष्टते]** रूपस्य योग्यं = अनुरूपम् । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[प्रत्यर्थं शब्दा अभिनिविशन्ते]** अर्थमर्थमभिव्याप्यं = प्रत्यर्थम् । 'क्रियाविशेषणात्' (२।२।४१) अम् । 'अमव्ययीभावस्या०' (३।२।२) अमः स्थाने अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । शब्दा अनेकार्था इत्यर्थः ।

**[प्रतिपर्यायम्]** पर्यायं २ अभिव्याप्यं = प्रतिपर्यायम् ।

**[यथाशक्ति पठ]** शक्तेरनतिक्रमेण = यथाशक्ति ।

**[यथाबलम्]** बलस्याऽनतिक्रमेण = यथाबलम् । 'क्रियाविशेषणात्' (२।२।४१) अम् ।

**[सशीलमनयोः]** शीलस्य सादृश्यं = सशीलम् ।

**[सव्रतमनयोः]** व्रतस्य सादृश्यं = सव्रतम् । 'अकालेऽव्ययीभावे' (३।२।१४६) सभावः ।

**[सकिखि]** किख्याः सादृश्यं = सकिखि । 'अकालेऽव्ययीभावे' (३।२।१४६) सभावः, मर्कटी जीवः ।।छ।।

**यथाऽथा ॥३।१।४१॥**

**[यथा]** यथा प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[अथा]** 卐 न था = अथा । 'नञत्' (३।२।१२५) न०→अ० । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[यथारूपं चेष्टते]** यथारूप मांडणी । रूपस्याऽनुरूपं = यथारूपम्, योग्यतेत्यर्थः ।

**[यथावृद्धमभ्यर्चय]** ये ये वृद्धा = यथावृद्धम् । द्वितीया शस्, अव्ययीभावादम् ।

**[यथासूत्रमनुतिष्ठति]** यथासूत्र मांडणीयइ । सूत्रस्याऽनतिक्रमेण = यथासूत्रम् । प्रथमा सि । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् ।

**[यथा चैत्रस्तथा मैत्रः]** येन प्रकारेण = यथा ।।छ।।

**गति-क्वन्यस्तत्पुरुषः ॥३।१।४२॥**

**[गतिकु]** गतिश्च कुश्च = गतिकु । प्र० सि० । सूत्रत्वात् लोपः ।

**[तत्पुरुषः]** स श्चासौ पुरुषश्च = तत्पुरुषः ।

**[ऊरीकृत्य]** ऊरीकरणं पूर्वम् ।

**[खाट्कृत्य]** खाट्करणं पूर्वम् ।

**[पटपटाकृत्य]** पटत् 'डुकृंग् करणे' (८८८ ) कृ । अपटत् पटत्करणं पूर्वम् । 'अव्यक्ताऽनुकरणादनेकस्वरात् कृ-भ्वस्तिनाऽनितौ द्विश्च' (७।२।१४५) डाच्प्र० → आ - द्वित्वं च । 'डाच्यादौ' (७।२।१४९) तलोपः । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

---

P 卐 न विद्यते था यस्य सः = अथा ।

**[प्रकृत्य]** प्रकरणं पूर्वम् ।

**[कारिकाकृत्य]** कारिकाकरणं पूर्वम् ।

**[कुब्राह्मणः]** निन्द्यो ब्राह्मणः = कुब्राह्मणः ।

**[कोष्णम्]** कु-उष्ण मांडणी० । ईषदुष्णम् । 'का-कवौ वोष्णे' (३।२।१३७) का ।

**[कवोष्णम्]** ईषदुष्णम् । 'का-कवौ वोष्णे' (३।२।१३७) कव ।

**[कदुष्णम्]** ईषदुष्णम् । 'कोः कत् तत्पुरुषे' (३।२।१३०) कत् ।

**[कामधुरम्]** कुत्सितं(ईषत्) मधुरम् । अल्पे (३।२।१३६) का ।

**[कुपुरुषकः]** 卐 कुत्सिताः पुरुषा यस्य सः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।।छ।।

**दुर्निन्दा-कृच्छ्रे** ।।३।१।४३।।

**[निन्दाकृच्छ्रे]** निन्दा च कृच्छ्रं च = निन्दाकृच्छ्रम्, तस्मिन् ।

**[दुष्पुरुषः]** निन्दितः पुरुषः = दुष्पुरुषः । 'निर्दुर्बहिरा०' (२।३।९) र०→ष० ।

**[दुष्कृतम्]** कृच्छ्रेण कृतम् । 'निर्दुर्बहिराविष्प्रादुश्चतुराम्' (२।३।९) र०→ष० ।

**[दुष्पुरुषकः]**+ निन्दिताः पुरुषा यस्य सः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।।छ।।

**सुः पूजायाम्** ।।३।१।४४।।

**[सुराजा]** पूजितो राजा = सुराजा । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[सुमद्रम्]** मद्राणां शोभना ऋद्धिः = सुमद्रम् । 'अमव्ययीभाव०' (३।२।२) अम् ।।छ।।

**अतिरतिक्रमे च** ।।३।१।४५।।

**[अतिस्तुतं भवता]** 'ष्टुंग्क् स्तुतौ' (११२४) ष्टु । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) स्तु । 'निमित्ताभावे०' (न्याय० १/२९) स्तु, अतिपूर्व० । अतिक्रमेण स्तवनं = अतिस्तुतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[अतिसिक्तं भवता]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच्, अतिपूर्व० । अतिक्रमेण सेचनं =अतिसिक्तम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । 'क्तेऽनिटश्च-जोः०' (४।१।१११) च०→क० (?) ('च-जः क-गम्' (२।१।८६) च० →क०) ।

**[अतिस्तुत्य]** अतिक्रमेण स्तवनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[अतिसिच्य]** अतिक्रमेण सेचनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र० । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्त ।

---

P 卐 कुत्सिताः पुरुषा यत्र सः ।

P + निन्द्याः पुरुषा यत्र सः ।

**[अतिराजा]** पूजितो राजा ॥छ॥

**आङल्पे** ॥३।१।४६॥

**[आकडारः]** ईषत् कडारः = आकडारः ।

**[आपिङ्गलः]** ईषत् पिङ्गलः = आपिङ्गलः ।

**[आबद्धम्]** आ बध्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध०→द० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[आयुक्तम्]** आ युज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिटश्च-जो०' (४।१।१११) ज०→ग०(?) ('च-जः क-गम्' (२।१।८६) ज०→ग०) । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग०→क० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ॥छ॥

**प्रा-ऽत्यव-परि-निरादयो गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः प्रथमाद्यन्तैः** ॥३।१।४७॥

**[प्राऽत्यवपरिनिरादयः]** प्रश्च अतिश्च अवश्च परिश्च निर् च = प्राऽत्यवपरिनिरः, प्राऽत्यवपरिनिर आदिर्येषां (आदयो येषां) ते ।

**[गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः]** गतश्च क्रान्तश्च क्रुष्टश्च ग्लानश्च क्रान्तश्च = गतक्रान्तक्रुष्टग्लानक्रान्ताः, गतक्रान्तक्रुष्टग्लानक्रान्तादयोऽर्थो(र्था) येषां ते ।

**[प्रथमाद्यन्तैः]** प्रथमा आदिर्यासां ताः = प्रथमादयः, प्रथमादयोऽन्ते येषां तानि = प्रथमाद्यन्तानि, तैः ।

**[प्राचार्यः]** प्रगत आचार्यः = प्राचार्यः ।

**[प्रान्तेवासी]** प्र । अन्त । प्रगतमन्तं = प्रान्तम्, तस्मिन् । 'वसं निवासे' (९९९) वस् । प्रान्ते वसन्तीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । 'शय-वासि-वासेष्वकालात्' (३।२।२५) अलुप्समासः ।

**[समर्थः]** सङ्गतोऽर्थः = समर्थः ।

**[अतिखट्वः]** अतिक्रान्तः खट्वां = अतिखट्वः ।

**[उद्वेलः]** उद्गतो वेलामुद्वेलः ।

**[अवकोकिलः]** अवकृष्टः कोकिलया = अवकोकिलः ।

**[परिवीरुत्]** परिणद्धो वीरुद्भिः = परिवीरुत् ।

**[पर्यध्ययनः]** परिग्लानोऽध्ययनाय = पर्यध्ययनः ।

**[अलंपुरुषीणः]** शक्तः पुरुषेभ्योऽलंपुरुषीणः । 'अषडक्षा-ऽऽशितंग्वलङ्कर्मा-ऽलंपुरुषादीनः' (७।१।१०६) ईनप्र० । प्रथमा सि । 'सो रुः' (२।१।७२) र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।

**[अन्तरङ्गुलो नखः]** अन्तरङ्गुली मांडीयइ । अन्तर्गतोऽङ्गुल्याः = अन्तरङ्गुलः । 'संख्या-ऽव्ययादङ्गुलेः'

(७।३।१२४) 卐अत्(ड)समा० । 'अवर्णवर्ण०' (७।४।६८) ईलोपः । प्रथमा सि ।

**[उत्कुला कुलटा]** उत्क्रान्ता कुलात् । अट गतौ (१९४) अट् । अटतीति अटा । 'अच्' (५।१।४९) अच्प्र०⟶अ । 'आत्' (२।४।१८) आप्प्र०⟶आ । कुलानामटा = कुलटा । 'पृषोदरादयः' (३।२।१५५) निपातः ।

**[उद्वेलः समुद्रः]** उद्गतो वेलायाः = उद्वेलः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[उच्छास्त्रं वचः]** उद्गतं शास्त्रेभ्यः = उच्छास्त्रम् ।

**[उच्छृङ्खलः कलभः]** उद्गतः शृङ्खलायाः = उच्छृङ्खलः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[अपक्रमं कार्यम्]** अपगतं क्रमात् = अपक्रमम् ।

**[अन्तरङ्गुलो नखः]** अन्तर्गतोऽङ्गुल्याः = अन्तरङ्गुलः । 'संख्या-ऽव्यया०' (७।३।१२४)卐 अत् (डः) समासान्तः ।

**[प्रत्युरसम्]** प्रति । उरस् । प्रतिष्ठितमुरसि = प्रत्युरसम् । 'प्रतेरुरसः सप्तम्याः '(७।३।८४) अत्समासान्तः ।

**[प्राचार्यको देशः]** प्रगता आचार्या यस्मिन् देशे सः । 'शेषाद् वा' (७।३।१७५) कच्प्र० ⟶ क ।।छ।।

### अव्ययं प्रवृद्धादिभिः ।।३।१।४८।।

**[प्रवृद्धादिभिः]**+ प्रवृद्धा आदिर्येषां तानि = प्रवृद्धादीनि, तैः ।

**[पुनःप्रवृद्धं बर्हिः]** पुनर्-प्र 'वृधूङ् वृद्धौ' (९५७) वृध् । पुनः प्रवर्धते स्म । कर्त्तरि क्तप्र०⟶त । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०⟶ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध०⟶द० । अर्थकथनमेतद् नित्यसमासात् ।

**[पुनरुत्स्यूतं वासः]** पुनर्-उत् 'षिवूच् उतौ' (११६४) षिव् । 'षः सोऽष्टयै-ष्ठिव-ष्वष्कः' (२।३।९८) सिव् । पुनरुत्सीव्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'अनुनासिके च च्छ्-वः शूट्' (४।१।१०८) व०⟶ऊट्⟶ऊ । 'इवर्णादे०' (१।२।२१) य् ।

**[पुनर्निष्क्रान्तो रथः]** पुनर्निष्कुरुते (?) (क्राम्यति) । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०⟶त ।

**[पुनरुक्तं वचः]** पुनर् 'वचंक् भाषणे' (१०९६) वच् । पुनरुच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०⟶उ० । 'क्तेऽनिटश्च-जोः०' (४।१।१११) च०⟶क० (?) ('च-जः क-गम्' (२।१।८६) च०⟶क०) ।

**[पुनर्नवं वयः]** पुनर् 'णुक् स्तुतौ' (१०८१) णु । 'पाठे धात्वादेर्णो नः' (२।३।९७) नु । पुनर्नौतीति पुनर्नवम् । 'युवर्ण-वृ-दृ-वश--रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र०⟶अ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[पुनःशृतं पयः]** 'श्रांक् पाके' (१०६५) श्रा । 'श्रैं पाके' (४६) श्रै । श्राति स्म, श्रायति स्म वा क्षीरं-हविर्वा । 'गत्यर्था०' (५।१।११) क्तप्र०⟶त । 'श्रः शृतं हविः-क्षीरे' (४।१।१००) शृतं निपात्यते ।

**[स्वर्यातः]** स्वर् 'यांक् प्रापणे' (१०६२) या । स्वर्याति स्म ।

**[अन्तर्भूतः]** अन्तर्भवति स्म । 'गत्यर्था०' (५।१।११) क्तप्र०⟶त ।

**[प्रातःसवनम्]** प्रातर् 'षूङौक् प्राणिगर्भविमोचने' (११०७) षू । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सू । प्रातः

---

卐 श० म० न्यासानुसन्धाने - समासान्तेऽति 'अवर्णवर्णस्य' (७।४।६८) इतीकारलोपे ।

P + प्रवृद्ध ।

सवनम् । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[उच्चैर्घोषः]** उच्चैस् 'घुषृ शब्दे' (४९७) घुष् । उच्चैर्घोषणम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'लघोरुपान्त्यस्य (४।३।४) गु० ओ ।

**[नीचैर्गतम्]** नीचैर्गमनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[अधस्पदम्]** अधसः पदम् । 'शिरोऽधसः पदे समासैक्ये' (२।३।४) र०→स० ।

**[अनद्वा पुरुषः]** 卐 न अद्वा = अनद्वा, असंशयः पुरुष इत्यर्थः ।

**[प्रायश्चित्तम्]** प्रायस् 'चितै संज्ञाने' (२७८) चित् । प्रायश्चित्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[सद्यस्क्रीः]** सद्यस् 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । सद्यस्क्रयणम् । 'क्रुत्-संपदादिभ्यः क्विप्' (५।३।११४) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । ''भ्रातुष्पुत्र-कस्कादयः' (२।३।१४) निपातः ।

**[प्राग्वृत्तम्]** प्राग् 'वृतूङ् वर्त्तने' (९९५) वृत् । प्राग् वर्त्तनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[पुराकल्पः]** पुरा 'कृपौङ् सामर्थ्ये' (९५९) कृप् । पुरा कल्पनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । 'ऋ-र लृ-लं कृपोऽकृपीटादिषु' (२।३।९९) र०→ल० ।

**[श्वःश्रेयसम्]** शोभनं श्रेयः । 'निसश्च श्रेयसः' (७।३।१२२) अत्समासान्तः ।

**[श्वोवसीयसम्]** वसु मांडणीयइ । वसु विद्यते यत्र तत् । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०→मत् । प्रकृष्टं वसुमत् । 'गुणाङ्गाद् वेष्ठेयसू' (७।३।९) ईयसुप्र०→ईयस् । 'विन्-मतोर्णीष्ठेयसौ लुप्' (७।४।३२) मतुलोपः । 'त्रन्त्यस्वरादेः' (७।४।४३) उलोपः । श्वःकल्पे भवं = श्वोवसीयसम् । 'श्वसो वसीयसः' (७।३।१२१) अत्समासान्तः ॥छ॥

**ङस्युक्तं कृता** ॥३।१।४९॥

**[ङस्युक्तम्]** + ङसिना उक्तं = ङस्युक्तम् ।

**[कृता]** करोतीति कृत्, तेन = कृता ।

**[कुम्भकारः]** कुम्भं करोतीति कुम्भकारः ।

**[शरलावः]** शर 'लूग्श् छेदने' (१५१९) लू । शरं लुनातीति । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः औ । 'ओदौतोऽवाव्' (१।२।२४) आव् ।

**[अग्निचित्]** अग्नि 'चिंग्ट् चयने' (१२९०) चि । अग्निं चिनोतीति । 'अग्नेश्चेः' (५।१।१६४) क्विप्प्र० । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३८) क्विप्लोपः ।

**[सोमसुत्]** सोम 'षुंग्ट् अभिषवे' (१२८६) षु । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सु । सोमं सुनोतीति । 'सोमात् सुगः' (५।१।१६३) क्विप्प्र० । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ।

**[अन्यथाकारं भुङ्क्ते]** अन्यथाकरणं पूर्वम् । 'अन्यथैवं-कथमित्थमः कृगोऽनर्थकात्' (५।४।५०) खणम्प्र०→अम् । 'नामिनोऽकलि-हलेः' (४।३।५१) आर् ।

---

卐 श० म० न्यासानुसन्धाने - न विद्यते द्वा = संशयोऽस्येति व्युत्पत्त्याऽद्वा धर्मी उच्यते । न अद्वा=अनद्वा, संशयितः पुरुषः, ससंशयः पुरुषो वा अनद्वा पुरुषः ।

P + ङसिना = पञ्चम्यन्तेन उच्यते स्म ।

**[अतिथिवेदं भोजयति]** अतिथि 'विदक् ज्ञाने' (१०९९) विद् । अतिथीन् वेदनं पूर्वम् । 'विद्-दृग्भ्यः कार्त्स्न्ये णम्' (५।४।५४) णम्प्र०→अम् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[प्रष्ठी]** प्र 'ष्ठां गतिनिवृत्तौ' (५) ष्ठ । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । 'निमित्ताभावे नैमित्तिकस्याऽप्यभावः' (न्याय० १/२९) स्था । प्रतिष्ठतीति । 'उपसर्गादातो डोऽश्यः' (५।१।५६) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः । 'प्रष्ठोऽग्रगे' (२।३।३२) प्रष्ठनिपातः । प्रष्ठस्य भार्या । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङीप्र० । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[चर्मक्रीती]** चर्मन् 'डुक्रींग्श् द्रव्यविनिमये' (१५०८) क्री । चर्मणा क्रीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० →त । 'क्रीतात् करणादेः' (२।४।४४) ङीप्र० ।

**[अभ्रविलिप्ती]** अभ्र वि 'लिपींत् उपदेहे' (१३२४) लिप् । अल्पेन अभ्रेण विलिप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तादल्पे' (२।४।४५) ङीप्र० ।

**[कच्छपी]** कच्छ 'पांक् रक्षणे' (१०६७) पा । कच्छं पातीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङी ।

**[माषवापिणी]** 'वोत्तरपदान्तन-स्यादेरयुव-पक्वा-ऽह्नः' (२।३।७५) न०→ण० ।

**[व्रीहिवापिणी]** 'वोत्तरपदान्तन-स्यादेरयुव-पक्वा-ऽह्नः' (२।३।७५) न०→ण० ।

**[कारकस्य गतिः]** 'गम्लृं गतौ' (३९६) गम् । गमनं = गतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति' (४।२।५५) मलोपः ।

**[कारकस्य व्रज्या]** धृज (१३०) - धृजु (१३१) - ध्वज (१३२) - ध्वजु (१३३) - ध्रज (१३४) - ध्रजु (१३५) वज (१३६) - 'व्रज गतौ' (१३७) व्रज् । व्रजनं = व्रज्या । 'आस्यटि-व्रज्-यजः क्यप्' (५।३।९७) क्यप्प्र०→य । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[अलं कृत्वा]** अलम्-अव्यउ, 'डुकृंग् करणे' (८८८ ) कृ । अलं करणं पूर्वम् । 'निषेधेऽलं-खल्वोः क्त्वा' (५।४।४४) क्त्वाप्र० ।

**[खलु कृत्वा]** खलु-अव्यउ, 'डुकृंग् करणे' (८८८ ) कृ । खलु करणं पूर्वम् । 'निषेधेऽलं-खल्वोः क्त्वा' (५।४।४४) क्त्वाप्र० ।।छ।।

### तृतीयोक्तं वा ।।३।१।५०।।

**[तृतीयोक्तम्]** 卐 तृतीयया उक्तं = तृतीयोक्तम् ।

**[मूलकोपदंशं भुङ्क्ते]** प्रधानभुजिक्रियापेक्षया 'सहार्थे' (२।२।४५) तृतीयैव मूलकेनेत्यत्र ननु उपदंशि गौणक्रियापेक्षं कर्म समासफलं- 'ऐकार्थ्ये' (३।२।८) इत्यनेन विभक्तिलोपः । उप 'दंशं दशने' (४९६) दंश् । मूलकेन उपदश्यते । 'दंशेस्तृतीयया' (५।४।७३) णम्प्र०→अम् ।

**[दण्डोपघातं गाः कलयति]** दण्ड 'हनंक् हिंसा-गत्योः' (११००) हन् । दण्डेन उपघातम् । 'हिंसाऽर्थादेकाऽऽप्यात्' (५।४।७४) णम्प्र० । 'ञ्णिति घात्' (४।३।१००) घात् आदेशः ।+ 'कल क्षेपे' (१६९६) कल् । 'चुरादिभ्यो णिच्'

---

P 卐 तृतीयया उच्यते स्म ।

+ 'कलण् क्षेपे' कालयति । 'कलण् संख्यान-गत्योः' कलयति । धातुपारायणे-'कलण् क्षेपे' कालयति गाः ।
श० म० न्यासानुसन्धाने 'कलण् संख्यानगत्योः' गृहीतः ।

(३।४।१७) णिच्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[पार्श्वोपपीडं शेते]** पार्श्व उप 'पीडण् गहने' (१६२५) पीड् । 'चुरादि०' (३।४।१७) णिच्प्र०→इ । पार्श्वयोः पार्श्वाभ्यां वोपपीडं = पार्श्वोपपीडम् । 'उपपीड-रुध-कर्षस्तत्सप्तम्या' (५।४।७५) णम्प्र०→अम् । 'णेरनिटि' (४।३।८३) णिच्लोपः ॥छ॥

**नञ् ॥३।१।५१॥**

**[असूर्यंपश्या राजदाराः]** न सूर्यं 'दृशृं प्रेक्षणे' (४९५) दृश् । सूर्यमपि न पश्यन्ति । 'असूर्योग्राद् दृशः' (५।१।१२६) खश्प्र०→अ । 'श्रौति-कृवु-धिवु०' (४।२।१०८) पश्य । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च' (३।२।१११) मोऽन्तः ।

**[अपुनर्गेयाः श्लोकाः]** पुनर् कैं (३६) - 'गैं शब्दे' (३७) गै । 'आत् सन्ध्यक्षरस्य' (४।२।१) गा । पुनर्न गीयन्ते । 'य एच्चातः' (५।१।२८) यप्र० - आ०→ए० । प्रथमा जस् ।

**[अश्राद्धभोजी भिक्षुः]** न श्राद्ध 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । श्राद्धं न भुङ्क्ते । 'व्रता-ऽऽभीक्ष्ण्ये' (५।१।१५७) णिन्प्र०→इन् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः ॥छ॥

**पूर्वा-ऽपरा-ऽधरोत्तरमभिन्नेनांशिना ॥३।१।५२॥**

**[पूर्वाऽपराऽधरोत्तरम्]** पूर्वश्च अपरश्च अधरश्च उत्तरश्च = पूर्वाऽपराऽधरोत्तरम् ।

**[अभिन्नेनांशिना]** न भिन्नोऽभिन्नस्तेन । अंशोऽस्याऽस्तीति अंशी, तन ।

**[पूर्वकायः]** चीयते आहारादिभिरिति कायः । 'चिति-देहा-ऽऽवासोपसमाधाने कश्चाऽऽदेः' (५।३।७९) घञ्प्र०→अ - च०→क० । पूर्वः कायस्य = पूर्वकायः ।

**[अपरकायः]** अपरः कायस्य ।

**[अधरकायः]** अधरः कायस्य ।

**[उत्तरकायः]** उत्तरः कायस्य ।

**[पूर्वं छात्राणामामन्त्रयस्व]** 'मन्त्रिण् गुप्तभाषणे' (१८४०) मन्त्र, आङ्पू० । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० →इ । 'अतः' (४।३।८२) अलोपः । पञ्चमी स्व । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[पूर्वं पाणिपादस्य]** पूर्वं पाणिपादस्येत्यत्र यद्यप्येकापेक्षया भिन्नत्वं तथापि द्वितीयापेक्षयाभिन्नत्वम्, अतो निषेधप्रधानोऽयं प्रसज्यः न पर्युदासवत् विधिप्रधानः ॥छ॥

**सायाह्नादयः ॥३।१।५३॥**

**[सायाह्नादयः]** सायाह्न आदिर्येषां ते ।

**[सायाह्नः]** सायमह्नः = सायाह्नः । 'सर्वा-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तः - अह्न आदेशश्च । सायंशब्दो यदाऽव्ययस्तदा अत एव निर्देशाद् मलोपः ।

**[मध्यंदिनम्]** मध्यं दिनस्य = मध्यंदिनम् । 'लोकम्पृण-मध्यन्दिना-ऽनभ्याशमित्यम्' (३।२।११३) इति म० ।

**[मध्यरात्रः]** मध्यं रात्रेः = मध्यरात्रः । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । एवमग्रेऽपि ।

**[पूर्वकायः]** यदि षष्ठीसमासः स्यात् तदा कायपूर्वमिति स्यात्, 'षष्ठ्यय०' (३।१।७६) इति सूत्रे प्रथमोक्तत्वात् ।।छ।।

**समेंऽशेऽर्द्धं नवा ।।३।१।५४।।**

**[अर्द्धपिप्पली, पिप्पल्यर्द्धम्]** अर्द्धं पिप्पल्याः । 'प्रथमोक्तं प्राक्' (३।१।४८) अर्द्धपूर्व० । पक्षे पिप्पल्या अर्द्धम् । 'षष्ठ्ययत्नाच्छेषे' (३।१।७६) इत्यनेन समासः ।

**[अर्द्धकोशातकी, कोशातक्यर्द्धम्]** कोशातकी-अर्द्धम् । अर्द्धं कोशातक्याः । 'प्रथमोक्तं प्राक्' (३।१।१४८) अर्द्धपूर्व० ।

**[अर्द्धपणः, पणार्द्धम्]** पणस्याऽर्द्धम् ।

**[अर्द्धवेदिः, वेद्यर्द्धम्]** अर्द्धं वेद्याः ।

**[अर्द्धचापम्, चापार्द्धम्]** चापस्याऽर्द्धम् ।

**[अर्द्धस्वरः, स्वरार्द्धम्]** अर्द्धं स्वरस्य ।

**[अर्द्धग्रामः, ग्रामार्द्धम्]** अर्द्धं ग्रामस्य ।

**[अर्द्धापूपः, अपूपार्द्धम्]** अर्द्धमपूपस्य

**[ग्रामार्द्धः]** ग्रामस्याऽर्द्धम् ।

**[नगरार्द्धः]** नगरस्याऽर्द्धम् ।

**[अर्द्धं पिप्पलीनाम्]** अर्द्धं पिप्पलीनाम् ।

**[अर्द्धपिप्पल्यः]** पिप्पली च पिप्पली च पिप्पली च = पिप्पल्यः । 'स्यादावसंख्येयः' (३।१।११९) एकशेषः । अर्द्धं पिप्पलीनां = अर्द्धपिप्पल्यः ।

**[अर्द्धराशिः]** अर्द्धं राशेः ।

असमांशे एव षष्ठी समासः । पिप्पल्या अर्द्धमिति न ।।छ।।

**जरत्यादिभिः ।।३।१।५५।।**

**[जरत्यादिभिः]** जरती आदिर्येषां ते = जरत्यादयस्तैः ।

**[अर्द्धजरती, जरत्यर्द्धः]** 'जॄण् वयोहानौ' (१९४८) जॄ । जरतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० →अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव्प्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'अधातूदृदितः' (२।४।२) ङी । अर्द्धो जरत्याः । 'प्रथमोक्तं प्राक्' (३।१।१४८) अर्द्धपूर्व० । जरत्या अर्द्धः ।

**[अर्द्धवैशसम्]** 卐 'शंसू स्तुतौ च' (५५०) शंस्, विपूर्व० । विश(शं)सनम् । 'क्रुत्-संपदादिभ्यः०' (५।३।११४) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः । विशस एव = वैशसम् । 'प्रज्ञादिभ्योऽण्' (७।२।१६५) अणप्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः वै । अर्द्धो वैशसस्य ।

---

卐 'शंसू स्तुतौ च' अनटि शंसनम् । 'शसू हिंसायाम्' अनटि शसनम् ।

**[अर्द्धोक्तम्]** उक्तस्यार्द्धः = अर्द्धोक्तम् ।

**[अर्द्धविलोकितम्]** विलोकितस्याऽर्द्धः = अर्द्धविलोकितम् ॥छ॥

**द्वि-त्रि-चतुष्पूरणाग्रादयः ॥३।१।५६॥**

**[द्वित्रिचतुष्पूरणाग्रादयः]**卐 द्वौ च त्रयश्च चत्वारश्च = द्वित्रिचत्वारः, द्वित्रिचत्वारश्च ते पूरणाश्च = द्वित्रिचतुष्पूरणाः, अग्रमादिर्येषां तेऽग्रादयः, द्वित्रिचतुष्पूरणाश्च अग्रादयश्च = द्वित्रिचतुष्पूरणाग्रादयः ।

**[द्वितीयभिक्षा, भिक्षाद्वितीयम्]** द्वि । द्वयोः पूरणः = द्वितीयः । 'द्वेस्तीयः' (७।१।१६५) तीयप्र०, ततो मध्यस्थसमासः । द्वितीयं भिक्षायाः ।

**[तृतीयभिक्षा, भिक्षातृतीयम्]** त्रि । त्रयाणां पूरणः । 'त्रेस्तृ च' (७।१।१६६) तीयप्र० त्रि०→तृ आदेशः । तृतीयं भिक्षायाः ।

**[चतुर्थभिक्षा, भिक्षाचतुर्थम्]** चतुर् । चतुर्णां पूरणः । 'चतुरः' (७।१।१६३) थट्प्र०→थ । चतुर्थं भिक्षायाः ।

**[तुर्यभिक्षा, भिक्षातुर्यम्]** चतुर् मांडणीयइ । चतुर्णां पूरणः । 'येयौ च लुक् च' (७।१।१६४) यप्र० - चलुक् । तुर्यं भिक्षायाः ।

**[तुरीयभिक्षा, भिक्षातुरीयम्]** तुरीयं भिक्षायाः ।

**[तलपादः, पादतलम्]** तलं पादस्य । 'प्रथमोक्तं प्राक्' (३।१।१४८) पूर्वहिं ।

**[ऊर्ध्वकायः, कायोर्ध्वम्]** ऊर्ध्वं कायस्य ।

**[पञ्चमं भिक्षायाः]** पञ्चन् । पञ्चानां पूरणः । 'नो मट्' (७।१।१५९) मट्प्र०→म । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ॥छ॥

**कालो द्विगौ च मेयैः ॥३।१।५७॥**

**[मासजातः]** मासो जातस्य = मासजातः ।

**[मासजातौ]** मासो जातयोः ।

**[मासजाताः]** मासो जातानाम् ।

**[संवत्सरजातः]** संवत्सरो जातस्य सः ।

**[मासमृतः]** मासो मृतस्य सः ।

**[संवत्सरमृतः]** संवत्सरो मृतस्य सः ।

**[एकमासजातः]** एको मासो जातस्य ।

**[द्व्यह्नसुप्तः]** 'ञिष्वपंक् शये' (१०८८) ष्वप् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्वप् । स्वपिति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'स्वपेर्यङ्-ङे च' (४।१।८०) य्वृत् व०→उ० । द्वि-अहन् । द्वयोरह्नोर्भवः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्-समासान्तः-अह्न आदेशः । द्वे अह्नी सुप्तस्य सः ।

**[त्र्यह्नाध्यापितः]** त्रि-अहन् । त्रिषु अहःसु भवः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तः - अह्न आदेशः । 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ ।

---

P 卐 द्विश्च त्रिश्च चत्वारश्च

'णौ क्री-जीङः' (४।२।१०) इ०⟶आ० । 'अर्त्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः' (४।२।२१) पोऽन्तः । अध्याप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिग्लोपः । त्रीणि अहानि अध्यापितस्य ।

**[द्व्यहजातः]** द्वि-अहन् । द्वयोरह्नोः समाहारः । 'द्विगोरन्नह्नोऽट्' (७।३।९९) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । द्व्यहो जातस्य सः ।

**[त्र्यहजातः]** त्रि-अहन् । त्रयाणामह्नां समाहारः । 'द्विगोरन्नह्नोऽट्' (७।३।९९) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । त्र्यहो जातस्य सः, जातेन उत्पन्नेनेत्यर्थः ।

**[मासो गच्छतः]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । गच्छतीति । 'शत्रानशा०' (५।२।२०) शतृप्र० ⟶ अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । गमिषद्यमश्छः' (४।२।१०६) म० ⟶छ० । 'स्वरेभ्यः' (१।३।३०) द्वित्वम् । 'अघोषे प्रथमोऽशिटः' (१।३।५०) छ०⟶च० । 'लुगस्या०' (२।१।११३) अलोपः । षष्ठी ङस् ।

**[वर्षमधीयानस्य]** 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयते = अधीयानः । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र० ⟶ आन । 'क्यः शिति' (३।४।७१) क्यप्र०⟶य ।।छ।।

**स्वयं-सामी क्तेन ।।३।१।५८।।**

**[स्वयंसामी]** स्वयं च सामि च = स्वयंसामी । प्रथमा औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ई ।

**[स्वयंधौतौ पादौ]** स्वयं 'धावूग् गति-शुद्धयोः' (९२०) धाव् । स्वयं धाव्येते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० ⟶त । 'अनुनासिके च च्छ्-वः शूट्' (४।१।१०८) व०⟶ऊट् । 'ऊटा' (१।२।१३) औ ।

**[स्वयंविलीनमाज्यम्]** 'लींङ्च् श्लेषणे' (१२४८) ली, 'लींश् श्लेषणे' (१५२६) ली, विपूर्व० । विलीयति(ते) - विलिनाति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'गत्यर्था०' (५।१।११) क्तप्र०⟶त । 'सूयत्याद्योदितः' (४।२।७०) त०⟶न० । 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०⟶न० । स्वयमात्मना विलीनम् ।

**[सामिकृतम्]** सामि अर्द्धं क्रियते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[सामिभुक्तम्]** सामि 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । सामि अर्द्धं भुज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०⟶त । 'क्तेऽनिटश्च-जोः०' (४।१।१११) ज०⟶ग० (?) ('च-जः क-गम्' (२।१।८६) ज०⟶ग०) । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग०⟶क० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः ।

**[स्वायंधौतिः]** स्वयंधौत । स्वयंधौतस्याऽपत्यम् । 'अत इञ्'(६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[सामिकृतिः]** सामिकृत । सामिकृतस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[सामिकृतायनिः]** सामिकृतस्याऽपत्यं = सामिकृतायनिः । 'अवृद्धाद् दोर्नवा' (६।१।११०) आयनिञ्प्र०⟶आयनि ।

'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[स्वयं कृत्वा]** स्वयं करणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ।

**[सामि भुक्त्वा]** सामि भोजनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ॥छ॥

**द्वितीया खट्वा क्षेपे ॥३।१।५९॥**

**[द्वितीया]** द्वितीया प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[खट्वारूढो जाल्मः]** 'रुहं जन्मनि' (९८८) रुह्, आङ्पूर्व० । आरोहति स्म । 'श्लिष-शीङ्-स्था-ऽऽस-वस-जन-रुह-जॄ-भजेः क्तः' (५।१।९) क्तप्र०→त । 'हो धुट्-पदान्ते' (२।१।८२) ह०→ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तवर्गस्य०' (१।३।६०) ध०→ढ० । 'ढस्तड्ढे' (१।३।४२) ढलोपः - पूर्विला दीर्घः । खट्वामारूढः ।

**[खट्वाप्लुतो जाल्मः]** च्युंङ् (५९४) - ज्युंङ् (५९५) - जुंङ् (५९६) - प्रुंङ् (५९७) - 'प्लुंङ् गतौ' (५९८) प्लु । प्लवते स्म । 'गत्यर्था०' (५।१।११) क्तप्र०→त । खट्वां प्लुतः ।

**[खट्वामारूढ उपाध्यायोऽध्यापयति]** 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयानं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'णौ क्री-जीङः' (४।२।१०) इ०→आ० । 'अर्त्ति-री-व्ली०' (४।२।२१) पोऽन्तः । वर्त्त० तिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणो०' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ॥छ॥

**कालः ॥३।१।६०॥**

**[रात्र्यतिसृताः]** 'सृं गतौ' (२५) सृ, अतिपूर्व० । अतिसरन्ति स्म । 'गत्यर्था०' (५।१।११) क्तप्र०→त । रात्रिमतिसृताः ।

**[रात्र्यारूढाः]** रात्रिमारूढाः ।

**[रात्रिसंक्रान्ताः]** 'क्रमू पादविक्षेपे' (३८५) क्रम्, संपूर्व० । संक्रामन्ति स्म । 'गत्यर्था०' (५।१।११) क्तप्र०→त । 'अहन्-पञ्चमस्य क्वि-क्ङिति' (४।१।१०७) दीर्घः । रात्रिं संक्रान्ताः ।

**[अहरतिसृताः षड् मुहूर्त्ताश्चराचराः]** अहः अतिसृताः ।

**[मासं प्रमितो मासप्रमितः]** 'मांक् माने' (१०७३) मा, प्रपूर्व० । 'आरम्भे' (५।१।१०) क्तप्र०→त । 'दो-सो-मा-स्थ इः' (४।४।११) इ ॥छ॥

**व्याप्तौ ॥३।१।६१॥**

**[मुहूर्त्तसुखम्]** मुहूर्त्तं सुखं = मुहूर्त्तसुखम् । मुहूर्त्तमिति 'काला-ऽध्वनोर्व्याप्तौ' (२।२।४२) इत्यनेन द्वितीया ।

**[मुहूर्त्तरमणीयः]** 'रमिं क्रीडायाम्' (९८९) रम् । रम्यते = रमणीयः । 'प्रवचनीयादयः' (५।१।८) अनीयप्र० । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । मुहूर्त्तं रमणीयः ।

**[सर्वरात्रकल्याणी]** सर्व-रात्रि । सर्वा चासौ रात्रिश्च = सर्वरात्रः । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । सर्वरात्रं कल्याणी ।

**[सर्वरात्रशोभना]** 'शुभि दीप्तौ' (९४७) शुभ् । शोभमानं प्रयुङ्क्ते । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र०→इ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ० । शोभयते । 'नन्द्यादिभ्योऽनः' (५।१।५२) अनप्र० । 'णेरनिटि' (४।३।८३) इलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । सर्वरात्रं शोभना ।

**[मुहूर्त्ताध्ययनम्]** मुहूर्त्तमध्ययनम् ।

**[मुहूर्त्तगुडः]** मुहूर्त्तं(र्त्तं) गुडः ।

**[मासं पूरको व्रजति]** 'पूरण् आप्यायने' (१७४९) पूर् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ ।卐 पूरयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'णेरनिटि' (४।३।८३) णिच्लोपः ।।छ।।

**श्रितादिभिः ।।३।१।६२।।**

**[श्रितादिभिः]** श्रित आदिर्येषां तानि = श्रितादीनि, तैः ।

**[धर्मश्रितः]** 'श्रिग् सेवायाम्' (८८३) श्रि । श्रयति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त ।+ धर्मं श्रितः ।

**[श्रीश्रितः]** श्रियं श्रितः ।

**[संसारातीतः]** अति 'इंण्क् गतौ' (१०७५) इ । अतिशयेन ईयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । संसारमतीतः ।

**[नरकपतितः]** 'पत्लृ गतौ' (९६२) पत् । पत्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणा-देरिट्' (४।४।३२) इट् । नरकं पतितः ।

**[निर्वाणगतः]** 'वांक् गति-गन्धनयोः' (१०६३) वा, निर्पूर्व० । निर्वायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'निर्वाणमवाते' (४।२।७९) तस्य न० । 'स्वरात्' (२।३।८५) न०→ण० । निर्वाणं गतः ।

**[ओदनबुभुक्षुः]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोक्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) भुज् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'द्वितीय-तुर्ययोः पूर्वौ' (४।१।४२) भु०→बु० । 'च-जः क-गम्' (२।१।८६) ज०→ग० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग० →क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । बुभुक्षणम् । 'सन्-भिक्षा-ऽऽशंसेरुः' (५।२।३३) उप्र० । ओदनं बुभुक्षुः ।

**[हिताशंसुः]** 'आङः शसुङ् इच्छायाम्' (८५३) आशंस्० । आशंसनशीलः । 'सन्-भिक्षा-ऽऽशंसेरुः' (५।२।३३) उप्र० । हितमाशंसुः ।

**[तत्त्वबुभुत्सुः]** 'बुधिं ज्ञाने' (१२६२) बुध् । बोद्धुमिच्छति । 'तुमर्हा०' (३।४।२१) सन्प्र०→स । 'सन्-यङश्च' (४।१।३) बुध्द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ग-ड-द-बादे०' (२।१।७७) बु०→भु० । 'धुटस्तृतीयः' (२।१।७६) ध०→द० । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द०→त० । बुभुत्सनं = बुभुत्सुः । 'सन्-भिक्षा-ऽऽशंसेरुः' (५।२।३३) उप्र० । 'अतः' (४।३।८२) अलोपः । तत्त्वं बुभुत्सुः ।

**[सुखेच्छुः]** सुख 'इषत् इच्छायाम्' (१४१९) इष् । सुखमिच्छतीत्येवंशीलः । 'विन्दिच्छू' (५।२।३४) सुखेच्छुनिपातः । उभयत्र प्रथमैक० सि । 'सो रुः' (२।१।७२) स०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।।छ।।

**प्राप्ताऽऽपन्नौ तयाऽच्च ।।३।१।६३।।**

**[प्राप्ताऽऽपन्नौ]** प्राप्तश्च आपन्नश्च = प्राप्तापन्नौ ।

---

P 卐 पूरयिष्यामीति पूरकः । 'क्रियायां क्रियार्थायां०' (५।३।१३) णकच्प्र० ।

P + धर्मं श्रयति स्म ।

**[तयाऽच्च]** तद् तृतीया टा । 'आ द्वेरः' (२।१।४१) द०⟶अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'आत्' (२।४।१८) आप्प्र०⟶आ । 'टौस्येत्' (१।४।१९) ए । 'एदैतोऽयाय्' (१।२।२३) अय् । अत् प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । च प्रथमा सि ।

**[प्राप्तजीविका]** प्राप्ता जीविकां = प्राप्तजीविका इत्यत्र एकार्था(र्थी)भावात् 'परतः स्त्री०' (३।२।४९) इत्यनेन (पुंवद्भावः) न स्यात् इति "अत्" वचनम् ।

**[आपन्नजीविका]** 'पदिंच् गतौ' (१२५७) पद्, आपूर्व० । आपद्यन्ते स्म । 'गत्यर्था०' (५।१।११) क्तप्र०⟶त । 'रदादमूर्च्छ-मदः क्तयोर्दस्य च' (४।२।६९) द-त०⟶न । उभयत्र 'आत्' (२।४।१८) आप्प्र०⟶आ । आपन्ना जीविकाम् । अनेनाऽत् ।

**[प्राप्तगवी]** प्राप्ता गाम् । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ? ('ओदौतोऽवाव्' (१।२।२४) अव्) ।

**[आपन्नगवी स्त्री]** आपन्ना गाम् । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ? ('ओदौतोऽवाव्' (१।२।२४) अव्) । 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङी ।

**[आपन्नजीविकः]** आपन्नो जीविकाम् । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[प्राप्तजीविकम्]** प्राप्तं जीविकाम् । 'क्लीबे०' (२।४।९७) ह्रस्वः ।

**[आपन्नजीविकं कुलम्]** आपन्नं जीविकाम् । 'क्लीवे' (२।४।९७) ह्रस्वः । उभयत्र 'प्रथमोक्तं प्राक्' (३।१।१४८) प्राप्तआपन्नपूर्वनिपातः ॥छ॥

### ईषद् गुणवचनैः ॥३।१।६४॥

**[गुणवचनैः]** गुण 'वचंक् भाषणे' (१०९६) वच् । 卐 गुणान् वचन्तीति गुणवचनानि । 'नन्द्यादिभ्योऽनः' (५।१।५२) अनप्र०, तैः ।

**[ईषत्पिङ्गलः]** ईषदल्पं पिङ्गलः ।

**[ईषत्कडारः]** ईषदल्पं कडारः ।

**[ईषद्विकटः]** ईषदल्पं विकटः ।

**[ईषदुन्नतः]** ईषदल्पमुन्नतः ।

**[ईषद्रक्तः]** ईषदल्पं रक्तः । अमू द्वौ औणादिकौ क्तान्ताया गुणवचनाभावात् ।

**[ऐषत्पिङ्गलम्]** ईषत्पिङ्गलस्येदं = ऐषत्पिङ्गलम् । 'तस्येदम्' (६।३।१६०) अण्प्र०⟶अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[ऐषत्पिङ्गलकाम्यत्]** ईषत्पिङ्गलमैच्छत् । 'द्वितीयायाः काम्यः' (३।४।२२) काम्यप्र० । ह्यस्तनी दिव्⟶त् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'स्वरादेस्तासु' (४।४।३१) वृद्धिः ऐ । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः ।

**[कोपेषद्रक्तः]** कोपेनेषद्रक्तः = कोपेषद्रक्तः । 'ऊनार्थपूर्वाद्यैः' (३।१।६७) इति समासः, द्विपदत्वात् ।

**[ईषत्पिङ्गल ! युष्माकमथो पूत्रः]** ईषत्पिङ्गल ! युष्माकमथो इत्यत्र 'असदिवाऽऽमन्त्र्यं पूर्वम्' (२।१।२५) इत्यनेन पूर्वं(र्व)पदमसत् ॥छ॥

---

P 卐 गुणा उच्यन्ते यैस्तैः ।

**तृतीया तत्कृतैः ।।३।१।६५।।**

**[तत्कृतैः]** तेन - तृतीयान्तेन कृतानि = तत्कृतानि, तैः ।

**[शङ्कुलाखण्डश्चैत्रः]** शङ्कुलया कृतः खण्डः = शङ्कुलाखण्डः । 卐 शङ्कुला गण्डी कथ्यते ।

**[गिरिकाणः]** गिरिणा काणः । गिरि दडउ कथ्यते ।

**[मदपटुः]** मदेन पटुः ।

**[क्षारशुक्लः]** क्षारेण कृतः शुक्लः ।

**[कुसुमसुरभिः]** कुसुमेन कृतः सुरभिः ।

कृतायां वृत्तौ समासे कृतशब्दो न प्रयुज्यते ।

**[गोभिर्वपावान्]** वपा मेदोऽस्थिकृद्वपा मांसं, वपा विद्यते यस्याः । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र० —>मत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'मावर्णान्तो०' (२।१।९४) म०—>व० ।

**[घृतेन पाटवम्]** पटु । पटोर्भावः । 'य्वृवर्णाल्लध्वादेः' (७।१।६९) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

**[विद्यया धाष्टर्यम्]** धृष्ट । धृष्टस्य भावः । 'पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र०—>य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आर् । 'अवर्णेवर्णस्य'(७।४।६८) अलोपः ।।छ।।

**चतस्राऽर्द्धम् ।।३।१।६६।।**

**[चतस्रा]** चतुर् तृतीया टा । 'त्रि-चतुरस्तिसृ-चतसृ०' (२।१।१) चतसृ आदेशः । 'ऋतो रः स्वरेऽनि' (२।१।२) रत् ।

**[अर्द्धचतस्रो मात्राः]** अर्द्धेन कृताश्चतस्रोऽर्द्धचतस्रः ।

**[अर्द्धचतस्रः खार्यः]** अर्द्ध-चतुर् । अर्द्धेन कृताश्चतस्रोऽर्द्धचतस्रः खार्यः । चतुर् प्रथमा जस् । 'त्रि-चतुरस्तिसृ-चतसृ स्यादौ' (२।१।१) चतसृ आदेशः । 'ऋतो रः स्वरेऽनि' (२।१।२) रत् ।।छ।।

**ऊनार्थपूर्वाद्यैः ।।३।१।६७।।**

**[ऊनार्थपूर्वाद्यैः]** ऊनोऽर्थो येषां तानि = ऊनार्थानि, पूर्व आद्यो येषां तानि = पूर्वाद्यानि, ऊनार्थानि च पूर्वाद्यानि च = ऊनार्थपूर्वाद्यानि, तैः ।

**[माषोनम्]** माषेणोनम् ।

**[कार्षापणोनम्]** कार्षापणेनोनम् ।

**[माषविकलम्]** माषेण विकलम् ।

**[कार्षापणविकलम्]** कार्षापणेन विकलम् ।

**[मासपूर्वः]** मासेन पूर्वः ।

**[संवत्सरपूर्वः]** संवत्सरेण पूर्वः ।

---

P 卐 शङ्कुला उन्नतिकार्डिभानां खलनदारु ।

**[मासावरः]** मासेनाऽवरः ।

**[संवत्सरावरः]** संवत्सरेणाऽवरः ।

**[हिरण्यार्थः]** हिरण्येनाऽर्थः ।

**[आत्मनापञ्चमः]** आत्मना पञ्चमः ।

**[आत्मनाषष्ठः]** आत्मना षष्ठः । 'आत्मनः पूरणे' (३।२।१४) अलुप्समासः ।

**[द्रोणाधिका खारी]** द्रोणेनाऽधिका ।

**[एकद्रव्यवत्त्वम्]** द्रव्य । द्रव्यं विद्यते यत्र तत् । 'तदस्या०' (७।२।१) मतुप्र०→मत् । 'मावर्णान्तो०' (२।१।९४) म०→व० । द्रव्यवतो भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । एकेन द्रव्यवत्त्वम् ।।छ।।

**कारकं कृता ।।३।१।६८।।**

**[कृता]** कृत् तृतीया टा ।

**[आत्मकृतम्]** आत्मना क्रियते स्म = आत्मकृतम् ।

**[परकृतम्]** परेण कृतम् । परेण क्रियते स्म ।

**[चैत्रनखनिर्भिन्नः]** 卐 चैत्रेण नखैर्निर्भिन्नः ।

**[सुजनसुलभः]** सुजनेन सुखेन लभ्यते ।

**[दुर्जनदुर्लभः]** दुर्जनेन दुःखेन लभ्यते । 'युवर्ण-वृ-दृ-वश-रण-गमृद्-ग्रहः' (५।३।२८) अल्प्र० ।

**[अरिदुर्जयः]** 'जिं अभिभवे' (८ ) जि । अरिभिर्दुःखेन जीयते । 'युवर्ण-वृ-दृ-वश-रण०' (५।३।२८) अल्प्र० ।

+ **[लोकदुर्दशनम्]** 'दंशं दशने' (४९६) दंश् । लोकेन दुःखेन दश्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन ।

**[पादहारकः]** पादाभ्यां ह्रियते । 'बहुलम्' (५।१।२) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

* **[तलाहतिः]** 'हनंक् हिंसा-गत्योः' (११००) हन्, आपूर्व० । आहननं = आहतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र० →ति । तलेनाऽऽहतिः ।

**[शस्त्रप्रहृतिः]** 'हृंग् हरणे' (८८५) हृ, प्रपूर्व० । प्रहरणं = प्रहृतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । शस्त्रैः प्रहृतिः ।

**[काकपेया नदी]** 'पां पाने' (२ ) पा । काकैः पीयते । 'य एच्चातः' (५।१।२८) यप्र० - आकारस्य एत् । 'आत्' (२।४।१८) आप् ।

**[श्वलेह्यः कूपः]** श्वान् 'लिहींक् आस्वादने' (११२९) लिह् । श्वभिर्लिह्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०→य । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

**[कुक्कुटसंपात्या ग्रामाः]** 'पत्लृ गतौ' (९६२) पत्, सम्पूर्व० । कुक्कुटैः संपत्यन्ते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०→य । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः ।

**[कण्टकसंचेय ओदनः]** 'चिंग्ट् चयने' (१२९०) चि । कण्टकैः संचीयते । 'य एच्चातः' (५।१।२८) यप्र० । 'नामिनो

---

P 卐 नखैर्निर्भिद्यते स्म = नखनिर्भिन्नः । + इदमुदाहरणं बृहदवृत्तौ नास्ति ।

* बृहद्वृत्तौ - तलाहृतिः ।

गुणोऽक्ङिति' (४।३।१) गु० ए । प्रथमा सि । 'सो रुः' (२।१।७२) स०—>र० ।

**[बाष्पच्छेद्यानि]** बाष्प 'छिद्रूंपी द्वैधीकरणे' (१४७८) छिद् । बाष्पेण छिद्यन्ते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०—>य । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०—>इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[बुसोपेन्ध्यम्]** 'ञिइन्धैपि दीप्तौ' (१४९८) इन्ध्, उपपूर्व० । बुसैरुपेध्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०—>य ।

**[तृणोपेन्ध्यम्]** तृणैरुपेध्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०—>य ।

**[घनघात्यः]** घन 'हनंक् हिंसा-गत्योः' (११००) हन् । घनेन हन्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र० —>य । 'ञ्णिति घात्' (४।३।१००) घात्आदेशः ।

**[विद्ययोषितः]** 'वसं निवासे' (९९९) वस् । उष्यते स्म । क्तप्र०—>त । 'स्ताद्यशितो०' (४।४।३२) इट् (?) ('क्षुधवसस्तेषाम्' (४।४।४३) इट्) । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०—>उ० । 'नाम्यन्तस्था०' (२।३।१५) स०—>ष० । 'घस्-वसः' (२।३।३६) स०—>ष० ।

**[धान्येन धनवान्]** धन । धनं विद्यते यस्याऽसौ । 'तदस्याऽस्त्यस्मिन्निति मतुः' (७।२।१) मतुप्र०—>मत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'मावर्णान्तो०' (२।१।९४) म०—>व० । 'अभ्वादेरत्वसः सौ' (१।४।९०) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[दात्रेण लूनवान्]** 'लूग्श् छेदने' (१५१९) लू । लुनाति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०—>तवत् । 'ऋ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०—>न० ।

**[परशुना छिन्नवान्]** 'छिद्रूंपी द्वैधीकरणे' (१४७८) छिद् । छिनत्ति स्म । 'क्त-क्तवतू' (५।१।१७४) क्तवतुप्र०—>तवत् । 'रदादमूर्च्छ-मदःक्तयोर्दस्य च' (४।२।६९) त-द०—>न० ।

**[परशुना छित्त्वा]** छेदनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०—>त्वा ।

**[काकैः पातव्यः]** 'पां पाने' (२ ) पा । पीयते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० ।

**[श्वभिर्लेढव्यः]** 'लिहींक् आस्वादने' (११२९) लिह् । लिह्यते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'हो धुट्-पदान्ते' (२।१।८२) ह०—>ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०—>ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध०—>ढ० । 'ढस्तड्ढे' (१।३।४२) ढलोपः ।।छ।।

**नविंशत्यादिनैकोऽच्चान्तः ।।३।१।६९।।**

**[नविंशत्यादिना]** नविंशतिरादिर्यस्याऽसौ नविंशत्यादिः, तेन ।

**[अत्]** अत् प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[एकान्नविंशतिः, एकाद् नविंशतिः]** एकेन न विंशतिः । अनेन अत् । 'धुटस्तृतीयः' (२।१।७६) त०—>द० । 'तृतीयस्य पञ्चमे' (१।३।१) द०—>न० ।

**[एकान्नत्रिंशत्, एकाद् नत्रिंशत्]** एकेन न त्रिंशत् ।

**[एकान्नचत्वारिंशत्, एकाद् नचत्वारिंशत्]** एकेन न चत्वारिंशत् ।।छ।।

## चतुर्थी प्रकृत्या ॥३।१।७०॥

**[प्रकृत्या]** प्रकरणं = प्रकृतिः, तया ।

**[यूपदारु]** यूपाय दारु ।

**[कुण्डलहिरण्यम्]** कुण्डलाय हिरण्यम् ।

**[अवहननायोलूखलम्]** अव 'हनंक् हिंसा-गत्योः' (११००) हन् । अवहन्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन, तस्मै ॥छ॥

## हितादिभिः ॥३।१।७१॥

**[हितादिभिः]** 卐 हितमादिर्येषां ते = हितादयस्तैः ।

**[गोहितम्]** गोभ्यो हितम् ।

**[गोसुखम्]** गोभ्यः सुखम् ।

**[गोरक्षितः]** गोभ्यो रक्षितः ।

**[अश्वघासः]** अश्वेभ्यो घासः ।

**[श्वश्रूसुरा]** श्वश्वै सुरा ।

**[श्वश्रूसुरम्]** श्वश्वै सुरा । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[हस्तिविधा]** हस्तिने विधा ।

**[धर्मनियमः]** धर्माय नियमः ।

**[धर्मजिज्ञासा]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । ज्ञातुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'सन्-यङश्च' (४।१।३) ज्ञा सउं द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'सन्यस्य' (४।१।५९) इ । जिज्ञासनं = जिज्ञासा । 'शंसि-प्रत्ययात्' (५।३।१०५) अप्र० । 'अतः' (४।३।८२) अलोपः । धर्माय जिज्ञासा ।

**[नाट्यशाला]** नाट्याय शाला ।

**[आत्मनेपदम्]** आत्मने पदम् । 'परा-ऽऽत्मभ्यां ङेः' (३।२।१७) अलुप्समासः ।

**[परस्मैपदम्]** परस्मै पदम् । 'परा-ऽऽत्मभ्यां ङेः' (३।२।१७) अलुप्समासः ।

**[देवदेयम्]** देव 'डुदांग्क् दाने' (११३८) दा । देवाय दीयते । 'य एच्चातः' (५।१।२८) यप्र०-आ०→ए० ।

**[ब्राह्मणदेयम्]** ब्राह्मण 'डुदांग्क् दाने' (११३८) दा । ब्राह्मणाय दीयते । 'य एच्चातः' (५।१।२८) यप्र०-आ० →ए० ।

**[वरप्रदेया कन्या]** वर प्र 'डुदांग्क् दाने' (११३८) दा । वराय प्रदीयते । 'य एच्चातः' (५।१।२८) यप्र०-आ०→ ए० ।

---

P 卐 हित आदिर्येषां तानि ।

**[ब्राह्मणाय दातव्यम्]** दीयते = दातव्यम् । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० ।।छ।।

**तदर्थार्थेन** ।।३।१।७२।।

**[तदर्थार्थेन]** तस्याश्चतुर्थ्या अर्थो यस्याऽसौ तदर्थः, तदर्थश्चासावर्थश्च = तदर्थार्थस्तेन ।

**[पित्रर्थं पयः]** पित्रे इदं = पित्रर्थम् ।

**[महदर्थं धनम्]** महते इदं = महदर्थम् ।

**[उदकार्थो घटः]** उदकायाऽयं = उदकार्थो घटः ।

**[आतुरार्था यवागूः]** आतुराय इयम् ।।छ।।

**पञ्चमी भयाद्यैः** ।।३।१।७३।।

**[भयाद्यैः]** 卐 भय आद्यो येषां ते = भयाद्यास्तैः ।

**[वृकभयम्]** वृकाद् भयम् ।

**[वृकभीतः]** वृकाद् भीतः ।

**[द्वीपान्तरानीतः]** द्वीपान्तराद् आनीतः ।

**[स्थानभ्रष्टः]** स्थानाद् भ्रष्टः ।

**[प्रासादात् पतितः]** 'पत्लृ गतौ' (९६२) पत् । पत्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् ।

**[भोजनादपत्रस्तः]** 'त्रसैच् भये' (११७१) त्रस्, अपपूर्व० । अपत्रस्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । 'रः पदान्ते०' (१।३।५३) विसर्गः ।।छ।।

**क्तेनाऽसत्त्वे** ।।३।१।७४।।

**[क्तेन]** क्त, तृतीया टा । 'टा-ङसोरिन-स्यौ' (१।४।५) इन । 'अवर्णस्ये०' (१।२।६) ए ।

**[असत्त्वे]** सीदतो लिङ्गसंख्ये इति सत्त्वम् । न सत्त्वं = असत्त्वम् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[स्तोकान्मुक्तः]** 'मुच्लृंती मोक्षणे' (१३२०) मुच् । मुच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिटश्च-जोः०' (४।१।१११) 'च०→क०(?) । ('च-जः क-गम्' (२।१।८६) च०→क०) । स्तोकान्मुक्तः । 'असत्त्वे ङसेः' (३।२।१०) अलुप्समासः ।

**[अल्पान्मुक्तः]** अल्पान्मुच्यते स्म । 'असत्त्वे ङसेः' (३।२।१०) अलुप्समासः ।

**[स्तौकान्मुक्तिः]** स्तोकान्मुक्तस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।।छ।।

**परःशतादिः** ।।३।१।७५।।

**[परःशतादिः]** परःशत आदिर्यस्याऽसौ परःशतादिः ।

**[परःशताः]** शतात् परे = परःशताः, परशब्दादत एव निर्देशात् सकारागमः ।

---

P 卐 भया(य) आद्यो येषां तानि, तैः ।

**[परःसहस्राः]** सहस्रात् परे = परःसहस्राः ।

**[परोलक्षाः]** लक्षाल्लक्षाया वा परे = परोलक्षाः ॥छ॥

**पष्ठ्ययत्नाच्छेषे ॥३।१।७६॥**

**[षष्ठी]** षण्णां पूरणी = षष्ठी । 'षट्-कति-कतिपयात् थट्' (७।१।१६२) थट्प्र० ।

**[अयत्नात्]** न यत्नः = अयत्नः, तस्मात् ।

**[यतिकम्बलः]** यतेः कम्बलः ।

**[राजगवीक्षीरम्]** राज्ञो गवां = राजगवी । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङी । राजगव्याः क्षीरम् ।

**[देवदत्तस्य गुरुकुलं, जिनदत्तस्य दासभार्या]** देवदत्तस्य गुरुकुलं, जिनदत्तस्य' दासभार्या इत्यत्र सापेक्षत्वे गमिनिकत्वाद्भवति । वाक्यसमासयोरेकार्थः प्रतिपादकत्वं गमकत्वम् ।

**[सर्पिषो नाथितम्]** 'नाथृङ् उपतापैश्वर्याशीःषु च' (७१६) नाथ् । 卐 नाथ्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० त । 'स्ताद्यशितो०' (४।४।३२) इट् ।

**[मातुः स्मृतम्]** 'स्मृं चिन्तायाम्' (१८) स्मृ । स्मर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[सर्पिषो दयितम्]** 'दयि दान-गति-हिंसा-दहनेषु च' (७९९) दय् । दय्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितो०' (४।४।३२) इट् ।

**[मातुरीशितम्]** 'ईशिक् ऐश्वर्ये' (१११६) ईश् । ईश्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त ।

**[चौरस्य रुग्णम्]** 'रुजोंत् भङ्गे' (१३५०) रुज् । रुज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'सूयत्याद्योदितः' (४।२।७०) त०→न० । 'च-जः क-गम्' (२।१।८६) ज०→ग० । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० ।

**[चौरस्योज्जासितम्]** 'जसण् ताडने' (१७५८) जस्, उत्पूर्व० । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । उज्जास्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिच्लोपः ।

**[शतस्य द्यूतम्]** 'दिवूच् क्रीडा-जयेच्छा-पणि-द्युति-स्तुति-गतिषु' (११४४) दिव् । दीव्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'अनुनासिके च च्छ्-वः शूट्' (४।१।१०८) व०→ऊट्→ऊ । 'इवर्णादे०' (१।२।२१) यत्वम् ।

**[कटकरणस्यायुक्तः]** कटकरणस्यायुक्त इत्यत्र 'कुशला-ऽऽयुक्तेनाऽऽसेवायाम्' (२।२।९७) इत्यनेन पष्ठी ।

**[सर्पिषो ज्ञानम्]** सर्पिषो ज्ञानमित्यत्र 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । ज्ञायते = ज्ञानम् । 'अनट्' (५।३।१२४) अनट्प्र०→अन । यद्वा ज्ञायति(ते)स्म । 'ज्ञानेच्छाऽर्चाऽर्थ-जीच्छील्यादिभ्यः क्तः' (५।२।९२) क्तप्र०→त । 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०→न० । 'अज्ञाने ज्ञः षष्ठी' (२।२।८०) षष्ठी न शेषे ।

**[रुदतः प्रव्रजितः]** 'रुदृक् अश्रुविमोचने' (१०८७) रुद् । रोदितीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० →अत् । षष्ठी ङस् । धृज (१३०) - धृजु (१३१) - ध्वज (१३२) - ध्वजु (१३३) - ध्रज (१३४) - ध्रजु (१३५) - वज (१३६) - 'व्रज गतौ' (१३७) व्रज्, प्रपूर्व० । प्रव्रज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणा-

P 卐 नाथनं = नाथितम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र० → त । 'स्ताद्यशितो०' (४।४।३२) इट् । यद्वा नाथते स्म । 'गत्यर्था०' (५।१।११) क्तप्र० → त ।

देरिट्' (४।४।३२) इट् । 'षष्ठी वाऽनादरे' (२।२।१०८) षष्ठी ।

**[मनुष्याणां क्षत्रियः शूरतमः]** मनुष्याणामित्यत्र 'सप्तमी चाऽविभागे निर्धारणे' (२।२।१०९) इत्यनेन षष्ठी । प्रकृष्टः शूरः = शूरतमः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र०→तम ।

**[गवां कृष्णा संपन्नक्षीरतमा]** प्रकृष्टं क्षीरं यस्याः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र०→तम । 'आत्' (२।४।१८) आप्प्र०→आ । 'सप्तमी चाविभागे०' (२।२।१०९) इत्यनेन षष्ठी ।

**[अध्वगानां रथगामी शीघ्रतमः]** अध्वन् अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । अध्वनि गच्छन्तीति अध्वगाः । 'क्वचित्' (५।१।१७१) डप्र०→अ । 'डित्यन्त्य०' (२।१।११४) अम्लोपः, तेषाम् । रथ अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । रथेन गच्छतीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । 'सप्तमी चाविभागे निर्धारणे' (२।२।१०९) षष्ठी ।

**[सर्पिर्ज्ञानं, मातृस्मरणम्]** सर्पिषो ज्ञानम्, मातुः स्मरणमित्यत्र 'कृति' (३।१।७७) इत्यनेन समासो भविष्यति, यतः कृद्योगेऽत्र षष्ठी, संबंधे त्वनेनैव ।

**[गोस्वामी]** गवां स्वामी ।

**[पृथिवीश्वरः]** पृथिव्या ईश्वरः ।

**[विद्यादायादः]** विद्याया दायादः ।।छ।।

### कृति ।।३।१।७७।।

**[कृति]** 'डुकृंग् करणे' (८८८ ) कृ । करोतीति कृत्, तस्मिन् ।

**[सिद्धसेनकृतिः]** 'डुकृंग् करणे' (८८८ ) कृ । करणं = कृतिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । सिद्धसेनस्य कृतिः । 'कर्तरि' (२।२।८६) षष्ठी ।

**[गणधरोक्तिः]** 'वचंक् भाषणे' (१०९६) वच् । वचनं = उक्तिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'च-जः क-गम्' (२।१।८६) च०→क० । गणधराणामुक्तिः । 'कर्तरि' (२।२।८६) षष्ठी ।

**[इध्मव्रश्चनः]** 'ओव्रस्चौत् छेदने' (१३४१) व्रस्च् । वृश्चति । 'अनट्' (५।३।१२४) अनट्प्र०→अन । इध्मानां - इन्धनानां = व्रश्चनः । 'कर्मणि कृतः' (२।२।८३) इत्यनेन षष्ठी ।

**[पलाशशातनः]** 卐 शातण् शातने (  ) शात् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । शातयतीति । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपः । पलाशानां शातनः । 'कर्मणि कृतः' (२।२।८३) षष्ठी ।

**[धर्मानुस्मरणम्]** अनु 'स्मृं चिन्तायाम्' (१८ ) स्मृ । अनुस्मर्यते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । धर्मस्याऽनुस्मरणम् । 'कर्मणि कृतः'

---

卐 श० म० न्यासानुसन्धाने - 'शदलृं शातने' अतो ण्यन्तात् 'शदिरगतौ शात्' (४।२।२३) इति शातादेशे शात्यतेऽनेनेति करणे बाहुलकात् कर्त्तरि वाऽनटि शातनो दण्डः ।

(२।२।८३) षष्ठी ।

**[तत्त्वानुचिन्तनम्]** अनु 'चितुण् स्मृत्याम्' (१६४५) चित् । 'उदितः स्वरान्नोऽन्तः' (४।४।९८) चिन्त् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । अनुचिन्त्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपः । तत्त्वानामनुस्मरणम् ।

**[सर्पिर्ज्ञानम्]** सर्पिषो ज्ञानम् ।

**[एधोदकोपस्करणम्]** उप 'डुकृंग् करणे' (८८८) कृ । 'उपाद् भूषा-समवाय-प्रतियत्न-विकार-वाक्याऽध्याहारे' (४।४।९२) सडागमः । उपस्क्रियते । 'अनट्' (५।३।१२४) अनट्प्र०→अन । एधाश्च उदकं च = एधोदकम् । एधोदकस्योपस्करणम् ।

**[चौरोज्जासनस्]** 'जसण् ताडने' (१७५८) जस्, उत्पूर्व० । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । उज्जास्यते । 'णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः' (५।३।१११) अनप्र० । 'णेरनिटि' (४।३।८३) णिच्लोपः । चौरस्योज्जासनम् ॥छ॥

### याजकादिभिः ॥३।१।७८॥

**[याजकादिभिः]** 'यजीं देवपूजा-सङ्गतिकरण-दानेषु' (९९१) यज् । यजन्तं प्रयुङ्क्ते । 'प्रयोक्तृ०' (३।४।२०) णिग्प्र० । याजयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । याजक आदिर्येषां तानि = याजकादीनि, तैः ।

**[ब्राह्मणयाजकः]** 'यजीं देवपूजा-सङ्गतिकरण-दानेषु' (९९१) यज् । यजतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । ब्राह्मणानां याजकः ।

**[गुरुपूजकः]** 'पूजण् पूजायाम्' (१५८६) पूज् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । पूजयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । गुरूणां पूजकः ।

**[गुरुसदृशः]** गुरूणां सदृशः । 'तुल्यार्थैस्तृतीया-षष्ठ्यौ' (२।२।११६) षष्ठी ।

**[अन्यत्कारकम्]** अन्य 'डुकृंग् करणे' (८८८) कृ । अन्यस्य कारकं करोतीति । 'णक-तृचौ' (५।१।४८) णकप्र० →अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । प्रथमैक० सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । 'ईय-कारके' (३।२।१२१) दोऽन्तः ।

**[विश्वगोप्ता]** विश्वस्य गोप्ता ।

**[तीर्थकर्ता]** तीर्थस्य कर्ता ।

**[तत्प्रयोजको हेतुः]** तस्य प्रयोजकः ।

**[जनिकर्तुः प्रकृतिः]** जनेः कर्त्ता = जनिकर्त्ता, तस्य ॥छ॥

### पत्ति-रथौ गणकेन ॥३।१।७९॥

**[पत्तिरथौ]** पत्तिश्च रथश्च = पत्तिरथौ ।

**[पत्तिगणकः]** 'गणण् संख्याने' (१८७४) गण । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 'अतः' (४।३।८२) अलोपः । गणयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । पत्तीनां गणकः ।

**[रथगणकः]** रथानां गणकः ।

**[ज्योतिर्गणकः]** ज्योतिषां गणकः । 'अकेन क्रीडा-ऽऽजीवे' (३।१।८१) समासः ।

## सर्वपश्चादादयः ।।३।१।८०।।

**[सर्वपश्चादादयः]** सर्वपश्चादादिर्येषां ते = सर्वपश्चादादयः ।

**[सर्वपश्चात् पदं वर्त्तते]** सर्वेषां पश्चात् = सर्वपश्चात् ।

**[सर्वचिरं जीवति]** सर्वेषां चिरम् । क्रियाविशेषणम् ।

**[तदुपरिष्टात् रुक्मं निदधाति]** तस्य उपरिष्टात् = तदुपरिष्टात् । रुक्मं = सुवर्णम् । नि 'डुधांग्क् धारणे च' (११३९) धा । वर्त्त० तिव् । 'हवः शिति' (४।१।१२) धा द्विर्वचनम् । 'ह्रस्वः' (४।१।३९) ह्रस्वत् । 'द्वितीयतुर्ययोः पूर्वौ' (४।१।४२) ध०→द० । 'रि-रिष्टात्-स्तादस्तादसतसाता' (२।२।८२) इत्यादिना यदा षष्ठी तदा शेषद्वारेण न प्राप्नोति, यदा तु पश्चादित्यव्ययं अखण्डं अत्यये षष्ठीसमासप्रतिषेधात् विध्यर्थम् ।।छ।।

## अकेन क्रीडा-ऽऽजीवे ।।३।१।८१।।

**[क्रीडाऽऽजीवे]** क्रीडा च आजीवश्च = क्रीडाऽऽजीवम्, तस्मिन् ।

**[उद्दालपुष्पभञ्जिका]** 'भञ्जोंप् आमर्दने' (१४८६) भञ्ज् । P卐भञ्जनं = भञ्जिका । भावेति(ऽपि) 'नाम्नि पुंसि च' (५।३।१२१) णकप्र० → अक । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ । उद्दालपुष्पाणां भञ्जिका ।

**[वारणपुष्पप्रचायिका]** प्र 'चिंग्ट् चयने' (१२९०) चि । प्रचीयतेऽस्यामिति । 'नाम्नि पुंसि च' (५।३।१२१) णकप्र० →अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्०'(२।४।१११) इ । वारणपुष्पाणां प्रचायिका ।

**[सालभञ्जिका]** सालस्य भञ्जिका ।

**[दन्तलेखकः]** 'लिखत् अक्षरविन्यासे' (१३३६) लिख् । लिखतीति लेखकः । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । दन्तानां लेखकः ।

**[नखलेखकः]** नखानां लेखकः ।

**[अवस्करसूदकः]** 'षूदि क्षरणे' (७३६) षूद् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सूद् । सूदतीति (ते इति) । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । अवस्करस्य सूदकः ।

**[रमणीयकारकः]** 'डुकृंग् करणे' (८८८) कृ । करोतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । रमणीयस्य कारकः ।

**[ओदनस्य भोजकः]** 'भुजंप् पालनाऽभ्यवहारयोः' (१४८७) भुज् । भुनक्तीति भोजकः । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[पयसः पायकः]** 'पां पाने' (२ ) पा । पिबतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'आत ऐः कृञ्जौ' (४।३।५३) आ०→ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । सर्वत्र प्रथमैक० सि ।।छ।।

## न कर्तरि ।।३।१।८२।।

**[भवतः शायिका]** 'भांक् दीप्तौ' (१०६१) भा । भातीति । 'भातेर्डवतुः' (उणा० ८८६) डवतुप्र०→अवत् ।

P 卐 उद्दालस्य पुष्पाणि = उद्दालपुष्पाणि । भनक्तीति भञ्जिका । 'नाम्नि पुंसि च' (५।३।१२१) णकप्र० । 'अस्याऽयत्०' (२।४।१११) इ । उद्दालस्य पुष्पाणि भञ्जिका ।

'डित्यन्त्यस्वरादेः' (२।१।११४) आलोपः, तस्य । 'शीङ्क् स्वप्ने' (११०५) शी । शयितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । 'आत्' (२।४।१८) आप्प्र० → आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[भवत आसिका]** भवतः पूर्ववत् । 'आसिक् उपवेशने' (१११९) आस् । आसितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'आत्' (२।४।१८) आप्प्र० → आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[भवतोऽग्रगामिका]** भवतः पूर्ववत् । अग्रे अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् । अग्रे गन्तुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'आत्' (२।४।१८) आप्प्र० → आ । 'अस्याऽयत्०' (२।४।१११) इ ।

**[इक्षुभक्षिकां मे धारयसि]** 'भक्षण् अदने' (१७१७) भक्ष् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र० → इ । भक्षयितुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । 'आत्' (२।४।१८) आप्प्र० → आ । 'अस्याऽयत्०' (२।४।१११) इ । इक्षूणां भक्षिका । अस्मद् षष्ठी ङस् । 'ङे-ङसा ते मे' (२।१।२३) मे । 'धृंग् धारणे' (८८७) धृ । ध्रियते इक्षुभक्षिकः(का), तां ध्रियमाणं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० → इ । वर्त्त० सिव् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[पयःपायिकां मे धारयसि]** 'पां पाने' (२) पा । पातुं पर्यायः । 'पर्यायाऽर्हणोत्पत्तौ च णकः' (५।३।१२०) णकप्र० → अक । 'आत ऐः कृञ्ञौ' (४।३।५३) आ० → ऐ० । 'एदैतोऽयाय्' (१।२।२३) आय् । 'आत्' (२।४।१८) आप्प्र० → आ । 'अस्याऽयत्०' (२।४।१११) इ । अस्मद् षष्ठी ङस् । 'ङे-ङसा ते मे' (२।१।२३) मे । 'धृंग् धारणे' (८८७) धृ । ध्रियते पयःपायिकः(का), तां ध्रियमाणं प्रयुङ्क्ते । शेषं पूर्ववत् ।।छ।।

**कर्मजा तृचा च ।।३।१।८३।।**

**[कर्मजा]** कर्मन् 'जनैचि प्रादुर्भावे' (१२६५) जन् । कर्मणे(णि) जाता । 'पञ्चमात् डः' (उणा० १६८) डप्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । 'आत्' (२।४।१८) आप्प्र० → आ ।

**[तृचा]** तृच् तृतीया टा ।

**[ओदनस्य भोजकः]** ओदन षष्ठी ङस् । भोजकः (३।१।८१) सूत्रवत् ।

**[सक्तूनां पायकः]** पायकः (३।१।८१) सूत्रवत् ।

**[अपां स्रष्टा]** 'सृजंत् विसर्गे' (१३४९) सृज् । सृजतीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'अः सृजि-दृशोऽकिति' (४।४।१११) अत् । 'इवर्णादे०' (१।२।२१) र० । 'यज-सृज-मृज०' (२।१।८७) ज० → ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त० → ट० । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१।४।८४) डा । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[पुरां भेत्ता]** 'भिदूंपी विदारणे' (१४७७) भिद् । भिनत्तीति । 'णक-तृचौ' (५।१।४८) तृच्प्र० → तृ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । 'अघोषे प्रथमोऽशिटः' (१।३।५०) द० → त० । प्रथमा सि । 'ऋदुशनस्०' (१।४।८४) डा । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[भूभर्त्ता]** भुवो भर्त्ता ।

**[वज्रभर्त्ता]** वक्र(ज्र)स्य भर्त्ता ।

क्रियाशब्दस्य कोऽर्थः ? अस्याऽयमर्थः - क्रियाशब्द एव, यो भर्तृशब्दः स न गृह्यते, यस्तु योगरूढः स न ग्राह्यः, तस्मिंश्च गृह्यमाणे सर्वं सुन्दरम् ।।छ।।

**तृतीयायाम्** ।।३।१।८४।।

**[आश्चर्यो गवां दोहोऽगोपालकेन]** 'चर भक्षणे च' (४१०) चर्, आङ्पूर्व० । आचर्यत इति । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०→य ? । ('चरेराङस्त्वगुरौ' (५।१।३१) यप्र०) । 'वर्चस्कादिष्ववस्करादयः' (३।२।४८) आश्चर्यः । 'दुहींक् क्षरणे' (११२७) दुह् । दोहनं = दोहः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । न गोपालकोऽगोपालकः, तेन ।

**[साध्विदं शब्दानुशासनमाचार्यस्य]** शब्दानामनुशासनम् ।

**[साध्वी कटचिकीर्षा चैत्रस्य]** 'डुकृंग् करणे' (८८८) कृ । कर्तुमिच्छति । 'तुमर्हादिच्छायां सन्नतत्सनः' (३।४।२१) सन्प्र० । 'स्वर-हन-गमोः सनि धुटि' (४।१।१०४) दीर्घः । 'ॠतां क्ङितीर्' (४।४।११६) इर् । 'सन्-यङश्च' (४।१।३) किर् द्विर्वचनम् । 'व्यञ्जनस्याऽनादेर्लुक्' (४।१।४४) अनादिव्यञ्जनलोपः । 'क-ङश्च-ञ्' (४।१।४६) क०→च० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । चिकीर्षणं = चिकीर्षा । 'शंसि-प्रत्ययात्' (५।३।१०५) अप्र० । 'अतः' (४।३।८२) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । कटस्य चिकीर्षा ।।छ।।

**तृप्तार्थ-पूरणा-ऽव्यया-ऽतृश्-शत्रानशा** ।।३।१।८५।।

**[तृप्तार्थपूरणाऽव्ययाऽतृश्शत्रानशा]** तृप्तोऽर्थो येषां ते = तृप्तार्थाः, तृप्तार्थाश्च पूरणश्च अव्ययानि च अतृश् च 卐 शतृश्च आनश् च = तृप्तार्थपूरणाऽव्ययाऽतृश्शत्रानश्, तेन ।

**[फलानां तृप्तः]** 'तृपौच् प्रीतौ' (११८९) तृप् । + तृप्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र० →त ।

**[फलानां सुहितः]** सु 'डुधांग्क् धारणे च' (११३९) धा । सुष्ठु धीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'धागः' (४।४।१५) "हि" आदेशः ।

**[सक्तूनां पूर्णः]** 'पृश् पालन-पूरणयोः' (१५३२) पृ । पूर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ऋ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०→न० । 'ओष्ठ्यादुर्' (४।४।११७) उरादेशः । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । 'रषृवर्णान्नो ण०' (२।२।६३) न०→ण० ।

**[ओदनस्याशितः]** * 'अशश् भोजने' (१५५८) अश् । अश्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् ।

**[पयसो धाणः]** 'धैं तृप्तौ' (३५) धै । 'आत् सन्ध्यक्षरस्य' (४।२।१) धा । धायति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । ऋ-ह्री-घ्रा-धा-त्रोन्द-नुद-विन्तेर्वा (४।२।७६) त०→न० ।

**[तीर्थकराणां षोडशः]** तीर्थ 'डुकृंग् करणे' (८८८) कृ । तीर्थं कुर्वन्तीति । 'हेतु-तच्छीला०' (५।१।१०३) टप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर्, तेषाम् । षष्-दशन् । षड्भिरधिका दश । एकादश-षोडश-षोडन्-षोढा-षड्ढा (३।२।९१) षोडश निपात्यते । षोडशानां पूरणः । 'संख्यापूरणे डट्' (७।१।१५५) डट्प्र० । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

---

P 卐 शता च ।

P + तृप्यतीति ।

* श० म० न्या० - आङ्पूर्वात् 'अशश् भोजने' इत्यत आश्नातीति क्ते आशित इति ।

**[चक्रधराणां पञ्चमः शान्तिः]** 'शमू उपशमे' (१२३०) शम् । शम्यादित्याशास्यमानः = शान्तिः । 'तिक्कृतौ नाम्नि' (५।१।७१) तिप्र० । 'अहन्-पञ्चमस्य क्वि-क्ङिति' (४।१।१०७) दीर्घः ।

**[चक्रधराणां द्वितीयः सगरः]** चक्र 'धृंग् धारणे' (८८७) धृ । चक्रं धरन्तीति । 'अच्' (५।१।४९) अच्प्र०→अ, तेषाम् ।

**[वासुदेवानां तृतीयः स्वयम्भूः]** स्वयम् 'भू सत्तायाम्' (१) भू । स्वयं भवतीति क्विप् स्वयम्भूः । 'दिद्युद्-ददृद्-जगज्जुहू०' (५।२।८३) क्विप्प्र० । 'अप्रयोगीत्' (१।१।३७) क्विप्लोपः ।

**[रामस्य द्विषन्]** 'द्विषींक् अप्रीतौ' (११२६) द्विष् । द्वेष्टीति । 'सुग्-द्विषार्हः सत्रि-शत्रु-स्तुत्ये' (५।२।२६) अतृश्प्र० →अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[रावणस्य द्विषन्]** 'द्विषींक् अप्रीतौ' (११२६) द्विष् । द्वेष्टीति । 'सुग्-द्विषार्हः सत्रि-शत्रु-स्तुत्ये' (५।२।२६) अतृश्प्र० →अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[चैत्रस्य पचन्]** 'डुपचींष् पाके' (८९२) पच् । पचतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[अध्वगानां धावन्तः शीघ्रतमाः]** अध्वन् 'गम्लृं गतौ' (३९६) गम् । अध्वनि गच्छन्तीति । 'क्वचित्' (५।१।१७१) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः, तेषाम् । 'धावूग् गति-शुद्ध्योः' (९२०) धाव् । धावन्तीति 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र०→अत् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । प्रथमा जस् । प्रकृष्टाः शीघ्राः = शीघ्रतमाः । 'प्रकृष्टे तमप्' (७।३।५) तमप्प्र०→तम । प्रथमा जस् ।

**[चैत्रस्य पक्ष्यन्]** 'डुपचींष् पाके' (८९२) पच् । पक्ष्यतीति । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) शतृप्र० → अत् - स्य आदिः । 'च-जः क-गम्' (२।१।८६) च०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । क-षसंयोगे क्ष । प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः ।

**[चैत्रस्य पचमानः]** पचते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः ।

**[चैत्रस्य पक्ष्यमाणः]** पक्ष्यते । 'शत्रानशा०' (५।२।२०) आनश्प्र०→आन - स्यपूर्व० । 'अतो म आने' (४।४।११४) मोऽन्तः । 'च-जः क-गम्' (२।१।८६) च०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० । क-षसंयोगे क्ष ।

**[इध्मव्रश्चनः]** इध्मानां व्रश्चनः ।

**[पलाशशातनः]** पलाशानां शातनः ।

**[शुकस्य माराविदस्य शब्दः]** न 'विदक् ज्ञाने' (१०९९) विद् । न वेत्तीति । 'नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः' (५।१।५४) कप्र०→अ । मारस्याविदः = माराविदस्तस्य, शब्दः ।

**[सर्पिषः पीयमानस्य गन्धः]** 'पां पाने' (२) पा । पीयते । 'शत्रानशावेष्यति०' (५।२।२०) आनश्प्र०→आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः, तस्य, गन्धः ।

**[सूत्रस्याधीयमानस्यार्थः]** 'इंङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयते । 'शत्रानशा०' (५।२।२०) आनश्प्र० →आन । 'क्यः शिति' (३।४।७०) क्यप्र०→य । 'अतो म आने' (४।४।११४) मोऽन्तः, तस्य, अर्थः ।।छ।।

## ज्ञानेच्छाऽर्चार्थाऽऽधास्क्तेन ॥३।१।८६॥

**[ज्ञानेच्छाऽर्चार्थाऽऽधारक्तेन]** ज्ञानं च इच्छा च अर्चा च = ज्ञानेच्छाऽर्चाः, ज्ञानेच्छाऽर्चा अर्थो(र्थाः) येषां ते = ज्ञानेच्छाऽर्चार्थाः, ज्ञानेच्छाऽर्चार्थाश्च आधारश्च = ज्ञानेच्छाऽर्चार्थाऽऽधारम्, ज्ञानेच्छाऽर्चार्थाधारे क्तः = ज्ञानेच्छाऽर्चार्थाधारक्तः, तेन ।

**[राज्ञां ज्ञातः]** 'ज्ञांश् अवबोधने' (१५४०) ज्ञा । ज्ञायत इति ज्ञातः । 'ज्ञानेच्छाऽर्चाऽर्थ-जीच्छील्यादिभ्यः क्तः' (५।२।९२) क्तप्र०→त ।

**[राज्ञां बुद्धः]** 'बुधिं ज्ञाने' (१२६२) बुध् । बुध्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) ध०→द० ।

**[राज्ञामिष्टः]** 'इषत् इच्छायाम्' (१४१९) इष् । इष्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०→ट० ।

**[राज्ञां मतः]** 'मनिंच् ज्ञाने' (१२६३) मन् । मन्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति' (४।२।५५) नलोपः ।

**[राज्ञामर्चितः]** 'अर्च(र्चि)ण् पूजायाम्' (१९५४) अर्च् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । अर्च्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'सेट्क्तयोः' (४।३।८४) णिज्लोपः ।

**[राज्ञां पूजितः]** 'पूजण् पूजायाम्' (१५८६) पूज् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । पूज्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'सेट्क्तयोः' (४।३।८४) णिज्लोपः ।

**[इदमेतेषां यातम्]** 'यांक् प्रापणे' (१०६२) या । यानं = यातम् ।

**[इदमेषां यातम्]** 'यांक् प्रापणे' (१०६२) या । यानं = यातम् ।

**[इदमेषामासितम्]** 'आसिक् उपवेशने' (१११९) आस् । आसनमासितम् ।

**[इदमेषां भुक्तम्]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भोजनं = भुक्तम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । 'क्तेऽनिटश्च-जोः०' (४।१।१११) ज०→ग० ? ('च-जः क-गम्' (२।१।८६) ज०→ग०) । 'अघोषे प्रथमो०' (१।३।५०) ग०→क० ।

**[इदमेषां पीतम्]** पानं = पीतम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त ।

**[राजपूजितः?]** राज्ञा पूजितः ।

**[राजमहितः?]** अर्ह (५६४) - 'मह पूजायाम्' (५६५) मह् । मह्यते । 'ज्ञानेच्छाऽर्चाऽर्थ०' (५।२।९२) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । राज्ञा महितः ।

**[राजसंमतः?]** राज्ञा संमतः ।

**[कलहं स राममहितः कृतवान्?]** रामेण महितः ॥छ॥

## अस्वस्थगुणैः ॥३।१।८७॥

**[अस्वस्थगुणैः]** न स्व 'ष्ठां गतिनिवृत्तौ' (५) ष्ठा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्था । स्वस्मिन् तिष्ठन्तीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र०→अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । न स्वस्थाः

= अस्वस्थाः, अस्वस्थाश्च ते गुणाश्च = अस्वस्थगुणाः, तैः ।

**[पटस्य शौक्ल्यम्]** शुक्ल । शुक्लस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र० (?) ('वर्ण-दृढादिभ्यष्ट्यण् च वा' (७।१।५९) ट्यण्प्र०→य) 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[काकस्य कार्ष्ण्यम्]** कृष्ण । कृष्णस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र० (?) ('वर्ण-दृढादिभ्यष्ट्यण् च वा' (७।१।५९) ट्यण्प्र०→य) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[गुडस्य माधुर्यम्]** मधुर । मधुरस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य(?) । ('वर्ण-दृढादि०' (७।१।५९) ट्यण्प्र०→य) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[प्रक्रियालाघवम्]** लघु । लघोर्भावः । 'य्वृवर्णाल्लघ्वादेः' (७।१।६९) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । प्रक्रियाया लाघवम् ।

**[बुद्धिकौशलम्]** कुशलस्य भावः । 'युवादेरण्' (७।१।६७) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । बुद्धयाः कौशलम् ।

**[करणपाटवम्]** करणस्य पाटवम् ।

**[पुरुषसामर्थ्यम्]** समर्थ । समर्थस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । पुरुषस्य सामर्थ्यम् ।

**[अङ्गसौष्ठवम्]** सुष्ठु । सुष्ठोर्भावः । अङ्गस्य सौष्ठवम् ।

**[हस्तचापलम्]** चपलस्य भावः । 'युवादेरण्' (७।१।६७) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । हस्तस्य चापलम् ।

**[वचनमार्दवम्]** मृदोर्भावः । 'य्वृवर्णाल्लघ्वादेः' (७।१।६९) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । वचनस्य मार्दवम् ।

**[उत्तरपदार्थप्राधान्यम्]** प्रधान । प्रधानस्य भावः । उत्तरपदार्थस्य प्राधान्यम् ।

**[क्रियासातत्यम्]** सं(स)तत । सं(स)ततस्य भावः । 'पतिराजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । क्रियायाः सातत्यम् ।

**[वर्तमानसामीप्यम्]** समीपस्य भावः । 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । वर्तमानस्य सामीप्यम् ।

**[सत्सामीप्यम्]** समीपस्य भावः । 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । सतः = वर्तमानकालस्य सामीप्यम् ।

**[अधिकरणैतावत्यम्]** एतावत् । एतावतो भावः । 'पति-राजान्तगुणाङ्गराजादिभ्यः कर्मणि च' (७।१।६०) ट्यण्प्र० →य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अधिकरणस्य ऐतावत्यम् ।

**[प्रयोगान्यत्वम्]** अन्यस्य भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र० । प्रयोगस्य अन्यत्वम् ।

**[गतताच्छील्यम्]** तस्य शीलं = तच्छीलम् । तच्छीलस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । गतस्य ताच्छील्यम् ।

**[नदीघोषः]** 'घुषृ शब्दे' (४९७) घुष् । घोषणं = घोषः । 'भावाऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । नद्या घोषः ।

**[वचनप्रामाण्यम्]** प्रमाणस्य भावः । वचनस्य प्रामाण्यम् ।

**[शब्दाधिक्यम्]** अधिकस्य भावः । शब्दानामाधिक्यम् ।

**[वाङ्माधुर्यम्]** मधुरस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य (?) ('वर्णदृढादि०' (७।१।५९) ट्यण्प्र०→य) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । वाचो माधुर्यम् ।

एषूदाहरणेषु षष्ठीसमासः कार्यः ।

**[घटवर्णः]** घटस्य वर्णः ।

**[कन्यारूपम्]** कन्याया रूपम् ।

**[कपित्थरसः]** कपित्थस्य रसः ।

**[चन्दनगन्धः]** चन्दनस्य गन्धः ।

**[स्तनस्पर्शः]** स्तनयोः स्पर्शः ।

**[कण्टकस्य तैक्ष्ण्यम्]** तीक्ष्ण । तीक्ष्णस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । अवर्णवर्णस्य (७।४।६८) अलोपः ।

**[वृषलस्य धाष्टर्यम्]** धृष्ट । धृष्टस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आर् । 'अवर्णवर्णस्य' (७।४।६८) अलोपः ।

**[कुसुमसौरभ्यम्]** सुरभस्य भावः । 'पति-राजान्तगुणाङ्ग०' (७।१।६०) ट्यण्प्र०→य(?) ('वर्णदृढादि०' (७।१।५९) ट्यण्प्र०→य) । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ० । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । कुसुमस्य सौरभ्यम् ।

**[चन्दनसौरभम्]** व(चन्)दनस्य सौरभम् ।।छ।।

### सप्तमी शौण्डाद्यैः ।।३।१।८८।।

**[शौण्डाद्यैः]** शो(शौ)ण्ड आद्यो येषां ते = शो(शौ)ण्डाद्याः, तैः ।

**[पानशौण्डः]** शुण्डाया अयम् । 'तस्येदम्' (६।३।१६०) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णवर्णस्य' (७।४।६८) आलोपः । ततो मध्यस्थः समासः कर्त्तव्यः । पाने प्रशक्तः शौण्डः = पानशौण्डः ।

**[अक्षधूर्त्तः]** अक्षेषु प्रशक्तो धूर्त्तः [इव] ।

**[अक्षकितवः]** अक्षेषु प्रशक्तः कितवः [इव] ।

**[शिरःशेखरः]** शिरसि शेखरः ।

**[हस्तकटकः]** हस्ते कटकः ।

**[आपातरमणीयः]** आपाते रमणीयः ।

**[अवसानविरसः]** अवसाने विरसः ।

**[पृथिवीविदितः]** पृथिव्यां विदितः ।

**[पृथिवीप्रणतः]** पृथिव्यां प्रणतः ।

**[अन्तेगुरुः]** अन्ते गुरुः । 'मध्याऽन्ताद् गुरौ' (३।२।२१) अलुक्(प्)समासः । एवमग्रेऽपि ।

**[मध्येगुरुः]** मध्ये गुरुः । 'मध्याऽन्ताद् गुरौ' (३।२।२१) अलुक्(प्)समासः ।।छ।।

**सिंहाद्यैः पूजायाम्** ।।३।१।८९।।

**[सिंहाद्यैः]** सिंह आद्यो येषां ते = सिंहाद्याः, तैः ।

**[समरसिंहः]** समरे सिंह इव ।

**[रणव्याघ्रः]** रणे व्याघ्र इव ।

**[भूमिवासवः]** भूमौ वासव इव ।

**[कलियुधिष्ठिरः]** कलौ युधिष्ठिर इव ।

**काकाद्यैः क्षेपे** ।।३।१।९०।।

**[काकाद्यैः]** काक आद्यो येषां ते = काकाद्याः, तैः ।

**[तीर्थकाकः]** तीर्थे काक इव ।

**[तीर्थध्वाङ्क्षः]** तीर्थे ध्वाङ्क्ष इव ।

**[तीर्थवायसः]** तीर्थे वायस इव ।

**[तीर्थबकः]** तीर्थे बक इव ।

**[तीर्थश्वा]** तीर्थे श्वेव ।

**[तीर्थसारमेयः]** सरमाया अपत्यम् । 'ङ्याप्-त्यूङः' (६।१।७०) एयण्प्र०→एय । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । तीर्थे सारमेय इव ।

**[तीर्थकुक्कुटः]** तीर्थे कुक्कुट इव ।

**[तीर्थशृगालः]** तीर्थे शृगाल इव ।।छ।।

**पात्रेसमितेत्यादयः** ।।३।१।९१।।

**[पात्रेसमितेत्यादयः]** पात्रेसमित(ता) इति आदिर्येषां ते ।

**[पात्रेसमिताः]** पात्र एव समिताः = पात्रेसमिताः, अत एव निर्देशादलुप्समासः ।

**[पात्रेबहुलाः]** पात्र एव बहुलाः ।

**[गेहेशूरः]** गेहे एव शूरः ।

**[गेहेदाही]** 'दहं भस्मीकरणे' (५५२) दह् । दहतीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । दहनं = दाहः । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । दाहोऽस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इन् । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । गेह एव दाही ।

**[गेहेक्ष्वेडी]** क्ष्वेडा(डो)ऽस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अवर्णलोपः । गेहे एव क्ष्वेडी ।

**[गेहेनर्दी]** 'नर्द शब्दे' (३०२) नर्द् । नर्दत(ति) इति । 'ग्रहादिभ्यो णिन्' (५।१।५३) णिन्प्र०→इन् । गेहे एव नर्दी ।

**[गेहेनर्ती]** 'नृतैच् नर्त्तने' (११५२) नृत् । नृत्यत(ति) इत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'लघोरुपान्त्यस्य' (४।३।४) गु० अर् । गेहे एव नर्ती ।

**[गेहेविजिती]** गेहमेव विजितमनेन । 'इष्टादेः' (७।१।१६८) इन्प्र० ।

**[गेहेविचिती]** 'चिंग्ट् चयने' (१२९०) चि, विपूर्व० । विचीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । गेहमेव विचितमनेन । 'इष्टादेः' (७।१।१६८) इन्प्र० ।

**[गेहेव्यालः]** गेहे एव व्यालः ।

**[गेहेपटुः]** गेहे एव पटुः ।

**[गेहेपण्डितः]** गेहे एव पण्डितः ।

**[गेहेप्रगल्भः]** गेहे एव प्रगल्भः ।

**[गोष्ठेशूरः]** गोष्ठे एव शूरः ।

**[गोष्ठेक्ष्वेडी]** गोष्ठे एव क्ष्वेडी ।

**[गोष्ठेनर्दी]** गोष्ठे एव नर्दी ।

**[गोष्ठेविजिती]** गोष्ठमेव विजितमनेन । 'इष्टादेः' (७।१।१६८) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[गोष्ठेव्यालः]** गोष्ठे एव व्यालः ।

**[गोष्ठेपटुः]** गोष्ठे एव पटुः ।

**[गोष्ठेपण्डितः]** गोष्ठे एव पण्डितः ।

**[गोष्ठेप्रगल्भः]** गोष्ठे एव प्रगल्भः ।

**[उदुम्बरमशकः]** उदुम्बरे मशक इव ।

**[उदुम्बरकृमिः]** उदुम्बरे कृमिरिव ।

**[कूपकच्छपः]** कूपे कच्छप इव ।

**[कूपमण्डूकः]** कूपे मण्डूक इव ।

**[अवटकच्छपः]** अवटे कच्छप इव ।

**[अवटमण्डूकः]** अवटे मण्डूक इव ।

**[उदपानमण्डूकः]** उदकस्य पानं यत्र स आहवेऽर्थे 'नाम्न्युत्तरपदस्य च' (३।२।१०७) कलुप् । उदपाने मण्डूक इव ।

**[नगरकाकः]** नगरे काक इव ।

**[नगरवायसः]** नगरे वायस इव ।

**[नगरश्वा]** नगरे श्वेव ।

**[गेहेमेही]** 'मिहं सेचने' (५५१) मिह् । मेहतीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र०→इन् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए । गेहे एव मेही ।

**[पिण्डीशूरः]** पिण्ड्यामेव शूरः ।

**[पितरिशूरः]** पितर्येव शूरः ।

**[मातरिपुरुषः]** मातर्येव पुरुषः ।

**[गर्भेधीरः]** गर्भे एव धीरः ।

**[गर्भेशूरः]** गर्भे एव शूरः ।

**[गर्भेसुहितः]** गर्भे एव सुहितः ।

**[गर्भेतृप्तः]** गर्भे एव तृप्तः ।

**[गर्भेदृप्त]** गर्भे एव दृष्टः (दृप्तः) ।

**[कर्णेटिरिटिरिः]** कर्णे एव टिरिटिरिः ।

**[कर्णेचुरुचुरुः]** कर्णे एव चुरुचुरुः ।

**[कर्णेटिरिटिरा]** कर्णे एव टिरिटिरा ।

**[कर्णेचुरुचुरा]** कर्णे एव चुरुचुरा ।

**[व्रणकृमिः]** व्रणे कृमिरिव ।

**[गृहसर्पः]** गृहे सर्प इव ।

**[गृहकलविङ्कः]** गृहे कलविङ्क इव ।।छ।।

**क्तेन** ।।३।१।९२।।

**[भस्मनिहुतम्]** 'हुंक् दानादनयोः' (११३०) हु । हूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०—>त । भस्मनि हुतमिव = भस्मनिहुतम् ।

**[प्रवाहेमूत्रितम्]** 'मूत्रण् मूत्रणे (?) (प्रस्रवणे)' (१९००) मूत्र् । 'चुरादिभ्यो०' (३।४।१७) णिच्प्र०—>इ । मूत्र्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०—>त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिच्लोपः । प्रवाहे मूत्रितमिव ।

**[उदकेविशीर्णम्]** कॄ (१५२९) - मॄ (१५३०) - 'शॄश् हिंसायाम्' (१५३१) शॄ, विपूर्व० । विशीर्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०—>त । 'ॠ-ल्वादेरेषां तो नोऽप्रः' (४।२।६८) त०—>न० । 'ॠतां क्ङितीर्' (४।४।११६) इर् । 'भ्वादेर्नामिनो०' (२।१।६३) दीर्घः । 'रषृवर्णान्नो ण०' (२।३।६३) न०—>ण० । उदके विशीर्णमिव ।

**[अवतप्तेनकुलस्थितम्]** 'तपं संतापे' (३३३) तप्, अवपूर्व० ।卐 अवतपति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०—>त । स्था-स्थानं = स्थितम् । 'क्लीबे क्तः' (५।३।१२३)क्तप्र०—>त । 'दो-सो-मा-स्थ इः' (४।४।११) इ ।+ नकुलानां स्थितं = नकुलस्थितम् । अवतप्ते नकुलस्थितमिव ।।छ।।

**तत्राहोरात्रांशम्** ।।३।१।९३।।

**[तत्राहोरात्रांशम्]** अहश्च रात्रिश्च = अहोरात्रम् । 'ऋक्सामर्ग्यजुष-धेन्वनडुह-वाङ्मनसा-ऽहोरात्र-रात्रिंदिव-नक्तंदिवा-ऽहर्दिवोर्वष्ठीव-पदष्ठीवा-ऽक्षिभ्रुव-दारगवम्' (७।३।९७) अत्समासान्तोऽहोरात्रनिपातः । अहोरात्रस्यांऽशाः = अहोरात्रांशाः,

P 卐 अवतप्यते स्म ।  P + नकुलस्य स्थितम् ।

तत्र च अहोरात्रांशाश्च = तत्राहोरात्रांशम् ।

**[तत्रकृतम्]** क्रियते स्म । तत्र कृतम् ।

**[पूर्वाह्णकृतम्]** पूर्व-अहन् । पूर्वमह्नः । 'सर्वां-ऽश-संख्या-ऽव्ययात्' (७।३।११८) अट्समासान्तोऽह्ननिपातः । 'अतोऽह्नस्य' (२।३।७३) णत्वम् । 卐 पूर्वाह्णे कृतम् ।

**[अपराह्णकृतम्]** अपरमह्नः, अपराह्णे कृतम् ।

**[पूर्वरात्रकृतम्]** पूर्वो(र्वं) रात्रेः । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । + पूर्वरात्रे कृतम् ।

**[अपररात्रकृतम्]** अपरो(रं) रात्रेः । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । अपररात्रे कृतम् ।

**[तात्रकृतिः]** तत्रकृतस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र० → इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः ।

**[अन्यजन्मकृतं कर्म]** अन्यजन्मना कृतम् ।

**[शुक्लपक्षे कृतम्]** शुक्लश्चासौ पक्षश्च = शुक्लपक्षस्तस्मिन् ।

**[अहनि भुक्तम्]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिटश्च-जोः०' (४।१।१११) ज०→ग० (?) ('च-जः क-गम्' (२।१।८६) ज०→ग०) । 'अघोषे प्रथमोऽशिटः' (१।३।५०) ग०→क० ।

**[एतत्तु ते दिवा नृत्तं, रात्रौ नृत्तं तु द्रक्ष्यसि]** 'नृतैच् नर्तने' (११५२) नृत् । नर्त्तनम् । 'क्लीबे क्तः' (५।३।१२३) क्तप्र०→त । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् । 'समानादमोऽतः' (१।४।४६) अलोपः । 'दृशूं प्रेक्षणे' (४९५) दृश् । भविष्यन्ती स्यति । 'अः सृजि-दृशोऽकिति' (४।४।१११) अकारागमः । 'इवर्णादे०' (१।२।२१) रत् । 'यज-सृज-मृज-राज०' (२।१।८७) श०→ष० । 'ष-ढोः कस्सि' (२।१।६२) ष०→क० । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[कथं रात्रिवृत्तं, सन्ध्यागर्जितमिति]** रात्रौ वृत्तम् । सन्ध्यायां गर्जितम् । बहुलाधिकारात् समासः ।

**[तत्र भोक्ता]** भुनक्तीति । 'णक-तृचौ' (५।१।४८) तृच्प्र०→तृ । प्रथमा सि । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । 'ऋदुशनस्-पुरुदंशोऽनेहसश्च सेर्डाः' (१।४।८४) डा । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[पूर्वाह्णे भोक्ता]** भोक्ता पूर्ववत् ।।छ।।

**नाम्नि** ।।३।१।९४।।

**[अरण्येतिलकाः]** तिलानां तुल्याः । 'तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः' (७।१।१०८) कप्र० । अरण्ये तिलकाः । 'अद् व्यञ्जनात् सप्तम्या बहुलम्' (३।२।१८) इत्यलुप्समासः ।

**[स्तूपेशाणः]** स्तूपे २ शाणो देयः । 'प्राक्कारस्य व्यञ्जने' (३।२।१९) अलुप्समासः ।

**[मुकुटेकार्षापणः]** मुकुटे २ कार्षापणो देयः । 'प्राक्कारस्य व्यञ्जने' (३।२।१९) अलुप्समासः ।

**[हलेद्विपदिका]** द्वि-पाद । द्वौ द्वौ पादौ ददाति । 'संख्यादेः पादादिभ्यो दान-दण्डे चाकल् लुक् च' (७।२।१५२) अकल् प्र० - पाद् । 'य-स्वरे पादः पदणि-क्य-घुटि' (२।१।१०२) पद् । 'आत्' (२।४।१८) आप्प्र०→आ । 'अस्याऽयत्-तत्-क्षिपकादीनाम्' (२।४।१११) इ । ततः मध्यस्थः समासः ।।छ।।

---

P 卐 पूर्वाह्णे क्रियते स्म ।     P + पूर्वरात्रे क्रियते स्म ।

**कृद्येनावश्यके** ॥३।१।९५॥

**[कृद्येन]** कृच्चासौ यश्च = कृद्यस्तेन, कृतो यः = कृद्यस्तेन वा ।

**[मासदेयम्]** 'डुदांग्क् दाने' (११३८) दा । दीयते = देयम् । 'य एच्चातः' (५।१।२८) यप्र० - आ०→ए० । मासेऽवश्यं देयम् ।

**[संवत्सरदेयम्]** संवत्सरेऽवश्यं देयम् ।

**[पूर्वाह्णेगेयम्]** कैं (३६) - 'गैं शब्दे' (३७) गै । 'आत् सन्ध्यक्षरस्य' (४।२।१) गा । गीयते = गेयम् । 'य एच्चातः' (५।१।२८) यप्र० - आ०→ए० । पूर्वाह्णेऽवश्यं गेयम् ।

**[प्रातरध्येयम्]** अधि 'इंङ्क् अध्ययने' (११०४) इ । अधीयते । 'य एच्चातः' (५।१।२८) यप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । प्रातरमवश्यमध्येयम् ।

**[ग्रामदेयम्]** ग्रामेऽवश्यं देयम् ।

**[नगरदेयम्]** नगरेऽवश्यं देयम् ।

**[मासे पित्र्यम्]** पितृ । पितुरागतम् । 'पितुर्यो वा' (६।३।१५१) यप्र० । पिता देवताऽस्य । 'वाय्वृतु-पित्रुषसो यः' (६।२।१०९) यप्र० । पितरि साधुः । 'तत्र साधौ' (७।१।१५) यप्र० । 'ऋतो रस्तद्धिते' (१।२।२६) र० ।

**[मासे स्तुत्यः]** स्तु (३।१।१) सूत्रवत् । स्तूयते । 'दृ-वृग्-स्तु-जुषेति-शासः' (५।१।४०) क्यप्प्र०→य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[मासे पाक्यम्]** 'डुपचींष् पाके' (८९२) पच् । पच्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०→य । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । 'क्तेऽनिटश्च-जोः क-गौ घिति (४।१।१११) च०→क० ।

**[मासे दातव्या भिक्षा]** 'डुदांग्क् दाने' (११३८) दा । दीयते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'आत्' (२।४।१८) आप्प्र०→आ ।

**संवत्सरकर्तव्यमिति** तु बहुलाधिकारात् ।

'डुकृंग् करणे (८८८) कृ । क्रियते । 'तव्या-ऽनीयौ' (५।१।२७) तव्यप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् ॥छ॥

**विशेषणं विशेष्येणैकार्थं कर्मधारयश्च** ॥३।१।९६॥

**[विशेषणम्]** 'शिष्लृंप् विशेषणे' (१४९२) शिष्, विपूर्व० । विशिष्यतेऽनेनेति विशेषणम् । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए ।

**[विशेष्येणैकार्थम्]** विशिष्यते । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७) घ्यण्प्र०→य । 'लघोरुपान्त्यस्य' (४।३।४) गु० ए, तेन । एकोऽर्थो यस्य तद् एकार्थम् । एकार्थस्य भावः ।

**[कर्मधारयः]** कर्मन् 'धृंग् धारणे' (८८७) धृ । धरन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र०→इ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । धारयतीति । 'साहि-साति-वेद्युदेजि-धारि-पारि-चेतेरनुपसर्गात्' (५।१।५९) शप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् । कर्मणो धारयः = कर्मधारयः ।

**[नीलोत्पलम्]** नीलं च तदुत्पलं च । एकस्मिन्नर्थे इति कोऽर्थः ? नीलं नीलत्वे उत्पलमुत्पलत्वे एकस्मिन् नीलोत्पले ।

**[कृष्णतिलाः]** कृष्णाश्च ते तिलाश्च ।

**[पुङ्गवः]** पुमांश्चासौ गौश्च = पुङ्गवः । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः ।卐 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

**[मेषिकगवी]** मेषिका चासौ गौश्च । 'पुम्वत् कर्मधारये' (३।२।५७) पुम्वत् । 'निमित्ताभावे०' (न्या० स० १/२९) इकारो निवर्त्तते । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'जातेरयान्त०' (२।४।५४) ङी ।

तक्षकः सर्पः, लोहितस्तक्षक इत्यत्र यथा नीलोत्पलमित्यत्र नीलशब्देन पीतादयो व्यवच्छिद्यन्ते, यथा उत्पलं किं विशिष्टम् ? नीलम्, तथा नीलं किं विशिष्टम् ? उत्पलम्, द्रव्यान्तराद् व्यवच्छेदः, तथा तत्र तद्यथा सर्प इत्युक्ते सर्पः कः (?) तक्षकः, सर्पान्तराद् व्यवच्छेदः, तथा तक्षकः कः ? इति न भवति यतः-

**[आम्रवृक्षः]** आम्रश्चासौ वृक्षश्च ।

**[शिंशपावृक्षः]** शिंशपा चासौ वृक्षश्च ।

**[अस्तपर्वतः]** अस्तश्चासौ पर्वतश्च, अस्ताद्रिरस्तः कथ्यते ।

**[तक्षकाहिः]** तक्षकश्चासावहिश्च, तक्षकशब्देन तक्षकसामर्थ्यं वाच्यम्, तस्माद् व्यवच्छेद(:) क्रियते अहिशब्देन ।

**[शेषाहिः]** शेषश्चासावहिश्च ।

**[अस्तपर्वतः]** अस्तस्य पर्वतः ।

**[उदयपर्वतः]** उदयस्य पर्वतः ।

यत उक्तमभिधानचिन्तामणौ-ग्रावा पर्वतभूध्रभूधरधराहार्या नगोऽथोदयः । पूर्वाद्रिः चरमाद्रिरस्तः उदगद्रिस्त्वद्रिराड् मेनका । प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरुः ।

**[खञ्जकुण्टः कुण्टखञ्जः]** खञ्जश्चासौ कुण्टश्च ।

**[शुक्लकृष्णः, कृष्णशुक्लः]** शुक्लश्चासौ कृष्णश्च ।

**[रोहितपाण्डुः, पाण्डुरोहितः]** रोहितश्चासौ पाण्डुश्च ।

**[हरितबभ्रुः, बभ्रुहरितः]** हरितश्चासौ बभ्रुश्च ।

**[पूर्वोत्तरा]** पूर्वा चासावुत्तरा च ।

**[उत्तरपूर्वा]** उत्तरा चासौ पूर्वा च ।

**[दक्षिणपूर्वा]** दक्षिणा चासौ पूर्वा च ।

**[पूर्वदक्षिणा विदिक्]** पूर्वा चासौ दक्षिणा च । सर्वत्र 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवद्भावः ।

**[पाचकपाठकः, पाठकपाचकः पुरुषः]** पाचकश्चासौ पाठकश्च ।

**[कृष्णसारङ्गः]** कृष्णश्चासौ सारङ्गश्च, समुदायवाचित्वादित्यर्थः, कृष्णादिशब्दानामवयववाचित्वेन ।

**[रामो जामदग्न्यः]** जमदग्नेरपत्यम् । 'गगादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः ।

---

卐 श० म० न्या० - 'ओदौतोऽवाव्' (१।२।२४) अव् ।

**[अर्जुनः कार्तवीर्यः]** कृतवीर्यस्याऽपत्यम् ।

**[दीर्घश्चारायणः]** चा(च)रस्याऽपत्यं वृद्धं = चारायणः । 'नडादिभ्य आयनण्' (६।१।५३) आयनण्प्र०→आयन । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलुक् ।

**[कृष्णसर्पः]** कृष्णश्चासौ सर्पश्च ।

**[लोहितशालिः]** लोहितश्चासौ शालिश्च ।

**[गौरखरः]** गौरश्चासौ खरश्च ।

**[लोहिताहिः]** लोहितश्चासावहिश्च ।

**[नरसिंहः]** नरश्चासौ सिंहश्च ।

**[पुरुषमृगः]** पुरुषश्चासौ मृगश्च ।

**[बकटिट्टिभः]** बकश्चासौ टिट्टिभश्च ।

**[नकुलसर्पः]** नकुलश्चासौ सर्पश्च ।

**[पक्षिमार्जारः]** पक्षी चासौ मार्जारश्च ।

**[कुक्कुटसर्पः]** कुक्कुटश्चासौ सर्पश्च ।

भूयोऽवयवाभिधानश्च प्राधान्याद् विशेष्यत्वमितरस्य तु विशेषणत्वम् ॥छ॥

**पूर्वकालैक-सर्व-जरत्-पुराण-नव-केवलम्** ॥३।१।९७॥

**[पूर्वकालैकसर्वजरत्पुराणनवकेवलम्]** पूर्वः कालो यस्य सः पूर्वकालः, पूर्वकालश्च एकश्च सर्वश्च जरंश्च पुराणश्च नवश्च केवलश्च = पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ।

**[स्नातानुलिप्तः]** 'ष्णांक् शौचे' (१०६४) ष्णा । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) स्ना । 'निमित्ताभावे०' (न्या. सं० वक्ष० १/२९/सूत्र) स्ना । स्नाति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । अनु 'लिपींत् उपदेहे' (१३२४) लिप् । अनुलिप्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । पूर्वं स्नातः पश्चादनुलिप्तः ।

**[लिप्तवासितः]** पूर्वं लिप्तः पश्चाद् वासितः ।

**[कृष्टमतीकृता भूमिः]** अमता मता कृता = मतीकृता । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या-ऽनव्ययस्य' (४।३।१११) ई । पूर्वं कृष्टा पश्चान्मतीकृता ।

**[छिन्नप्ररूढो वृक्षः]** पूर्वं छिन्नः पश्चात् प्ररूढः ।

**[एकशाटी]** शाट 'गौरादिभ्यो मुख्यान्ङीः' (२।४।१९) ङी । एका शाटी । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[एकर्षयः]** एके च ते ऋषयश्च ।

**[एकचौरः]** एकश्चासौ चौरश्च ।

**[एकधनुर्धरः]** एकश्चासौ धनुर्धरश्च ।

**[सर्वशैलाः]** सर्वे च ते शैलाश्च ।

**[सर्वरात्रः]** सर्वा चासौ रात्रिश्च । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । 'अवर्णेवर्णस्य'

(७।४।६८) इलोपः । सर्वेऽपि रात्र्यवयवा गृह्यन्त इत्यर्थः ।

**[सर्वान्नम्]** सर्वं च तदन्नं च ।

**[सर्वशुक्लः]** सर्वश्चासौ शुक्लश्च ।

**[जरद्गवः]** जरंश्चासौ गौश्च । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

**[जरद्राजः]** जरंश्चासौ राजा च । 'राजन्-सखेः' (७।३।१०६) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः ।

**[जरद्वलिनः]** जरंश्चासौ वलिनश्च । 'नोऽङ्गादेः' (७।२।२९) नप्र० ।

**[पुराणवैयाकरणः]** व्याकरणं वेत्त्यधीते वा । 'तद्वेत्त्यधीते' (६।२।११७) अण्प्र०→अ । 'लोकात्' (१।१।३) "व्" पाठउ विश्लेषियइ । 'य्वः पदान्तात् प्रागैदौत्' (७।४।५) ऐ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । पुराणश्चासौ वैयाकरणश्च ।

**[नवोदकम्]** नवं च तदुदकं च ।

**[नवोक्तिः]** नवा चासावुक्तिश्च ।

**[केवलजरत्]** केवलं च तद् जरच्च ।

**[केवलपुराणम्]** केवलं च तत् पुराणं च ।

**[स्नात्वाऽनुलिप्तः]** स्ना । स्नानं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा ।।छ।।

**दिगधिकं संज्ञा-तद्धितोत्तरपदे ।।३।१।९८।।**

**[दिगधिकम्]** दिक् च卐 अधिकं च = दिगधिकम् ।

**[संज्ञातद्धितोत्तरपदे]** संज्ञा च तद्धितश्च उत्तरपदं च = संज्ञातद्धितोत्तरपदम्, तस्मिन् ।

**[दक्षिणकोशलाः]** दक्षिणाः कोशलाः = दक्षिणकोशलाः ।

**[उत्तरकोशलाः]** उत्तराः कोशलाः ।

**[दक्षिणपञ्चालाः]** दक्षिणाः पञ्चालाः ।

**[पूर्वेषुकामशमी]** 'कमूङ् कान्तौ' (७८९) कम् । 'कमेर्णिङ्' (३।४।२) णिङ्प्र०→इ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः । कामयते । 'शीलि-कामि-भक्ष्याचरीक्षि-क्षमो णः' (५।१।७३) णप्र०→अ । 'णेरनिटि' (४।३।८३) णिङ्लोपः । इषूणां कामस्तं शाम्यतीति । 'कर्मणोऽण्' (५।१।७२) अण्प्र०→अ । 'अणञेयेकण्-नञ-स्नञ्-टिताम्' (२।४।२०) ङी । पूर्वा चासौ इषुकामशमी च । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

**[अपरेषुकामशमी]** अपरा चासौ इषुकामशमी च । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

**[पूर्वकृष्णमृत्तिकाः]** मृद् । मृदेव = मृत्तिका । 'मृदस्तिकः' (७।२।१७१) तिकप्र० । 'आत्' (२।४।१८) आप्प्र० →आ । पूर्वा चासौ कृष्णमृत्तिका च । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

**[अपरकृष्णमृत्तिकाः]** अपरा चासौ कृष्णमृत्तिका च । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

विग्रहवाक्यं समा(सा)रंभकं वाक्यमित्यर्थः ।

---

P 卐 अधिकश्च ।

**[दाक्षिणशालः]** दक्षिणस्यां शालायां भवः । 'दिक्पूर्वादनाम्नः' (६।३।२३) णप्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[पौर्वशालः]** पूर्वस्यां शालायां भवः । 'दिक्पूर्वादनाम्नः' (६।३।२३) णप्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[आपरशालः]** अपरस्यां शालायां भवः । 'दिक्पूर्वादनाम्नः (६।३।२३) णप्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः ।

**[अधिकषाष्टिकः]** अधिकया षष्ट्या क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । अधिकां षष्टिं भूतो भावी वा । 'तं भावि-भूते' (६।४।१०६) इकण्प्र० । 'मान-संवत्सरस्याशाण-कुलिजस्याऽनाम्नि' (७।४।१९) उत्तरपदवृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) ईलोपः ।

**[अधिकसाप्ततिकः]** अधिकया सप्तत्या क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । अधिकां सप्ततिं भूतो भावी वा । 'तं भावि-भूते' (६।४।१०६) इकण्प्र० । 'मान-संवत्सरस्याशाण-कुलिजस्याऽनाम्नि' (७।४।१९) उत्तरपदवृद्धिः ।

**[दक्षिणगवधनः]** दक्षिणा गौर्धनमस्य । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[उत्तरगवधनः]** उत्तरा गौर्धनमस्य । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[पूर्वगवीप्रियः]** पूर्वगवी प्रियाऽस्य सः ।

**[अपरगवीप्रियः]** अपरगवी प्रियाऽस्य सः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[अधिकगवप्रियः]** अधिका गौः प्रियो(या)ऽस्य । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

**[अधिकगवीप्रियः]** अधिकगवी प्रियाऽस्य सः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[दक्षिणगुः]** दक्षिणगुरित्यत्र अल्पाश्रितमन्तरङ्गं, बह्वाश्रितं बहिरङ्गं अस्येति सन्तीति बहुपदानि ।।छ।।

**संख्या समाहारे च द्विगुश्चानाम्न्ययम् ।।३।१।९९।।**

**[समाहारे]** समाहरणं = समाहारस्तस्मिन् ।

**[अनाम्नि]** न नामन् = अनाम, तस्मिन् ।

**[पञ्चाम्राः]** पञ्च च ते आम्राश्च ।

**[दशाम्राः]** दश च ते आम्राश्च ।

**[पञ्चर्षयः]** पञ्च च ते ऋषयश्च ।

**[सप्तर्षयः]** सप्त च ते ऋषयश्च ।

**[दशार्हाः]** 'अर्ह पूजायाम्' (५६४) अर्ह् । अर्हन्तीत्यर्हाः । 'अच्' (५।१।४९) अच्प्र०→अ । दश च ते अर्हाश्च ।

**[पञ्चवटाः]** पञ्च च ते वटाश्च ।

**[दशवटाः]** दश च ते वटाश्च ।

**[पुष्पितौ द्वौ पञ्चाम्रौ]** पञ्च च ते आम्राश्च = पञ्चाम्रः, तौ ।

**[उदितास्त्रयः सप्तर्षयः]** सप्त च ते ऋषयश्च ।

**[द्वैमातुरः]** द्वयोर्मात्रोरपत्यम् । 'संख्या-सं-भद्रान्मातुर्मातुर्च' (६।१।६६) अण्प्र० - मातुर् च । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।

**[पाञ्चनापितिः]** पञ्चनापितस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०⟶इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । अत्राऽपत्ये विहितः ततो नानयोर्लुप् ।

**[पञ्चकपाल ओदनः]** पञ्चसु कपालेषु संस्कृतः । 'संस्कृते भक्ष्ये' (६।२।१४०) अण्प्र० । 'द्विगोरनपत्ये य-स्वराऽऽदेर्लुबद्विः' (६।१।२४) अण्लोपः ।

**[पञ्चजनीनः]** पञ्चभ्यो जनेभ्यो हितः । 'पञ्च-सर्व-विश्वाज्जनात् कर्मधारये' (७।१।४१) ईनप्र० । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । अत्र प्रत्ययविधानसामर्थ्यान्नलुक् ।

**[अध्यर्द्धकंसः]** अध्यर्द्धेन कंसेन क्रीतः । 'कंसा-ऽर्धात्' (६।४।१३५) इकट्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकट्लोपः ।

**[अध्यर्द्धशूर्पः]** अधिकमर्द्धं यस्याऽसौ, अध्यर्द्धेन शूर्पेण क्रीतः ।

**[अर्द्धतृतीयशूर्पः]** अर्द्धतृतीयैः शूर्पैः क्रीतः । 'मूल्यैः क्रीते' (६।४।१५०) इकण्प्र० । 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इकण्लोपः ।

**[पञ्चगवधनः]** पञ्च गावो धनमस्य । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । अव् ।

**[पञ्चनावप्रियः]** पञ्च नावो प्रिया यस्य । 'नावः' (७।३।१०४) अट्समासान्तः । 'ओदौतोऽवाव्' (१।२।२४) आव् । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[द्व्यह्नजातः]** द्वे अहनी जातस्य । सर्वां-ऽश-संख्या-ऽव्ययात् (७।३।११८) अट्समासान्तोऽह्न आदेशश्च ।

**[पञ्चपूली]** पञ्चानां पूलानां समाहारः । 'द्विगोः समाहारात्' (२।४।२२) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[दशपूली]** दशानां पूलानां समाहारः । 'द्विगोः समाहारात्' (२।४।२२) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।

**[पञ्चराजी]** पञ्चानां राज्ञां समाहारः ।

**[दशराजी]** दशानां राज्ञां समाहारः । 'राजन्-सखेः' (७।३।१०६) अट्समासान्तः (?) ('द्विगोरन्नह्नोऽट्' (७।३।९९) अट्समासान्तः) । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः । 'द्विगोः समाहारात्' (२।४।२२) ङी ।

**[पञ्चकुमारि]** पञ्चानां कुमारीणां समाहारः । 'क्लीबे' (२।४।९७) ह्रस्वत्वम् ।

**[दशकुमारि]** दशानां कुमारीणां समाहारः । 'क्लीबे' (२।४।९७) ह्रस्वत्वम् ।

**[अष्टौ प्रवचनमातरः]** अष्टन् । जस् । 'वाष्टन आः स्यादौ' (१।४।५२) आ । 'अष्ट औ जस्-शसोः' (१।४।५३) औ । प्रवचनस्य मातरः = प्रवचनमातरः ।

**[एकापूपी]** एकानामपूपानां समाहारः । 'द्विगोः समाहारात्' (२।४।२२) ङी ।

**[पाञ्चर्षम्]** पञ्च च ते ऋषयश्च = पचर्षयः । पञ्चर्षीणामिदम् । 'तस्येदम्' (६।३।१६०) अण्प्र०⟶अ । 'वृद्धिः

स्वरेष्वादे०' (७।४।१) वृद्धिः ।

**[दाशार्हम्]** दशार्हाणामिदम् । 'तस्येदम्' (६।३।१६०) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।।छ।।

**निन्द्यं कुत्सनैरपापाद्यैः ।।३।१।१००।।**

**[कुत्सनैरपापाद्यैः]** कुत्सितैरेभिरिति कुत्सनानि, तैः । पाप आद्यो येषां तानि = पापाद्यानि, न पापाद्यानि = अपापाद्यानि, तैः ।

**[वैयाकरणखसूची]** व्याकरणं वेत्त्यधीते वा = वैयाकरणः । 'तद्वेत्त्यधीते' (६।२।११७) अण्प्र० । 'य्वः पदान्तात् प्रागैदौत्' (७।४।५) वै । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'सूचण् पैशून्ये' (१८५४) सूच । खं सूचयतीत्येवंशीलः । 'अजातेः शीले' (५।१।१५४) णिन्प्र० । वैयाकरणश्चासौ खसूची च = वैयाकरणखसूची ।

**[याज्ञिककितवः]** यज्ञ । यज्ञं वेत्तीति । 'याज्ञिकौक्थिक-लौकायितिकम्' (६।२।१२२) याज्ञिकनिपातः । याज्ञिकश्चासौ कितवश्च ।

**[मीमांसकदुर्दुरूढः]** मीमांसा । मीमांसामधीते । 'पद-क्रम-शिक्षा-मीमांसा-साम्नोऽकः' (६।२।१२६) अकप्र० । 'अवर्णेवर्णस्य' (७।४।६८) आलोपः । मीमांसकश्चासौ दुर्दुरूढश्च, नास्तिक इत्यर्थः ।

**[क्षत्रियभीरुः]** क्षत्रियश्चासौ भीरुश्च ।

**[भिक्षुविटः]** भिक्षुश्चासौ विटश्च ।

**[मुनिखेटः]** मुनिश्चासौ खेटश्च ।

**[ब्राह्मणचेलः]** ब्राह्मणश्चासौ चेलश्च ।

**[ब्राह्मणब्रुवः]** 'ब्रूंग्क् व्यक्तायां वाचि' (११२५) ब्रू । ब्रूते । 'ब्रुवः' (५।१।५१) अच्प्र०→अ । 'संयोगात्' (२।१।५२) उव् । ब्राह्मणश्चासौ ब्रुवश्च ।

**[राक्षसहतकः]** राक्षसश्चासौ हतकश्च ।

**[ब्राह्मणजाल्मः]** ब्राह्मणश्चासौ जाल्मश्च ।

**[तापसापस(श)दः]** तापसश्चासावपशदश्च ।

卐 **[काण्डीरकाण्डस्पृष्टः]** काण्डीरश्चासौ काण्डस्पृष्टश्च ।

\+ **[ग्राम्यधूर्त्तः]** ग्राम्यश्चासौ धूर्त्तश्च ।

**[मुनिधूर्त्तः]** मुनिश्चासौ धूर्त्तश्च ।

**[कविचौरः]** कविश्चासौ चौरश्च ।

**[आरक्षितस्करः]** आ 'रक्षि(क्ष) पालने' (५६७) रक्ष् । रक्षत(ति) इति । 'ग्रहादिभ्यो णिन्' (५।१।५३) णिन्प्र० इन् । आरक्षी चासौ तस्करश्च ।

**[पाखण्डिचाण्डालः]** पाखण्डं विद्यते यस्य सः । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । पाखण्डी चासौ चाण्डालश्च ।

---

P 卐 कुत्स्यते एभिरिति ।

卐卐 बृहद्वृत्तौ - काण्डीरकाण्डपृष्ठः । + बृहद्वृत्तौ - ग्राम्यधृष्टः ।

**[चौरवैयाकरणः]** चौरश्चासौ वैयाकरणश्च ।

**[कुत्सितो ब्राह्मणः]** ब्राह्मणकुत्सित इत्यपि न, पापादिपाठत् ।

**[पापवैयाकरणः]** वैयाकरणश्चासौ पापश्च । 'लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम्' (३।१।१६०) पापपूर्वनिपातः ।

**[अणकवैयाकरणः]** वैयाकरणश्चासावणकश्च । 'लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम्' (३।१।१६०) अणकपूर्वनिपातः ।

**[पापकुलालः]** पापश्चासौ कुलालश्च ।

**[हतविधिः]** हत[क] श्चासौ विधिश्च, प्रथमा सि ।

**[दग्धदैवम्]** दग्धश्चासौ दैवश्च (?) (दग्धं च तद् दैवं च) ।

**[दुष्टामात्यः]** दुष्टश्चासावमात्यश्च ।

**[क्षुद्रतापसः]** क्षुद्रश्चासौ तापसश्च ।।छ।।

**उपमानं सामान्यैः** ।।३।१।१०१।।

**[उपमानम्]** उपमीयतेऽनेनेत्युपमानम् ।

**[सामान्यैः]** समानस्य भावः कर्म वा = सामान्यम् । 'पतिराजान्त०' (७।१।६०) ट्यण्प्र०⟶य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णे०' (७।४।६८) अलोपः, तैः ।

**[शस्त्रीश्यामा]** शस्त्री इव = शस्त्री, शस्त्री चासौ श्यामा च ।

**[न्यग्रोधपरिमण्डला]** न्यग्रोध इव = न्यग्रोधः । न्यग्रोधश्चासौ परिमण्डला च ।

**[शरकाण्डगौरी]** शरकाण्डमिव = शरकाण्डम्, शरकाण्डं च तद् गौरी च । गौर । 'गौरादिभ्यो०' (२।४।१९) ङी ।

**[शुकहरिणी]** हरित । 'श्येतैत-हरित-भरत-रोहिताद् वर्णात् तो नश्च' (२।४।३६) ङी - तस्य न० । 'रषृवर्णान्नो ण०' (२।३।६३) न०⟶ण० । शुक 'जातेरयान्त०' (२।४।५४) ङी ।卐 शुकी चासौ हरिणी च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कुमुदश्येनी]** कुमुदवत् = कुमुदम्, कुमुदं चासौ श्येनी च ।

**[तडित्पिशङ्गी]** तडिदिव = तडित्, तडित् चासौ पिशङ्गी च ।

**[तित्तिरिकल्माषी]** तित्तिरिरिव = तित्तिरिः, तित्तिरिश्चासौ कल्माषी च ।

**[कुम्भकपाललोहिनी]** कुम्भस्य कपालं = कुम्भकपालम्, 卐卐कुम्भकपालवत् लोहिनी ।

**[मृगचपला]** मृगीव = मृगी, मृगी चासौ चपला च = मृगचपला । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[हंसगद्गदा]** हंस 'जातेरयान्त०' (२।४।५४) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोप । हंसीव = हंसी, हंसी चासौ गद्गदा च ।

---

卐 श० म० न्यासानुसन्धाने - शुकः चासौ हरिणी च ।

卐 श० म० न्यासानुसन्धाने - कुम्भकपालश्चासौ लोहिनी च ।

**[काकवन्ध्या]** काक 'जातेरयान्त०' (२।४।५४) ङी । काकीव = काकी, काकी चासौ वन्ध्या च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[देवदत्ता श्यामा]** देवदत्ता प्रथमा सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[अग्निर्माणवकः]** अग्निरिव = अग्निः, प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । मनोरपत्यं मूढं कुत्सितम् । 'ङसोऽपत्ये' (६।१।२८) इत्यण् । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । 'माणवः कुत्सायाम्' (६।१।९५) न०→ण० । माणव एव = माणवकः । 'यावादिभ्यः कः' (७।३।१५) कप्र० ।

**[गौर्वाहीकः]** वहतीति वाहीकः । 'सृणीका-स्तीक-प्रतीक-पूतीक-समीक-वाहीक-वाह्लीक-वल्मीक-कल्मलीक-तिन्तिडीक-कङ्कणीक-किङ्किणीक-पुण्डरीक-चञ्चरीक-फर्फरीक-झर्झरीक-घर्घरीकाऽऽदयः' (उणा० ५०) किदीकप्र० वाहीकनिपातः ॥छ॥

**उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥३।१।१०२॥**

**[उपमेयम्]** उप 'मांक् माने' (१०७३) मा । उपमीयते । 'य एच्चातः' (५।१।२८) यप्र० - आ०→ए० । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[व्याघ्राद्यैः]** व्याघ्र आद्यो येषां तानि, तैः ।

**[साम्यानुक्तौ]** समस्य भावः = साम्यम्, न उक्तिरनुक्तिः, साम्यस्य अनुक्तिः = साम्यानुक्तिः, तस्याम् ।

**[पुरुषव्याघ्रः]** व्याघ्र इव = व्याघ्रः, पुरुषश्चासौ व्याघ्रश्च = पुरुषव्याघ्रः ।

**[पुरुषसिंहः]** सिंह इव = सिंहः, पुरुषश्चासौ सिंहश्च ।

**[पुरुषवृषभः]** वृषभ इव = वृषभः, पुरुषश्चासौ वृषभश्च ।

**[वृषभसिंह]** सिंह इव = सिंहः, वृषभश्चासौ सिंहश्च ।

**[राजव्याघ्री]** राजन् 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङी । 'ईङौ वा' (२।१।१०९) अलोपः । 'तवर्गस्य श्चवर्ग०' (१।३।६०) न०→ञ० । राज्ञी चासौ व्याघ्री च ।

**[श्वसिंही]** श्वन् 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' (२।४।१) ङी । 'श्वन्-युवन्-मघोनो ङीस्याद्यघुट्स्वरे व उः' (२।१।१०६) व०→उ० । शुनी चासौ सिंही च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[पुरुषव्याघ्रः शूरः]** राजवत्पुरुषः ।

**[वाग्वज्रः]** वाग् वज्र इव ।

**[मुखपद्मम्]** मुखं पद्ममिव ।

**[पाणिपल्लवम्]** पाणी पल्लवाविव ।

**[करकिसलयम्]** करः किसलयमिव ।

**[वदनेन्दुः]** वदनमिन्दुरिव ।

**[पार्थिवचन्द्रः]** पार्थिवश्चन्द्र इव ।

**[वानरश्वा]** वानरः श्वेव ।

**[कुचकुम्भः]** कुचौ कुम्भेव(भाविव) ।

**[स्तनकलशः]** स्तनौ कलशाविव ।।छ।।

**पूर्वा-ऽपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीरम्** ।।३।१।१०३।।

**[पूर्वाऽपरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम्]** पूर्वश्च अपरश्च प्रथमश्च चरमश्च जघन्यश्च समानश्च मध्यश्च मध्यमश्च वीरश्च = पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ।

**[पूर्वपुरुषः]** पूर्वश्चासौ पुरुषश्च ।

**[अपरपुरुषः]** अपरश्चासौ पुरुषश्च ।

**[प्रथमपुरुषः]** प्रथमश्चासौ पुरुषश्च ।

**[चरमपुरुषः]** चरमश्चासौ पुरुषश्च ।

**[जघन्यपुरुषः]** जघन्यश्चासौ पुरुषश्च ।

**[समानपुरुषः]** समानश्चासौ पुरुषश्च ।

**[मध्यपुरुषः]** मध्यश्चासौ पुरुषश्च ।

**[मध्यमपुरुषः]** मध्यमश्चासौ पुरुषश्च ।

**[वीरपुरुषः]** वीरश्चासौ पुरुषश्च ।

**[पूर्वजरन्]** पूर्वश्चासौ जरंश्च ।

**[वीरपूर्वः]** वीरश्चासौ पूर्वश्च ।

**[पूर्वपटुः]** पूर्वश्चासौ पटुश्च ।

**[एकवीरः]** एकश्चासौ वीरश्च ।।छ।।

**श्रेण्यादि कृताद्यैश्च्व्यर्थे** ।।३।१।१०४।।

**[श्रेण्यादि]** श्रेणिरादिर्यस्य तत् । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[कृताद्यैः]** कृत आद्यो येषां ते = कृताद्यास्तैः ।

**[च्व्यर्थे]** च्वेरर्थश्च्व्यर्थस्तस्मिन् ।

**[श्रेणिकृताः पुरुषाः]** अश्रेणयः श्रेणयः कृताः = श्रेणिकृताः ।

**[ऊककृताः]** अनूका ऊकाः कृताः = ऊककृताः । राशिस्थानीकृता इत्यर्थः ।

**[पूगकृताः]** अपूगाः पूगाः कृताः ।

**[श्रेणिमताः]** बुधिं (१२६२) - 'मनिंच् ज्ञाने' (१२६३) मन् । मन्यन्ते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यमि-रमि-नमि०' (४।२।५५) नलोपः । अश्रेणयः श्रेणयो मताः ।

**[श्रेणिमिताः]** 'मांक् माने' (१०७३) मा । मीयन्ते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'दो-सो-मा-स्थ इः' (४।४।११) इ । अश्रेणयः श्रेणयो मिताः ।

**[श्रेणिभूताः]** अश्रेणयः श्रेणयो भूताः ।

**[श्रेणयः कृताः]** श्रेणयः कृताः । किञ्चिन्निगृहीता अनुगृहीता वेत्यर्थः ।

**[श्रेणीकृताः]** अश्रेणयः श्रेणयः कृताः । 'कृ-भ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः' (७।२।१२६) च्विप्र० । 'दीर्घश्च्वि-यङ्-यक्-क्येषु च' (४।३।१०८) दीर्घः ।

**[ऊकीकृताः]** अनूका ऊकाः कृताः । 'कृ-भ्वस्तिभ्यां०' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्या०' (४।३।१११) ई ॥छ॥

## क्तं नञादिभिन्नैः ॥३।१।१०५॥

**[नञादिभिन्नैः]** नञ् आदिर्येषां ते = नञादयः, नञादिभिर्भिन्नानि = नञादिभिन्नानि, तैः ।

**[कृताकृतम्]** कृतं च तदकृतं च ।

**[भुक्ताभुक्तम्]** भुक्तं च तदभुक्तं च ।

**[अशितानशितम्]** 'अशश् भोजने' (१५५८) अश् । अश्यति(ते) स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । अशितं च तदनशितं च ।

**[क्लिष्टाक्लिशितम्]** 'क्लिशिच् उपतापे' (१२७६) क्लिश् । क्लिश्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'पूङ्-क्लिशिभ्यो नवा' (४।४।४५) इट्→इ । अन्यत्र 'यज-सृज-मृज०' (२।१।८७) श०→ष० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) त०→ट० । क्लिष्टं च तदक्लिशितं च ।

**[पूतापवितम्]** 'पूङ् पवने' (६००) पू । पूयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'पूङ्-क्लिशिभ्यो नवा' (४।४।४५) इट्→इ । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ओ । 'ओदौतो०' (१।२।२४) अव् । पूतं च तदपवितं च ।

**[शाताशितम्]** शातं च तदशितं च । 'शोंच् तक्षणे' (११४७) शो । 'आत् सन्ध्यक्षरस्य' (४।२।१) आ । शायते स्म । 'क्त-क्तवतू'(५।१।१७४) क्तप्र०→त । 'छा-शोर्वा' (४।४।१२) इ विकल्पेन ।

**[छाताच्छितम्]** दों (११४८) - 'छोंच् छेदने' (११४९) छो । 'आत् सन्ध्यक्षरस्य' (४।२।१) छा । छायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'छा-शोर्वा' (४।४।१२) इ विकल्पेन । छातं च तदच्छितं च ।

**[कृतापकृतम्]** कृतं च तदपकृतं च ।

**[भुक्तविभुक्तम्]** भुक्तं च तद् विभुक्तं च ।

**[पीतावपीतम्]** 'पां पाने' (२) पा । पीयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) ई । पीतं च तदवपीतं च ॥छ॥

## सेड् नाऽनिटा ॥३।१।१०६॥

**[सेट्]** सह इटा वर्त्तत इति सेट् । 'सहस्य सोऽन्यार्थे' (३।२।१४३) सभावः ।

**[अनिटा]** न विद्यते इट् यस्य (यत्र) तदनिट्, तेन । 'अन् स्वरे' (३।२।१२९) अन् ।

**[क्लिशितमक्लिष्टम्]** 'क्लिशौश् विबाधने' (१५५७) क्लिश् । क्लिश्यत इति । 'पूङ्-क्लिशिभ्यो०' (४।४।४५) इट् । क्लिशितं च तद् अक्लिष्टं च ।

**[विन्नावित्तम्]** 'विदिंप् विचारणे' (१४९७) विद् । विद्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा' (४।२।७६) त० → न० विकल्पेन । विन्नं च तद् अवित्तं च = विन्नावित्तम् ।

**[त्राणात्रातम्]** देंङ् (६०४) - 'त्रैंङ् पालने' (६०५) त्रै । 'आत् सन्ध्यक्षरस्य' (४।२।१) त्रा । त्रायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा' (४।२।७६) त०→न० । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । त्राणं च तद् अत्रातं च = त्राणात्रातम् ।

**[कृताकृतम्]** कृतं च तदकृतं च ।

**[शाताशातम्]** शातं च तदशातं च ।

**[छाताच्छातम्]** छातं च तदच्छातं च ।

**[अशितानशितेन जीवति]** 'अशश् भोजने' (१५५८) अश् । अश्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । अशितं च तदनशितं च ।

**[शिताशितम्]** 'शोंच् तक्षणे' (११४७) शो । 'आत् सन्ध्यक्षरस्य' (४।२।१) शा । शायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'छा-शोर्वा' (४।४।१२) इ । न शितमशितम्, शितं च तदशितं च ।

**[छिताच्छितम्]** दों (११४८) 'छोंच् छेदने' (११४९) छो । 'आत् सन्ध्यक्षरस्य' (४।२।१) छा । छायते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'छा-शोर्वा' (४।४।१२) इ । न छितं = अच्छितम्, छितं च तदच्छितं च ।।छ।।

**सन्महत्परमोत्तमोत्कृष्टं पूजायाम्** ।।३।१।१०७।।

**[सन्महत्परमोत्तमोत्कृष्टम्]** संश्च महांश्च परमश्च उत्तमश्च उत्कृष्टश्च = सन्महत्परमोत्तमोत्कृष्टम् ।

**[सत्पुरुषः]** संश्चासौ पुरुषश्च ।

**[महापुरुषः]** महांश्चासौ पुरुषश्च । 'जातीयैकार्थेऽच्वेः' (३।२।७०) डाप्र० → आ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अत्लोपः ।

**[परमपुरुषः]** परमश्चासौ पुरुषश्च ।

**[उत्तमपुरुषः]** उत्तमश्चासौ पुरुषश्च ।

**[उत्कृष्टपुरुषः]** उत्कृष्टश्चासौ पुरुषश्च ।

**[महोदधिः]** कथं महांश्चासौ उदधिश्च, बहुलाधिकाराद्भविष्यति ।

**[सच्छुक्लः]** संश्चासौ शुक्लश्च ।

**[परमजरन्]** परमश्चासौ जरंश्च ।

**[महावीरः]** महांश्चासौ वीरश्च । 'जातीयैकार्थेऽच्वेः' (३।२।७०) डाप्र० → आ । डित्यन्त्यस्वरादेः (२।१।११४) अत्लोपः ।

**[परममहान्]** परमश्चासौ महांश्च ।।छ।।

**वृन्दारक-नाग-कुञ्जरैः** ।।३।१।१०८।।

**[वृन्दारकनागकुञ्जरैः]** वृन्दारकश्च नागश्च कुञ्जरश्च = वृन्दारकनागकुञ्जरास्तैः ।

**[गोवृन्दारकः]** वृन्दारक इव = वृन्दारकः, गौश्चासौ वृन्दारकश्च ।

**[अश्ववृन्दारकः]** वृन्दारक इव = वृन्दारकः, अश्वश्चासौ वृन्दारकश्च ।

**[गोनागः]** नाग इव = नागः, गौश्चासौ नागश्च ।

**[अश्वनागः]** अश्वश्चासौ नागश्च ।

**[गोकुञ्जरः]** कुञ्जर इव = कुञ्जरः, गौश्चासौ कुञ्जरश्च ।

**[अश्वकुञ्जरः]** अश्वश्चासौ कुञ्जरश्च ।

**[सुसीमो नागः]** सीमन् 'ताभ्यां वाऽऽप् डित्' (२।४।१५) डाप् । शोभना सीमा स्फुटा यस्य सः = सुसीमः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ॥छ॥

**कतर-कतमौ जातिप्रश्ने** ॥३।१।१०९॥

**[कतरकतमौ]** कतरश्च कतमश्च = कतरकतमौ ।

**[जातिप्रश्ने]** 卐 जातेः प्रश्नः = जातिप्रश्नः, तस्मिन् ।

**[कतरकठः]** कठेन प्रोक्तं वेत्त्यधीते वा, कतरश्चासौ कठश्च ।

**[कतरकलापः]** कलापो विद्यते यस्याऽसौ । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । कलापिना प्रोक्तं वेत्त्यधीते वा । 'तद्वेत्त्यधीते' (६।२।११७) अण्प्र० । 'तेन प्रोक्ते' (६।३।१८१) अण्प्र० । 'प्रोक्तात्' (६।२।१२९) अण्लोपः । 'कलापि-कुथुमि-तैतलि-जाजलि-लाङ्गलि-शिखण्डि-शिलालि-सब्रह्मचारि-पीठसर्पि-सूकरसद्म-सुपर्वणः' (७।४।६२) इन्लोपः । कतरश्चासौ कलापश्च ।

**[कतरगार्ग्यः]** कतरश्चासौ गार्ग्यश्च ।

**[कतमगार्ग्यः]** कतमश्चासौ गार्ग्यश्च ।

**[कतरः कुण्डली]** कुण्डलं विद्यते यस्याऽसौ । 'ज्योत्स्नादिभ्योऽण्' (७।२।३४) अण्प्र०, अण्बाधकः 'शिखादिभ्य इन्' (७।२।४) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । प्रथमा सि । 'इन्-हन्-पूषाऽर्यम्णः शिस्योः' (१।४।८७) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ॥छ॥

**किं क्षेपे** ॥३।१।११०॥

**[किंराजा यो न रक्षति]**+ को राजा ।

**[किंगौः यो न वहति]** को गौः = किंगौः, 'न किमः क्षेपे' (७।३।७०) इति समासान्तनिषेधः ।

**[किंसखा योऽभिद्रुह्यति]** कः सखा ।

**[स किंवैयाकरणः यः शब्दं न ब्रूते]** को वैयाकरणः ।

**[किंपुरुषः]** कुत्सितः पुरुषः ।

---

P 卐 जातेः प्रश्नं = जातिप्रश्नम् ।

P + कुत्सितो राजा = किंराजा ।

**[किंशुकः पलाशः]** कुत्सितः शुकः ।

**[किञ्जल्कः]** कुत्सितो जल्कः ।

**[किंकिरातम्]*** कुत्सितः किरातः ।।छ।।

**पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रिया-ऽध्यायक-धूर्त्त-प्रशंसा रूढैर्जातिः** ।।३।१।१११।।

**[पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाऽध्यायकधूर्त्तप्रशंसारूढैः]** पोटा च युवतिश्च +स्तोकं च कतिपयं च गृष्टिश्च धेनुश्च वशा च वेहच्च बष्कयणी च प्रवक्ता च श्रोत्रियश्च अध्यायकश्च धूर्त्तश्च ★प्रशंसारूढानि च = पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाऽध्यायकधूर्त्तप्रशंसारूढानि, तैः ।

**[जातिः]** 'जनैचि प्रादुर्भावे' (१२६५) जन् । जायेतेऽपि(भि)धानप्रत्ययावस्याः सा जातिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । 'आः खनि-सनि-जनः' (४।२।६०) न०→आ० । 'समानानां०' (१।२।१) दीर्घः ।

**[इभ्यपोटा]** इभ । इभमर्हति । 'दण्डादेर्यः' (६।४।१७८) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'आत्' (२।४।१८) आप्प्र०→आ । (इभ) नपुंसकहस्तिजातिः । इभ्या च सा पोटा च ।

卐 **[अर्यापोटा]** अर्या च सा पोटा च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[नागयुवतिः]** नाग 'जातेरयान्त-नित्यस्त्री-शूद्रात्'(२।४।५४) ङी (?) । (भाज-गोण-नाग-स्थल०' (२।४।३०) ङी । नागी चासौ युवतिश्च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[वृन्दार(रि)कयुवतिः]** वृन्दार(रि)का चासौ युवतिश्च ।

**[अग्निस्तोकम्]** अग्निश्चासौ स्तोकं च ।

**[विषस्तोकम्]** विषश्चासौ स्तोकं च ।

**[दधिकतिपयम्]** दधि च तत् कतिपयं च ।

**[तक्रकतिपयम्]** तक्रं च तत् कतिपयं च ।

**[अजगृष्टिः]** अजा चासौ गृष्टिश्च । 'पुम्वत् कर्मधारये' (३।२।५७) पुंवत् ।

**[अजधेनुः]** अजा चासौ धेनुश्च ।

**[गोवशा]** गौश्चासौ वशा च ।

**[अजवशा]** अजा चासौ वशा च ।

**[गोवेहत्]** गौश्चासौ वेहच्च ।

**[अजवेहत्]** अजा चासौ वेहच्च ।

---

* श० म० न्यासानुसन्धाने - कुत्सितं किरातम् । किरातं काञ्चनारवृक्षस्य पुष्पमिति लघुन्यासः । किंकिरातः कुरण्टकः - इत्यभिधानचिन्तामणिः । अयमुणादिना व्युत्पादितः ।

P + स्तोकश्च कतिपयश्च ।

P ★ प्रशंसारूढश्च, ते ।

卐 श० म० न्यासानुसन्धाने - अत्र आर्याशव्दस्थाने अर्या इति पाठः सम्यगाभाति । अर्यशब्दश्च 'स्वामिवैश्येऽर्यः' (५।१।३३) साधुः । अर्यशब्दस्य वैश्यजातिवचनत्वात् समासः । बृहद्वृत्तौ - आर्यपोटा ।

**[गोबष्कयि(य)णी]** गौश्चासौ बष्कयणी च ।

**[अजबष्कयि(य)णी]** अजा चासौ बष्कयणी च ।

**[कठप्रवक्ता]** कठश्चासौ प्रवक्ता च ।

**[कालापप्रवक्ता]** प्र 'वचंक् भाषणे' (१०९६) वच् । प्रवक्तीति । 'णक-तृचौ' (५।१।४८) तृच्प्र०—>तृ । 'च-जः क-गम्' (२।१।८६) च०—>क० । प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१।४।८४) डा । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः । क(का)लापश्चासौ प्रवक्ता च ।

**[कठश्रोत्रियः]** कठश्चासौ श्रोत्रियश्च ।

**[कालापश्रोत्रियः]** क(का)लापश्चासौ श्रोत्रियश्च ।

**[कठाध्यायकः]** 'इङ्क् अध्ययने' (११०४) इ, अधिपूर्व० । अधीयते । 'णक-तृचौ' (५।१।४८) णकप्र०—>अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः ऐ । 'एदैतोऽयाय्' (१।२।२३) आय् । 'इवर्णादि०' (१।२।२१) य० । कठश्चासावध्यायकश्च ।

**[कालापाध्यायकः]** कालापश्चासावध्यायकश्च ।

**[मृगधूर्त्तः]** मृगश्चासौ धूर्त्तश्च ।

**[गार्ग्यधूर्त्तः]** गार्ग्यश्चासौ धूर्त्तश्च ।

**[अश्वमतल्लिका]** अश्वश्चासौ मतल्लिका च ।

**[गोमचर्चिका]** गौश्चासौ मचर्चिका च ।

**[गोप्रकाण्डम्]** गौश्चासौ प्रकाण्डश्च ।

**[पुरुषोद्घः]** उत् 'हनंक् हिंसा-गत्योः' (११००) हन् । उत्कृष्टं हन्यते जा(ज्ञा)यत (इति) उद्घः । 'निघोद्घ-सङ्घोद्घना-ऽपघनोपघ्नं०' (५।३।३६) उद्घनिपातः । पुरुषश्चासावुद्घश्च ।

**[गोकुमारी]** कुमार 'वयस्यनन्त्ये' (२।४।२१) ङी । गौश्चासौ कुमारी च ।

**[अश्वकुमारी]** अश्वश्चासौ कुमारी च ।

**[गोतल्लजकः]** गौश्चासौ तल्लजकश्च ।

**[कुमारतल्लजकः]** कुमारी चासौ तल्लजकश्च ।

**[तातपादाः]**卐 तातस्य पादाः ।

**[आर्यमिश्राः]**+ आर्यश्चासौ मिश्रश्च = आर्यमिश्राः ।

**[केशपाशः]** केशाः पाश इव ।

**[केशहस्तः]** केशा हस्त इव ।

**[अंसभित्तिः]** अंसा भित्तिरिव ।

**[वक्षःस्थलम्]** वक्षो(क्षः) स्थलमिव ।

---

卐 श० म० न्या० - तातश्च ते पादाश्च ।

\+ श० म० न्या० - आर्यश्च ते मिश्राश्च ।

**[कपोलपाली]** कपोलौ पालीव ।

**[उरःकपाटः]** उरः कवाड(पाट) इव ।

**[स्तनतटम्]** स्तनौ स्तन(तट)मिव ।

**[कालाक्षी वशा]** काल-अक्षिन् । कालेऽक्षिणी यस्याः सा । 'सक्थ्यक्ष्णः स्वाङ्गे' (७।३।१२६) टः समासान्तः→अ । 'अवर्णेवर्णस्य' (७।४।६८) अन्त्यस्वरादिलोपः । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । 'अस्य ङ्यां लुक्' (२।४।८६) अलोपः ।।छ।।

## चतुष्पाद् गर्भिण्या ।।३।१।११२।।

**[चतुष्पाद्]** चतुर्-पाद । चत्वारः पादा यस्याः सा । 'सु-संख्यात्' (७।३।१५०) पादस्य पात् । 'निर्दुर्बहिराविष्प्रादुश्च-तुराम्' (२।३।९) र०→ष० ।

**[अजगर्भिणी]** अजा चासौ गर्भिणी च ।

**[महिषगर्भिणी]** महिष 'जातेरयान्त-नित्यस्त्री-शूद्रात्' (२।४।५४) ङी । महिषी चासौ गर्भिणी च । 'पुंवत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कालाक्षी गर्भिणी]** कालेऽक्षिणी यस्याः सा ।।छ।।

## युवा खलति-पलित-जरद्-वलिनैः ।।३।१।११३।।

**[खलतिपलितजरद्वलिनैः]** खलतिश्च पलितश्च जरच्च वलिनश्च = खलतिपलितजरद्वलिनाः, तैः ।

**[युवखलतिः]** युवा चासौ खलतिश्च ।

**[युवपलितः]** युवा चासौ पलितश्च ।

**[युवजरन्]** युवा चासौ जरंश्च ।

**[युववलिनः]** वलयोऽस्य सन्ति । 'नोऽङ्गादेः' (७।२।२९) नप्र० । युवा चासौ वलिनश्च ।

**[युवपलिता]** युवन् । यूनां = युवतिः । 'यूनस्तिः' (२।४।७७) तिप्र० । युवतिश्चासौ पलिता च ।

**[युवजरती]** 卐 जिं (८) 'जृं अभिभवे' (९) जृ । जरतीति । 'शत्रानशावेष्यति तु सस्यौ (५।२।२०) शतृप्र०→अत् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'अधातूदृदितः' (२।४।२) ङी । युवतिश्चासौ जरती च ।

**[युववलिना]** युवतिश्चासौ वलिना च । 'पुंवत् कर्मधारये' (३।२।५७) पुंवत् युवन् इति ।।छ।।

## कृत्य-तुल्याख्यमजात्या ।।३।१।११४।।

**[कृत्यतुल्याख्यम्]**+ तुल्य इति आख्या यस्य सः । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । कृत्यश्च तुल्याख्यश्च = कृत्यतुल्याख्यम् ।

**[अजात्या]** न जानाति, तया । 'नञत्' (३।२।१२५) न०→अ० ।

**[भोज्यलवणम्]** 'भुजंप् पालना-ऽभ्यवहारयोः' (१४८७) भुज् । भुज्यत इति । 'ऋवर्ण-व्यञ्जनाद् घ्यण्' (५।१।१७)

---

卐 धातुपारायणे - अन्ये तु ञिंस्थाने जृं इति ऋकारान्तं पठन्ति । 'जृष् जरसि (११४५) जृ । जीर्यति स्म ।

P + तुल्यस्य आख्या = तुल्याख्या, कृत्यश्च तुल्यारव्या च, तत् । 'जृषोऽतृः' (५।१।१७३) अतृप्रत्ययेऽपि जरती भवति ।

घ्यण्प्र०→य । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । भोज्यं च तल्लवणं च ।

**[पानीयशीतम्]** 'पां पाने' (२) पा । पीयते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । पानीयं च तत् शीतं च ।

**[पानीयोष्णं जलम्]** पानीयं च तदुष्णं च ।

**[हरणीयपूर्णो घटः]** 'हृंग् हरणे' (८८५) हृ । ह्रियते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'नामिनो गुणोऽक्डिति' (४।३।१) गु० अर् । हरणीयश्चासौ पूर्णश्च ।

**[पेयाम्लम्]** पीयते । 'य एच्चातः' (५।१।२८) यप्र० - आ०→ए० । पेयं च तदाम्लं च ।

**[भृत्यभरणीयः]** 'डुडुभृंग्क् पोषणे च' (११४०) भृ । भ्रियते । 'भृगोऽसंज्ञायाम्' (५।१।४५) क्यप्प्र०→य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । भ्रियते । 'तव्या-ऽनीयौ' (५।१।२७) अनीयप्र० । 'नामिनो गुणोऽक्डिति' (४।३।१) गु० अर् । 'रषृवर्णान्नो ण०' (२।३।६३) न०→ण० । भृत्यश्चासौ भरणीयश्च ।

**[स्तुत्यपटुः पुरुषः]** स्तु (३।१।१) सूत्रवत् । स्तूयते । 'दृ-वृग्-स्तु-जुषेति-शासः' (५।१।४०) क्यप्प्र० →य । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । स्तुत्यश्चासौ पटुश्च ।

**[तुल्यश्वेतः]** तुलया संमितस्तुल्यः । 'हृद्य-पद्य-तुल्य-मूल्य-वश्य-पथ्य-वयस्य-धेनुष्या-गार्हपत्य-जन्य-धर्म्यम्' (७।१।११) तुल्यनिपातः । तुल्यश्चासौ श्वेतश्च ।

**[तुल्यसन्]** तुल्यश्चासौ संश्च ।

**[तुल्यमहान्]** तुल्यश्चासौ महांश्च ।

**[सदृशश्वेतः]** सदृशश्चासौ श्वेतश्च ।

**[सदृशमहान्]** महत् प्रथमा सि । 'ऋदुदितः' (१।४।७०) नोऽन्तः । 'न्स्महतोः' (१।४।८६) दीर्घः । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः । 'पदस्य' (२।१।८९) तलोपः । सदृशश्चासौ महांश्च ।

**[सदृशी कन्या वोढव्या]** वहीं प्रापणे' (९९६) वह् । वोढुं शक्या(क्ता) । 'शक्तार्हे कृत्याश्च' (५।४।३५) तव्यप्र० । 'हो धुट्-पदान्ते' (२।१।८२) ह०→ढ० । 'अधश्चतुर्थात् तथोर्धः' २।१।७९) त०→ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध० →ढ० । 'सहि-वहेरोच्चाऽवर्णस्य' (१।३।४३) ढलोपः - पूर्विओकारु । 'आत्' (२।४।१८) आप्प्र०→आ ।

**[शीतपानीयम्]** शीतं च तत् पानीयं च ।।छ।।

## कुमारः श्रमणादिना ।।३।१।११५।।

**[श्रमणादिना]** 卐 श्रमणा आदिर्यस्याऽसौ श्रमणादिस्तेन ।

**[कुमारप्रव्रजिता]** कुमार 'वयस्यनन्त्ये' (२।४।२१) ङी । कुमारी चासौ प्रव्रजिता च । 'पुवंत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कुमाराभिरूपकः]** कुमारश्चासावभिरूपकश्च ।

**[कुमाराभिरूपिका]** कुमारी चासावभिरूपिका च । 'पुंवत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कुमारश्रमणः]** कुमारश्चासौ श्रमणश्च ।

---

P 卐 श्रमण आदिर्यस्य तत्तेन ।

**[तापसकुमारः]** तापसश्चासौ कुमारश्च ।

**[तुल्ययुवा]** तुल्यश्चासौ युवा च ।

**[सदृशयुवा]** सदृशश्चासौ युवा च ।

**[कुमारपरमः]** कुमारश्चासौ परश्च, स्वमते परम(श्च) ।

**[कुमारपरमा]** कुमारी चासौ परमा च । 'पुंवत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कुमारसन्]** कुमारश्चासौ संश्च ।

**[कुमारसती]** कुमारी चासौ सती च । 'पुंवत् कर्मधारये' (३।२।५७) पुंवत् ।

**[कुमारयुवा]** कुमारश्चासौ युवा च ।

**[कुमारतुल्यः]** कुमारश्चासौ तुल्यश्च ।

**[कुमारतुल्याः]** कुमारी चासौ तुल्या च ।

**[वृन्दारकपलितः]** पलितेन वृन्दारकः ।

**[वृन्दारकवलिनः]** वलिनेन वृन्दारकः ।

**[नागजरन्]** जरता नागः ।

**[वृन्दारकश्रमणा]** श्रव(म)णया वृन्दारकः ।

**[खलतिश्रमणा]** खलत्या श्रव(म)णा ।

**[वृन्दारकप्रव्रजिता]** प्रव्रजितया वृन्दारकः ।

**[खलतिप्रव्रजिता]** खलत्या प्रव्रजिता ।

**[जरत्कुलटा]** कुलटया जरत् ।

**[जरत्तापसी]** तापस्या जरत् ।

**[वृन्दारकश्रमणः, श्रमणवृन्दारकः]** श्रव(म)णो वृन्दारक इव ।

**[नागतापसः, तापसनागः]** तापसो नाग इव ।

**[कुञ्जरदासः, दासकुञ्जरः]** दासः कुञ्जर इव ।

**[श्रमणखलतिः, खलतिश्रमणः]** खलति(ः) श्रमण इव ।

**[पलिततापसः, तापसपलितः]** तापसः पलित इव ।

**[वृन्दारकाध्यायकः]** वृन्दारकश्चासावध्यायकश्च ।

**[वृन्दारकाध्यायिका]** वृन्दारकश्चासावध्यायिका च ।

**[खलत्यध्यायकः]** खलतिः चासावध्यायकश्च ।

**[खलत्यध्यायिका]** खलतिः चासावध्यायिका च ।

**[पलिताभिरूपकः]** पलितश्चासावभिरूपकश्च ।

**[पलिताभिरूपिका]** पलितश्चासावभिरूपिका च ।

अयमपि च तन्मतास्मन्मतयोरयं विशेषः, एकसूत्रोक्तानां प्रथमान्तानां समावेशे, एकसूत्रोक्तानां तृतीयान्तानां समावेशे च पूर्वनिपाते कामचारः ।

**[प्रथमवीरः, वीरप्रथमः]** प्रथमश्चासौ वीरश्च ।

**[चरमजघन्यः, जघन्यचरमः]** चरमश्चासौ जघन्यश्च ।

**[तुल्यभोज्यः, भोज्यतुल्यः]** तुल्यश्चासौ भोज्यश्च ।

**[खलतिपलितः, पलितखलतिः]** खलत्या पलितः ।

**[जरद्वलिनः, वलिनजरन्]** जरता वलिनः ।।छ।।

**मयूरव्यंसकेत्यादयः ।।३।१।११६।।**

**[मयूरव्यंसकेत्यादयः]** मयूरव्यंसक इति आदिर्येषां ते । मयूर इव = मयूरः । विगतावंशा(सा)वस्य = व्यंसः । व्यंसस्य तुल्यः = व्यंसकः । 'तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः' (७।१।१०८) कप्र० । यद्वा 'अंशण् समाघाते' (१९१७) अंश्, विपूर्व० । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ । 卐 व्यंसयतीति । 'णक-तृचौ' (५।१।४८) णकप्र०→अक । 'णेरनिटि' (४।३।८३) णिच्लोपः । अयं धातुः "चन्द्रो दन्त्यान्तमाह" ।

**[मयूरव्यंसकः]** मयूरश्चासौ व्यंसकश्च ।

**[छात्रव्यंसकः]** व्यंसकश्चासौ छ(छा)त्रश्च ।

**[कम्बोजमुण्डः]** कम्बोज । कम्वोजस्याऽपत्यम् । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'शकादिभ्यो द्रेर्लुप्' (६।१।१२०) अञ्लोपः । मुण्डश्चासौ कम्बोजश्च ।

**[यवनमुण्डः]** यवन । यवनस्याऽपत्यम् । 'राष्ट्र-क्षत्रियात् सरूपाद् राजाऽपत्ये द्रिरञ्' (६।१।११४) अञ्प्र० । 'शकादिभ्यो द्रेर्लुप्' (६।१।१२०) अञ्लोपः । मुण्डश्चासौ यवनश्च ।

**[एहीडं वर्त्तते]** एहि ईडे । स्त्रि ! इति जल्पो यस्मिन् कर्मणि काले वा तत् । एहीडमित्यत्र 'म्लेच्छीडेर्ह्रस्वश्च वा' (उणा० ३) अप्र० - ह्रस्वत्वम् ।

**[प्रेहिवाणिजा]** वणिजे(गे)व । 'प्रज्ञादिभ्योऽण्' (७।२।१६५) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'आत्' (२।४।१८) आप्प्र०→आ । प्रेहि वाणिजेति जल्पो यस्यां क्रियायां सा ।

**[अपेहिवाणिजा]** अपेहि वाणिजेति जल्पो यस्यां क्रियायां सा ।

**[एहिस्वागता]** एहि स्वागतेति जल्पो यस्यां क्रियायां सा ।

**[एहिप्रघसा]** 'अदं भक्षणे' (१०५९) अद्, प्रपूर्व० । प्रादनम् । 'भू-श्र्यदोऽल्' (५।३।२३) अल्प्र०→अ । 'घस्लृ सनद्यतनी०' (४।४।१७) घस्लृआदेशः । 'आत्' (२।४।१८) आप्प्र०→आ । एहि प्रघसेति जल्पो यस्यां क्रियायां सा ।

**[अपेहिप्रघसा]** अपेहि प्रघसेति जल्पो यस्यां क्रियायां सा ।

**[एहिविघसा]** एहि विघसेति जल्पो यस्यां क्रियायां सा ।

**[प्रोहकर्दमा]** प्र 'ऊहि वितर्के' (८७०) ऊह् । 'उपसर्गादस्योहो वा' (३।३।२५) आत्मनेपदं वा भवति । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । प्रोह कर्दमेति जल्पो यस्यां सा ।

---

P 卐 व्यंसयति - छलयति = व्यंसकः ।

**[प्रोहकपर्दा]** प्रोह कपर्देति जल्पो यस्यां सा ।

**[उद्धमचूडा]** उद् 'ध्मां शब्दा-ऽग्निसंयोगयोः' (४) ध्मा । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) धमादेशः । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । ततो मध्यस्थः समासः ।

**[आहरवसना]** 'हृंग् हरणे' (८८५) हृ, आङ्पूर्व० । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । आहर वसनमिति जल्पो यस्यां सा ।

**[आहरवितता]** आहर विततमिति जल्पो यस्यां सा ।

**[कृन्धिविचक्षणा क्रिया]** 'कृतैप् वेष्टने' (१४९०) कृत् । पञ्चमी हि । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । 'हु-धुटो हेर्धिः' (४।२।८३) हि०→धि० । 'धुटो धुटि स्वे वा' (१।३।४८) तलोपः । कृन्धि विचक्षण ! इति विचक्षणमिति वा जल्पो यस्यां क्रियायां सा ।

**[भिन्धिलवणा]** 'भिदृंपी विदारणे' (१४७७) भिद् । पञ्चमी हि । 'रुधां स्वराच्श्नो नलुक् च' (३।४।८२) श्नप्र० । 'श्ना-ऽस्त्योर्लुक्' (४।२।९०) अलोपः । 'हु-धुटो हेर्धिः' (४।२।८३) हि०→धि० । 'धुटो धुटि स्वे वा' (१।३।४८) दलोपः । भिन्धि लवणमिति जल्पो यस्यां क्रियायां सा ।

**[पचलवणा]** 'डुपचींष् पाके' (८९२) पच् । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । पच लवणमिति जल्पो यस्यां सा ।

**[उद्धरावसृजा]** उत् 'धृंग् धारणे' (८८७) धृ । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । उद्धर अवसृज इति जल्पो यस्यां सा ।

**[उद्धमविधमा]** उद्धम विधम इति जल्पो यस्यां सा ।

**[उद्वपनिवपा]** उत् 'डुवपीं बीजसन्ताने' (९९५) वप् । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतः प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । उद्वप निवप इति जल्पो यस्यां सा ।

**[उत्पतनिपता]** उत्पत निपत इति जल्पो यस्यां सा ।

**[उत्पचनिपचा]** उत्पच निपच इति जल्पो यस्यां सा ।

**[अश्नीतपचता]** 'अशश् भोजने' (१५५८) अश् । पञ्चमी त । 'क्र्यादेः' (३।४।७९) श्नाप्र०→ना । 'एषामी व्यञ्जनेऽदः' (४।२।९७) ई । अश्नीत पचत इति सातत्येनोच्यते यस्यां सा ।

**[खादतमोदता]** 'खादृ भक्षणे' (२९४) खाद् । पञ्चमी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'मुदि हर्षे' (७२६) मुद् । 'आत्मनेपदमनित्यम्' (न्या० स० वक्ष० (२) /सूत्र (३७) चौरादिकस्य वा णिचोऽनित्यत्वे पञ्चमी त । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ । खादत मोदत इति सातत्येनोच्यते यस्यां सा ।

**[पचतभृज्जता]** 'भ्रस्जींत् पाके' (१३१६) भ्रस्ज् । पञ्चमी त । 'तुदादेः शः' (३।४।८१) शप्र०→अ । 'ग्रह-व्रस्च-भ्रस्ज-प्रच्छः' (४।१।८४) य्वृत् । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) स०→द० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) द०→ज० । पचत भृज्जत इति सातत्येनोच्यते यस्यां सा ।

**[आहरनिवपा]** आहर निवप इति सातत्येनोच्यते यस्यां सा ।

**[आवपनिष्किरा]** आवप निष्किरेति सातत्येनोच्यते यस्यां सा ।

**[पचप्रकूला]** प्र 'कूल आवरणे' (४२३) कूल् । पञ्चमी हि । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतः

२८

प्रत्ययाल्लुक्' (४।२।८५) हिलोपः । पच प्रकूलेति सातत्येनोच्यते यस्यां सा ।

निपातनादमी सर्वेऽपि सिद्धाः ।

**[इहद्वितीया]** इह द्वितीयेति यस्यां क्रियायां सा ।

**[इहपञ्चमी]** इह पञ्चमीति यस्यां क्रियायां सा ।

**[अद्यद्वितीया]** अद्य द्वितीयेति यस्यां क्रियायां सा, निपातनात् 'गोश्चान्ते०' (२।४।९६) ह्रस्वाभावः ।

**[एहिरेयाहिरा]** एहि रे याहि र इति यस्यां क्रियायां सा । निपातनाद् एकारस्य अकारः । 'आत्' (२।४।१८) आप्प्र० →आ ।

**[आहोपुरुषिका]** अहो अहं पुरुष इति यस्यां क्रियायां सा । निपातनाद् णकः ।

**[अहंपूर्विका]** अहं पूर्व इति यस्यां सा ।

**[अहंप्रथमिका]** अहं प्रथम इति यस्यां सा ।

एहिवाणिजादिषु क्रियैवान्यपदार्थः ।

**[उज्जहिजोडः]** उज्जहि जोडमित्यभीक्ष्णं य आह स उच्यते = उज्जहिजोडः ।

**[जहिस्तम्बः]** जहि स्तम्बमित्यभीक्ष्णं य आह स उच्यते = जहिस्तम्बः ।

**[उज्जहिस्तम्बः]** उज्जहि स्तम्बमित्यभीक्ष्णं य आह स उच्यते = उज्जहिस्तम्बः ।

**[कुरुकटः]** कुरु कटमित्यभीक्ष्णं य आह स उच्यते = कुरुकटः कालः ।

**[स्नात्वा कालीभूतः]** 'भू सत्तायाम्' (१) भू । अकालः कालो भवति स्म । 'गत्यर्था-ऽकर्मक-पिब-भुजेः' (५।१।११) क्तप्र०→त । 'कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां प्रागतत्तत्त्वे च्विः' (७।२।१२६) च्विप्र० । 'ईश्च्वाववर्णस्याऽनव्ययस्य' (४।३।१११) ई । 'अप्रयोगीत्' (१।१।३७) च्विलोपः ।

**[स्नात्वाकालकः]** काल एव = कालकः । 'कालात्' (७।३।१९) कप्र० ।

**[पीत्वास्थिरकः]** 'पां पाने' (२) पा । पानं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा । 'ईर्व्यञ्जनेऽयपि' (४।३।९७) ई । स्थिर एव = स्थिरकः । 'यावादिभ्यः कः' (७।३।१५) कप्र० ।

**[भुक्त्वासुहितः]** भुक्त्वासुहित इति किमुच्यते ? - यो यत् किञ्चिदशित्वा सुहितो भवति स एवमुच्यते ।

**[प्रोष्यपापीयान्]** प्र 'वसं निवासे' (९९९) वस् । प्रवसनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप्→य । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । 'नाम्यन्तस्था०' (२।३।१५) स० → ष० (?) ('घस्-वसः' (२।३।३६) स०→ष०) । ततो मध्यस्थः समासः ।

**[उत्पत्यपाकला]** उत् 'पत्लृ गतौ' (९६२) पत् । उत्पतनं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् ।

**[निपत्यरोहिणी]** निपत्य भूमौ निपतिता रोहिणी या रक्ता भवति सा ।

**[पुटापुटिका]** पुटावयवयोगात् पुटः, पुटिकावयवयोगात् पुटिका, पुटश्चासौ पुटिका च ।

**[मानोन्मानिका]** मानावयवयोगान्मानः, उन्मानिकावयवयोगादुन्मानिका, मानश्चासावुन्मानिका च ।

**[शाकपार्थिवः]** पृथु । पृथोरपत्यम् । 'ङसोऽपत्ये' (६।१।२८) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।

'अस्वयम्भुवोऽव्' (७।४।७०) अव् । (यद्वा) पृथिव्या ईश्वरः । 'पृथिवी-सर्वभूमेरीश-ज्ञातयोश्चाऽञ्' (६।४।१५६) पार्थिवनिपातः । शाकप्रियः शाकभोजी शाकप्रधानो वा पार्थिवः ।

**[कुतपसौश्रुतः]** 'कुत गुम्फप्रीत्योः' कुतिः सौत्रो धातुः । 'भुजि-कुति-कुटि-विटि-कुणि-कुष्युषिभ्यः कित्' (उणा० ३०५) किद् अपप्र० कुतपनिपातः । कुतपस्तु दर्भछागलोम्नां कम्बलं वा । सुश्रुतोऽपत्यम् । 'ङसोऽपत्ये' (६।१।२८) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । कुतप्रधानः सौश्रुतः ।

**[परशुरामः]** परशुः-कुठारः प्रहरणो रामः ।

**[ओदनपाणिनिः]** ओदनप्रधानः पाणिनिः ।

**[आणिमाण्डव्यः]** आणिप्रधानो माण्डव्यः ।

**[बलाकाकौशिकः]** कुशिकस्याऽपत्यम् । 'विदादेर्वृद्धे' (६।१।४१) अञ्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । बलाकाप्रधानः कौशिकः ।

**[विदर्भीकौण्डिन्यः]** विदर्भ 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । विदर्भीप्रधानः कौण्डिन्यः ।

**[एकादश]** एकाधिका दश = एकादश । 'एकादश-षोडश-षोडन्-षोढा-षड्ढा' (३।२।९१) एकादशनिपातः । प्रथमा जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लुप् ।

**[द्वादश]** द्वाभ्यामधिका दश ।

**[षोडश]** षड्भिरधिका दश = षोडश । 'एकादश-षोडश-षोडन्-षोढा-षड्ढा' (३।२।९१) षोडशनिपातः । प्रथमा जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लुप् ।

**[एकशतम्]** एकं च तत् शतं च ।

**[द्विशतम्]**卐 द्विश्च (द्वे च) तत् शतं च ।

**[घृतौदनः]** घृतेन उपसिक्त ओदनः ।

**[तिलपृथुकाः]** तिलेन मिश्राः पृथुकाः ।

**[गुडधानाः]** गुडेन मिश्रा धानाः ।

**[गजरथः]** गजयुक्तो रथः ।

**[त्रिभागः, तृतीयभागः]** तृतीयो भागस्त्रिभागः । अत एव सूत्रत्वात् पूरणप्रत्ययस्य वा लुक् ।

**[त्र्यंशः, तृतीयांशः]** तृतीयोंऽशः = त्र्यंशः । अनेन तीयलोपः । (तीयलोपाभावे) तृतीयांशः ।

**[सर्वश्वेतः]** द्वयोर्मध्ये प्रकृष्टः श्वेतः = श्वेततरः । 'द्वयोर्विभज्ये च तरप्' (७।३।६) तरप्प्र०→तर । सर्वेषां श्वेततरः = सर्वश्वेतः । अत एव सूत्रत्वात्तरलोपः ।

**[सर्वमहान्]** सर्वेषां महत्तरः । अनेन तरलोपः ।

**[मयूरव्यंसकप्रियः]** मयूरव्यंसकः प्रियो यस्य सः ।

**[पुनाराजः]** पुना राजा । 'राजन्-सखेः' (७।३।१०६) अट्समासान्तः । 'नोऽपदस्य तद्धिते' (७।४।६१) अन्लोपः ।

**[पुनर्गवः]** पुनर्गौः । 'गोस्तत्पुरुषात्' (७।३।१०५) अट्समासान्तः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् ।

---

卐 श० म० न्या० - द्व्यधिकं शतम् ।

**[पादहारकः]** पादाभ्यां ह्रियते । 'बहुलम्' (५।१।२) णकप्र०→अक । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् ।

**[गलेचोपकः]** 'चुप मन्दायाम्' (३४२) चुप् । गले चोप्यत इति । 'बहुलम्' (५।१।२) णकप्र०→अक । 'लघोरुपान्त्यस्य' (४।३।४) गु० ओ ।

**[सायंदोहः]** सायं दोहनम् ।

**[प्रातर्दोहः]** प्रातर्दोहनम् ।

**[पुनर्दोहः]** पुनर्दोहनम् ।

**[सायमाशः]** सायं 'अशश् भोजने' (१५५८) अश् । सायमशनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः अ०→आ० ।

**[प्रातराशः]** प्रातरशनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०→अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः आ० ॥छ॥

**चार्थे द्वन्द्वः सहोक्तौ** ॥३।१।११७॥

**[चार्थे]** चस्याऽर्थः = चार्थस्तस्मिन् ।

**[सहोक्तौ]** सह वचनं = सहोक्तिः । 'स्त्रियां क्तिः' (५।३।९१) क्तिप्र०→ति । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ०, तस्याम् ।

**[धवाश्वकर्णौ]** धवश्च अश्वकर्णश्च ।

**[वाक्त्वचम्]** वाक् च त्वक् च = वाक्त्वचम् । 'चवर्ग-द-ष-हः समाहारे' (७।३।९८) अत्अमासान्तः ।

**[छत्रोपानहम्]** छत्रं च उपानहौ च = छत्रोपानहम् । 'चवर्ग-द-ष-हः समाहारे' (७।३।९८) अत्समासान्तः ।

**[होतृपोतृनेष्टोद्गातारः]** होता च पोता च नेष्टा च उद्गाता च = होतृपोतृनेष्टोद्गातारः । 'आ द्वन्द्वे' (३।२।३९) आ । प्रथमा जस् । मतान्तरेण 'तृ-स्वसृ-नप्तृ-नेष्टृ०' (१।४।३८) इत्यादिना आर् ।

**[होतापोतानेष्टोद्गातारः]** होता च पोता च = होतापोतारौ, नेष्टा च उद्गाता च = नेष्टोद्गातारौ, होतापोतारौ च नेष्टोद्गातारौ च = होतापोतानेष्टोद्गातारः । 'आ द्वन्द्वे' (३।२।३९) पूर्वत्रिषु आ ।

**[पीठच्छत्रोपानहम्]** पीठं च छत्रं च उपानच्च (उपानहौ च) । 'चवर्ग-द-ष-हः समाहारे' (७।३।९८) अत्समासान्तः ।

तत्रैकमर्थं प्रति द्व्यादीनां क्रिया-कारक-द्रव्य-गुणानां तुल्यबलानामविरोधिना**मनियतक्रम-यौगपद्यानामा**त्मरूपभेदेन चीयमानता समुच्चयः ।

अनियतक्रमं योगं पद्यं (यौगपद्यं) येषां ते, तेषाम् ।

"**अहरहर्नयमानो** गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराया इव दुर्मदी" ॥१॥

**[अहरहर्]** अहन् 'काला-ऽध्वनोर्व्याप्तौ' (२।२।४२) अम् । 'अनतो लुप्' (१।४।५९) अम्लोपः । 'वीप्सायाम्' (७।४।८०) द्वित्वम् । 'रो लुप्यरि' (२।१।७५) न०→र० ।

**[नयमानः]** 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादेर्णो नः' (२।३।९७) नी । नीयते = नयमानः । 'शत्रानशावेष्यति तु सस्यौ' (५।२।२०) आनश्प्र०→आन । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अतो म आने' (४।४।११४) मोऽन्तः । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० ए । 'एदैतोऽयाय्' (१।२।२३) अय् ।

**[चैत्रश्च मैत्रश्च घटं कुर्वाते, चैत्रमैत्रौ घटं कुर्वाते]** 'डुकृंग् करणे' (८८८) कृ । वर्त्त० आते । 'कृग्-तनादेरुः' (३।४।८३) उप्र० । 'नामिनो गुणोऽक्ङिति' (४।३।१) गु० अर् । 'अतः शित्युत्' (४।२।८९) अ०→उ० । 'इवर्णादे०' (१।२।२१) व० ।

**[त्रिंशच्चत्वारिंशतौ]** त्रिंशद् देवदत्ताय दीयतां, चत्वारिशच्चैत्रायेति त्रिंशच्चत्वारिंशतौ ।

**[षष्टिसप्तत्यशीतयः]** षष्टिर्मैत्राय दीयतां, सप्ततिश्चैत्राय, असी(शी)तिर्देवदत्ताय = षष्टिसप्तत्यसी(शी)तयः ।।छ।।

## समानामर्थेनैकः शेषः ।।३।१।११८।।

**[समानाम्]** सम षष्ठी आम् । 'ह्रस्वाऽऽपश्च' (१।४।३२) नाम् । 'दीर्घो नाम्यतिसृ-चतसृ-ष्रः' (१।४।४७) दीर्घः । अतन्त्रमप्रधानमित्यर्थः ।

**[लोहिताक्षौ रक्ताक्षौ]** लोहिताक्षिश्च रक्ताक्षिश्च = लोहिताक्षौ रक्ताक्षौ । 'सक्त्थ्यक्ष्णः स्वाङ्गे' (७।३।१२६) टः समासान्तः । 'अंवर्णेवर्णस्य (७।४।६८) इलोपः ।

**[प्लक्षन्यग्रोधौ]** प्लक्षश्च न्यग्रोधश्च ।

**[धवखदिरपलाशाः]** धवश्च खदिरश्च पलाशश्च ।।छ।।

## स्यादावसंख्येयः ।।३।१।११९।।

**[स्यादावसंख्येयः]** सिरादिर्यस्याऽसौ स्यादिस्तस्याम् (तस्मिन्) । न संख्येयोऽसंख्येयः । पूर्वत्राऽर्थेन समानत्वं रूपकृतो भेद एव सरूपार्थं वचनमिदम् ।

**[पादाः]**卐 पादश्च-पर्यंतपर्वतः, पादश्च-चरणः, पादश्च-चतुर्थांशः = पादाः ।

**[माषाः]** माषश्च माषश्च माषश्च = माषाः ।

**[श्येन्यौ]** श्येत 'श्येतैत-हरित०' (२।४।३६) ङीप्र० तस्य न० । द्वितीयपक्षे 'जातेरयान्त०' (२।४।५४) ङी । श्येनी च श्येनी च ।

**[हरिण्यौ]** हरित । 'श्येतैत-हरित-भरत-रोहिताद् वर्णात् तो नश्च' (२।४।३६) ङीप्र० - तस्य न० । द्वितीयपक्षे 'जातेरयान्त०' (२।४।५४) ङी । हरिणी च हरिणी च ।

**[रोहिण्यौ]** रोहिणी च रोहिणी च ।

**[मातृभ्याम्]** माता च २ = मातरौ, ताभ्याम् ।

**[मातृभिः]** माता च ३ = मातरस्ताभिः ।

**[मातृभ्यः]** माता च ३ = मातरस्ताभ्यः ।

**[मात्रोः]** माता च २ = मातरौ, तयोः ।

**[मातृषु]** माता च ३ = मातरस्तासु ।।छ।।

---

卐 श० म० न्या० - "पादो भासि तुरीयांशे, गिरेः प्रत्यन्तपर्वते ।
पादा-ऽङ्घ्रिचरणा जन्तोरङ्गे मूले च भूरुहाम् ।।" [शाश्वतः]

**त्यदादिः ॥३।१।१२०॥**

**[त्यदादिः]** त्यद् आदिर्यस्याऽसौ त्यदादिः ।

**[वयम्]** अहं च स च त्वं च = वयम् ।

**भ्रातृ-पुत्राः स्वसृ-दुहितृभिः ॥३।१।१२१॥**

**[भ्रातृपुत्राः]** भ्रातरश्च पुत्राश्च = भ्रातृपुत्राः ।

**[स्वसृदुहितृभिः]** स्वसारश्च दुहितरश्च = स्वसृदुहितरस्ताभिः ॥छ॥

**पिता मात्रा वा ॥३।१।१२२॥**

**[पिता]** पितृ प्रथमा सि । 'ऋदुशनस्-पुरुदंशो०' (१।४।८४) सि०→डा० ।

**[मात्रा]** मातृ तृतीया टा ।

**[पितरौ, मातापितरौ]** पिता च माता च = पितरौ, पक्षे मातापितरौ इत्यत्र 'आ द्वन्द्वे' (३।२।३९) आ । 'लध्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम्' (३।१।१६०) इत्यनेन मातृशब्दस्य पूज्यत्वात् पूर्वनिपातः ॥छ॥

**श्वशुरः श्वश्रूभ्यां वा ॥३।१।१२३॥**

**[श्वश्रूभ्याम्]** श्वश्रूश्च २ = श्वश्रौ, ताभ्याम् । 'स्यादावसंख्येयः' (३।१।११९) एकशेषः । द्विवचनं जातौ धवयोगे च वर्तमानयोः श्वश्र्वोः परिग्रहार्थम् ।

**[श्वशुरौ, श्वश्रूश्वशुरौ]** श्वशुरश्च श्वश्रूश्च = श्वशुरौ ॥छ॥

**वृद्धो यूना तन्मात्रभेदे ॥३।१।१२४॥**

**[वृद्धो यूना तन्मात्रभेदे]** वृद्ध प्रथमा सि । 'सो रुः' (२।१।७२) स०→र० । वृद्धशब्देन वृद्धवाची प्रत्ययान्त उच्यते, युवशब्देन युववाची प्रत्ययान्त उच्यते । तद् । 卐 तावेव मात्रं = तन्मात्रम् । 'प्रायोऽतोर्द्वयसट्-मात्रट्' (७।२।१५५) मात्रट्प्र० →मात्र । तन्मात्रं चासौ भेदश्च = तन्मात्रभेदस्तस्मिन् । अथवा +तद्(न्) मात्रतौ वृद्धयुवानौ एव मात्रं * भेदो यस्य तत्, तस्मिन् ।

**[गार्ग्यौ]** गर्ग । गर्गस्याऽपत्यं वृद्धम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । 'गार्ग्यस्यापत्यं युवा । 'युवादेरायनञ्' (?) ('यञिञः' (६।१।५४) आयनण्प्र० →आयन) । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । गार्ग्यश्च गार्ग्यायणश्च = गार्ग्यौ ।

**[वात्स्यौ]** वत्स । वत्सस्याऽपत्यं वृद्धम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । वात्स्यस्याऽपत्यं युवा । युवादे० (?) ('यञिञः' (६।१।५४) आयनण्प्र० →आयन) । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । वात्स्यश्च वात्स्यायनश्च = वात्स्यौ ।

**[दाक्षी]** दक्षस्याऽपत्यं वृद्धम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । दाक्षेरपत्यं युवा । युवादे० (?) ('यञिञः' (६।१।५४) आयनण्प्र०→आयन) । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । दाक्षिश्च दाक्षायणश्च = दाक्षी ।

**[औपगवौ]** उप-गो । उपगता गौर्यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः । उपगोरपत्यम् । 'ङसोऽपत्ये'

---

P 卐 स तावेव वा । P + तन्मात्रन्तौ युवानौ । P * स्वभावो ।

(६।१।२८) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अस्वयम्भुवोऽव्' (७।४।७०) अव्, ततोऽमीषां मध्यस्थः समासः ।

**[गार्ग्यवात्स्यायनौ]** गार्ग्यश्च वात्स्यायनस्य(श्च) = गार्ग्यवात्स्यायनौ ।

**[भागवित्ति-भागवित्तिकौ]** भगवन्त(वित्त) । भगवत्त(वित्त)स्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । भागव(वि)त्तेरपत्यं युवा । 'भागवित्तितार्णविन्दवाऽऽकशापेयान्निन्दायामिकण् वा' (६।१।१०५) इकण्प्र०→इक । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । भागव(वि)त्तिश्च भागव(वि)त्तिकश्च = भागवित्ति-भागवित्तिकौ ।।छ।।

**स्त्री पुंवच्च ।।३।१।१२५।।**

**[पुंवत्]** पुम्स् । पुमानिव = पुंवत् । 'स्यादेरिवे' (७।१।५२) वत्प्र० । 'पदस्य' (२।१।८९) सलोपः । 'तौ मुमौ(मो) व्यञ्जने स्वौ' (१।३।१४) अनुस्वारः ।

**[गर्गाः]** गर्गस्याऽपत्यं वृद्धं = गार्ग्यः । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०→य । 'अणञेयेकण्०' (२।४।२०) ङी (?) ('यञो डायन् च वा') (२।४।६७) ङी) । 'व्यञ्जनात् तद्धितस्य' (२।४।८८) यलोपः । ततो मध्यस्थो वाक्यः । गार्गी च गार्ग्यायणौ च = गर्गाः । 'ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः' (२।४।९५) ङीनिवृत्तिः ।

**[गर्गान्]** गार्ग्यः 'यञञोऽश्यापर्णान्त-गोपवनादेः' (६।१।१२६) यलोपः । प्रथमा जस् । तान् = गर्गान् ।।छ।।

**पुरुषः स्त्रिया ।।३।१।१२६।।**

**[तीरं नद-नदीपतेः]** नद-नदीनां पतिः = नद-नदीपतिस्तस्य ।

**[घट-घटीशरावोदञ्चनानि]** घटश्च घटी च शरावोदञ्चनानि च (दञ्चनं च) ।

**[अश्व-वडवौ]** अश्वश्च वडवा च । 'अश्ववडव-पूर्वापरा-ऽधरोत्तराः' (३।१।१३१) ह्रस्वः ।

**[पुरुष-योषितौ]** पुरुषश्च योषिच्च ।

**[द्रुणी-कच्छपौ]** द्रुणी च कच्छपश्च = द्रुणीकच्छपौ ।

**[कालिकाऽङ्गारकाः]** काला । काले(लै)व ।

**[गणक-गणक्यौ]** गणकस्य भार्या । 'धवाद् योगादपालकान्तात्' (२।४।५९) ङी । गणकश्च गणकी च ।

**[इन्द्रेन्द्राण्यौ]** इन्द्र । इन्द्रस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चान्तः' (२।४।६२) ङी-आनन्ते च । इन्द्रश्च इन्द्राणी च ।

**[भव-भवान्यौ]** भव । भवस्य भार्या । 'वरुणेन्द्र-रुद्र-भव०' (२।४।६२) ङी - आनन्ते च । भवश्च भवानी च ।

**[कुक्कुट-मयूर्यौ]** कुक्कुटश्च मयूरी च ।

**[अश्वा-किशोरौ]** अश्वा च किशोरश्च ।

**[कलभ-हस्तिन्यौ]** कलभश्च हस्तिनी च ।

**[ब्राह्मणवत्सा-ब्राह्मणीवत्सौ]** ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च, न केवलं प्रधानस्त्रीपुरुषमात्रभेदोऽस्ति, अप्रधानस्त्रीपुरुषकृतोऽपि कथम्, यथा ब्राह्मणवत्सा इत्यत्र विशेषणीभूतब्राह्मणपुरुषभेदः, ब्राह्मणीवत्स इत्यत्र विशेषणीभूतस्त्रीकृतोऽपि भेदोऽस्ति ।

**[इन्द्रौ]** इन्द्रश्च इन्द्राणी च ।

**[वरुणौ]** वरुणस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व०' (२।४।६२) ङी-आनन्ते च । वरुणश्च वरुणानी च ।

**[भवौ]** भवस्य भार्या । 'वरुणेन्द्र-रुद्र-भव०' (२।४।६२) ङी - आनन्ते च । भवश्च भवानी च ।

**[शर्वौ]** शर्वस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व०' (२।४।६२) ङी-आनन्ते च । शर्वश्च शर्वाणी च ।

**[रुद्रौ]** रुद्रस्य भार्या । 'वरुणेन्द्र-रुद्र०' (२।४।६२) ङी - आनन्ते च । रुद्रश्च रुद्राणी च ।

**[मृडौ]** मृडस्य भार्या । 'वरुणेन्द्र-रुद्र-भव-शर्व-मृडादान् चान्तः' (२।४।६२) ङी-आनन्ते च । मृडश्च मृडानी च, तन्मते एकशेषः ।।छ।।

**ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः** ।।३।१।१२७।।

**[ग्राम्याशिशुद्विशफसङ्घे]** ग्रामे भवाः = ग्राम्याः । 'ग्रामादीनञ् च' (६।३।९) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । न शिशवोऽशिशवः । 'नञत्' (३।२।१२५) न०→अ० । द्वौ शफौ खुरौ येषां ते = द्विशफाः । ग्राम्याश्च तेऽशिशवश्च = ग्राम्याशिशवः । ग्राम्याशिशवश्च ते द्विशफाश्च = ग्राम्याशिशुद्विशफाः । ग्राम्याशिशुद्विशफानां सङ्घः = ग्राम्याशिशुद्विशफसङ्घस्तस्मिन् ।

**[प्रायः]** प्रायस् । प्रथमा सि । 'अव्ययस्य' (३।२।७) सिलोपः ।

**[मेष्य इमाः]** मेषाश्च मेष(ष्य)श्च = मेष्यः ।

**[महिष्य इमाः]** महिषाश्च महिष्यश्च = महिष्यः, अनेन स्त्रीशेषः ।

**[इमे रुरवः]** रुरवश्चेमे रुरवश्चेमाः = इमे रुरव इत्यादिषु सर्वेषु 'पुरुषः स्त्रिया' (३।१।१२६) पुरुषशिष्यते ।

**[इमे मनुष्याः]** मनुष्यश्चेमा मनुष्याश्चेमे = इमे मनुष्याः ।

**[गोबलीवर्दम्]** गावश्च बलीवर्दाश्च = गोबलीवर्दम् ।

**[अजाऽविकम्]** अजश्च आ(अ)विश्च । 'यावादिभ्यः कः' (७।३।१५) कप्र० । समाहारद्वन्द्वमेतद्वाक्यम्, समाहारस्यैतल्लक्षणम्, समाहारे एकत्वं नपुंसकत्वं चैतल्लक्षणं सूत्रे-उदाहरणेषु च सर्वत्र ज्ञेयम् ।।छ।।

**क्लीबमन्येनैकं च वा** ।।३।१।१२८।।

**[एकं च वा]** एकमेकार्थं च समाहारं चेत्यर्थः, एकशेष इति चकाराद् वर्त्तते, पक्षे इतरेतरद्वन्द्वो भवति ।

**[शुक्लं शुक्लानि वा]** शुक्लं च शुक्लश्च शुक्ला च । शुक्लं अत्र त्रिङ्गत्रयेण वाच्यम् ।

**[शुक्ले]** शुक्लं च शुक्लं च = शुक्ले । अत्र क्लीबस्य क्लीबेन सह वाक्यम् । 'स्यादावसंख्येयः' (३।१।११९) एकशेषः ।

**[हिमहिमान्यौ]** हिम । महद्धिमं = हिमानी । 'यव-यवना-ऽरण्य-हिमाद् दोष-लिप्युरु-महत्त्वे' (२।४।६५) ङी-आन् चान्ते । हिमं च हिमानी च = हिमहिमान्यौ ।

**[अरण्यारण्यान्यौ]** अरण्य । महदरण्यं = अरण्यानी । 'यव-यवना-ऽरण्य-हिमाद् दोष-लिप्युरु-महत्त्वे' (२।४।६५) ङी-आनन्ते च । अरण्यं च अरण्यानी च । केवलं क्लीबाक्लीबभेदोऽस्त्यर्थभेदोऽपि (तेन) नैकशेषः ।।छ।।

**पुष्यार्थाद् भे पुनर्वसुः** ।।३।१।१२९।।

**[पुष्यार्थात्]** पुष्योऽर्थो यस्याऽसौ पुष्यार्थस्तस्मात् ।

**[उदितौ पुष्य-पुनर्वसू]** पुष्यश्च पुनर्वसू च ।

**[तिष्य-पुनर्वसू]** तिष्यश्च पुनर्वसू च ।

**[सिध्य-पुनर्वसू]** सिध्यश्च पुनर्वसू च । प्रथमा औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ऊत् । पुनर्वसुशब्दः सदा द्विवचनान्तः समासे एकार्थे वा ।

**[पुष्यपुनर्वसु]** पुष्यश्च पुनर्वसू च । प्रथमा सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[आर्द्रा-पुनर्वसवः]** आर्द्रा च पुनर्वसू च । प्रथमा जस् ।

**[पुष्यमघाः]** पुष्यश्च मघाश्च । प्रथमा जस् । मघ(घा)शब्दो बहुवचनान्तोऽप्यस्ति । पुष्येण चन्द्रयुक्तेन युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र०, "लुप् त्वप्रयुक्ते" अण्लोपः । पुष्ये जातः । 'जाते' (६।३।९८) अण्प्र० । 'बहुलाऽनुराधा-पुष्यार्थ-पुनर्वसु-हस्त-विशाखा-स्वातेर्लुप्' (६।३।१०७) अण्लोपः ।

**[पुष्यपुनर्वसवो माणवकाः]** पुनर्वसु । पुनर्वसुभ्यां चन्द्रयुक्ताभ्यां युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० "लुप् त्वप्रयुक्ते" अण्लोपः । पुनर्वस्वोश्च जात (?) (पुनर्वस्वोर्जातौ) । 卐 'जाते' (६।३।९८) अण्प्र० । 'बहुला-ऽनुराधा-पुष्यार्थ-पुनर्वसु-हस्त-विशाखा-स्वातेर्लुप्' (६।३।१०७) अण्लोपः ।

**[पुष्यपुनर्वसवो मुग्धाः]** पुष्यः पुनर्वसू येषां ते = पुष्यपुनर्वसवो मुग्धाः ॥छ॥

**विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः** ॥३।१।१३०॥

**[विरोधिनाम्]**+ विरोधो विद्यते येषां ते = विरोधिनः । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपस्तेषाम् ।

**[अद्रव्याणाम्]** 0 न द्रव्याणि = अद्रव्याणि । 'नञत्' (३।२।१२५) न०⟶अ०, तेषाम् ।

**[सुख-दुःखम्, सुख-दुःखे]** सुखं च दुःखं च, द्वितीये औ सर्वत्र ।

**[शीतोष्णम्]** शीतं च उष्णं च ।

**[जनन-मरणम्, जनन-मरणे]** जननं च मरणं च ।

**[लाभाऽलाभम्, लाभाऽलाभौ]** लाभश्च अलाभश्च ।

**[संयोगविभागम्, संयोगविभागौ]** संयोगश्च विभागश्च ।

**[रूप-रस-गन्ध-स्पर्शाः]** रूपश्च रसश्च गन्धश्च स्पर्शश्च । प्रथमा जस् ।

**[काम-क्रोधौ]** कामश्च क्रोधश्च । औ ।

**[सुखदुःखाविमौ ग्रामौ]** सुखं च दुःखं च, प्रथमा औ । इदम् प्रथमा औ । 'आ द्वेरः' (२।१।४१) म०⟶अ० । 'लुगस्यादेत्यपदे' (२।१।११३) अलोपः । 'दो मः स्यादौ' (२।१।३९) द०⟶म० । 'ऐदौत् सन्ध्यक्षरैः' (१।२।१२) औ ।

**[शीतोष्णे उदके]** शीतं च उष्णं च । प्रथमा औ । 'औरीः' (१।४।५६) ई । 'अवर्णस्येवर्णादि०' (१।२।६) ए ।

**[बुद्धि-सुख-दुःखानि]** बुद्धिश्च सुखं च दुःखं च । प्रथमा जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०⟶इ० । 'स्वराच्छौ'

---

P 卐 'भर्तु-सन्ध्यादेरण्' (६।३।८९) अण्प्र० ।

P + विरोधो विद्यते येषां तानि = विरोधीनि, तेषाम् ।

P 0 न विद्यते द्रव्यं प्रतिपाद्यतया येषां तानि, तेषाम् ।

(१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ॥छ॥

**अश्ववडव-पूर्वापरा-ऽधरोत्तराः ॥३।१।१३१॥**

**[अश्ववडवपूर्वापराऽधरोत्तराः]** अश्ववडवश्च पूर्वापरश्च अधरोत्तरश्च = अश्ववडवपूर्वापराऽधरोत्तराः ॥

**[अश्ववडवम्, अश्ववडवौ]** अश्वश्च वडवा च । "द्वन्द्वैकत्वा-ऽव्ययीभावौ क्रियाव्ययविशेषणे" "लिङ्गानुशासने" नपुंसकलिङ्गप्रकरणे श्लोक-९ इति वचनात् नपुंसकत्वम्, ततोऽश्ववडवं सिद्ध्यति, अश्ववडवौ न, अश्ववडवे इति स्यात्, अतो ह्रस्वपाठः ।

**[पूर्वापरम्, पूर्वापरे]** पूर्वा च अपरा च । 'क्लीबे' (२।४।९७) ह्रस्वत्वम् । द्वितीयेऽनेन ह्रस्वत् । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

**[अधरोत्तरम्, अधरोत्तरे]** अधरा च उत्तरा च । 'क्लीबे' (२।४।९७) ह्रस्वत्वम् । अनेन च विकल्पे ह्रस्वः । 'सर्वादयोऽस्यादौ' (३।२।६१) पुंवत् ।

**[हय-वडवे]** हयश्च वडवा च । प्रथमा औ । 'औता' (१।४।२०) ए ।

**[अजा-ऽश्व-वडवाः]** अजश्च अश्वश्च वडवा च । प्रथमा जस् ।

**[पूर्व-पश्चिमौ]** पूर्वश्च पश्चिमश्च ।

**[दक्षिणा-ऽपरौ]** दक्षिणश्चाऽपरश्च ।

**[अधर-मध्यमौ]** अधरश्च मध्यमश्च ।

**[उत्तर-दक्षिणौ]** उत्तरश्च दक्षिणश्च । प्रथमा औ ॥छ॥

**पशु-व्यञ्जनानाम् ॥३।१।१३२॥**

**[पशुव्यञ्जनानाम्]** पशवश्च व्यञ्जनानि च = पशुव्यञ्जनानि, तेषाम् ।

**[अश्वबलीवर्दम्, अश्वबलीवर्दौ]** अश्वश्च बलीवर्दश्च । विकल्पे औ ।

**[वृष्णिस्तभम्, वृष्णिस्तभौ]** वृष्णिश्च मेटकः, स्तभश्च वोत्कटः = वृष्णिस्तभौ ।

**[महाजोरभ्रम्, महाजोरभ्रौ]** महत् । अज । महांश्चासावजश्च । 'जातीयैकार्थेऽच्वेः' (३।२।७०) डाप्र०⟶आ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अल्लोपः । महाजश्च उरभ्रश्च । विकल्पे औ ।

**[दधिघृतम्, दधिघृते]** दधि च घृतं च । विकल्पे औ ।

**[शाकसूपम्, शाकसूपौ]** शाकश्च सूपश्च । विकल्पे औ ।

**[अश्वमहिषम्]** अश्वश्च महिषश्च = अश्वमहिषमित्यत्र 'नित्यवैरस्य' (३।१।१४१) इति नित्यमेकत्वविधिः ।

**[गो-नरौ]** गौश्च नरश्च । औ ।

**[दधि-वारिणी]** दधि च वारि च । औ । 'औरीः' (१।४।५६) ई । 'अनाम् स्वरे नोऽन्तः' (१।४।६४) नोऽन्तः ।

**[दध्युष्ट्रौ]** दधि च उष्ट्रश्च ॥छ॥

**तरु-तृण-धान्य-मृग-पक्षिणां बहुत्वे ॥३।१।१३३॥**

**[तरुतृणधान्यमृगपक्षिणाम्]** तरवश्च तृणानि च धान्यानि च मृगाश्च पक्षिणश्च = तरुतृणधान्यमृगपक्षिणः, तेषाम् ।

**[बहुत्वे]** बहूनां भावः । 'भावे त्व-तल्' (७।१।५५) त्वप्र०, तस्मिन् ।

**[धवा-ऽश्वकर्णम्, धवा-ऽश्वकर्णाः]** धवाश्च अश्वकर्णाश्च, विकल्पे सर्वत्र जस् ।

**[कुश-काशम्, कुश-काशाः]** कुशाश्च काशाश्च ।

**[मुञ्ज-वल्वजम्, मुञ्ज-वल्वजाः]** मुञ्जाश्च वल्वजाश्च ।

**[तिल-माषम्, तिल-माषाः]** तिलाश्च माषाश्च ।

**[व्रीहि-यवम्, व्रीहि-यवाः]** व्रीहयश्च यवाश्च ।

**[रुरु-पृषतम्, रुरु-पृषताः]** रुरवश्च पृषताश्च ।

**[ऋश्यैणम्, ऋश्यैणाः]** ऋश्याश्च एणाश्च ।

**[हंस-चक्रवाकम्, हंस-चक्रवाकाः]** हंसाश्च चक्रवाकाश्च ।

**[तित्तिरि-कपिञ्जलम्, तित्तिरि-कपिञ्जलाः]** तित्तिरि(र)यश्च कपिञ्जलाश्च ।

**[प्लक्ष-यवाः]** प्लक्षाश्च यवाश्च ।

**[गो-पृषताः]** गावश्च पृषताश्च । जस् न केवलं गो-पृषता इत्यत्र, अमृगैः पूर्वेण विकल्पो भवति, रुरवश्च पृषताश्च = रुरु-पृषता इत्यत्रापि पूर्वेण विकल्पो न भवति ।।छ।।

**सेनाङ्ग-क्षुद्रजन्तूनाम्** ।।३।१।१३४।।

**[सेनाङ्गक्षुद्रजन्तूनाम्]** सेनाया अङ्गानि = सेनाङ्गानि, क्षुद्राश्च ते जन्तवश्च = क्षुद्रजन्तवः, सेनाङ्गानि च क्षुद्रजन्तवश्च = सेनाङ्गक्षुद्रजन्तवस्तेषाम्, षष्ठी आम् ।

**[अश्वरथम्]** अश्वाश्च रथाश्च ।

**[रथिकाऽश्वारोहम्]** रथ । रथो विद्यते येषां ते । अस्याऽर्थे 'व्रीह्यादिभ्यस्तौ' (७।२।५) इकप्र० । रथिकाश्च अश्वारोहाश्च ।

**[यूकालिक्षम्]** यूकाश्च लिक्षाश्च ।

**[कीटपिपीलिकम्]** मत्कुणजातिरिति कीटाश्च पिपीलिकाश्च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[सादि-निषादिनौ]** सादी च निषादी च । औ ।

**[अश्व-रथौ]** अश्वश्च रथश्च ।

**[यूका-लिक्षे]** यूका च लिक्षा च । औ । 'औता' (१।४।२०) ए ।

**[हस्ति-मशकाः]** हस्तिनश्च मशकाश्च । प्रथमा जस् ।।छ।।

**फलस्य जातौ** ।।३।१।१३५।।

**[बदरा-ऽऽमलकम्]** बदराणि च आमलकानि च ।।छ।।

**अप्राणि-पश्वादेः** ।।३।१।१३६।।

**[अप्राणिपश्वादेः]** प्राणा विद्यन्ते येषां ते = प्राणिनः । 'अतोऽनेकस्वरात्' (७।२।६) इन्प्र० । पशुरादिर्येषां ते =

पश्चादयः । प्राणिनश्च पश्चादयश्च = प्राणिपश्चादयः । न प्राणिपश्चादिः = अप्राणिपश्चादिः, 卐 तस्मात् ।

**[युग-वरत्रम्]** युगं च वरत्रा च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[कुण्ड-बदरम्]** कुण्डं च बदरं च ।

**[तरुशैलम्]** तरुश्च शैलश्च इति वाक्यम्, न तु बहुवचनेन, अन्यथा प्लक्षयवा इतिवद् बहुवचनमेव स्यात् ।

**[विन्ध्य-हिमालयौ]** विन्ध्यश्च हिमालयश्च । औ ।

**[नन्दक-पाञ्चजन्यौ]** नन्दकश्च पाञ्चजन्यश्च । औ ।

**[आरा-शस्त्रि, आरा-शस्त्र्याविमे]** आरा च शस्त्री च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[ब्राह्मण-क्षत्रिय-विट्-शूद्राः, ब्राह्मण-क्षत्रिय-विट्-शूद्रम्]** ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्च । जस् ।

**[गो-महिषौ, गो-महिषम्]** गौश्च महिषश्च ।

**[दधि-घृते, दधि-घृतम्]** दधि च घृतं च ।

**[प्लक्ष-न्यग्रोधौ २]** प्लक्षश्च न्यग्रोधश्च । औ ।

**[कुश-काशौ २]** कुशश्च काशश्च । औ ।

**[व्रीहि-यवौ २]** व्रीहिश्च यवश्च ।

**[रुरु-पृषतौ २]** रुरुश्च पृषतश्च ।

**[हंस-चक्रवाकौ २]** हंसश्च चक्रवाकश्च ।

**[अश्व-रथौ २]** अश्वश्च रथश्च । औ ।

**[रूप-रस-गन्ध-स्पर्शाः]** रूपश्च रसश्च गन्धश्च स्पर्शश्च । जस् ।

**[उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन - प्रस(सा)रण-गमनानि]** उत्क्षेपणं च अपक्षेपणं च आकुञ्चनं च प्रसारणं च गमनं च । जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०→इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ॥छ॥

## **प्राणि-तूर्याङ्गाणाम्** ॥३।१।१३७॥

**[प्राणितूर्याङ्गाणाम्]** प्राणिनश्च तूर्याणि च = प्राणितूर्याणि । प्राणितूर्याणामङ्गानि = प्राणितूर्याङ्गानि(णि), तेषाम् । 'कवर्गैकस्वरवति' (२।३।७६) न०→ण० ।

**[इदं शिरो-ग्रीवम्]** शिरश्च ग्रीवा च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[इदं पाणि-पादम्]** पाणी च पादौ च ।

**[इदं कर्ण-नासिकम्]** कर्णौ च नासिका च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[इदं शङ्ख-पटहम्]** शङ्खश्च पटहश्च ।

**[इदं भेरी-मृदङ्गम्]** भेरी च मृदङ्गश्च ।

**[शाङ्खिक-मौरजिकम्]** शङ्खवादनं शिल्पं यस्य सः । 'शिल्पम्' (६।४।५७) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । मुरजवादनं शिल्पं यस्य सः । 'शिल्पम्' (६।४।५७) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१)

---

P 卐 तस्य ।

वृद्धिः । शाङ्खिकश्च मौरजिकश्च ।

**[मार्दङ्गिक-पाणविकम्]** मृदङ्गवादनं शिल्पं यस्य सः । 'शिल्पम्' (६।४।५७) इकण्प्र०—>इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । पणववादनं शिल्पं यस्य सः । 'शिल्पम्' (६।४।५७) इकण्प्र०—>इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । मार्दङ्गिकश्च पाणविकश्च ।

**[वीणावादक-परिवादकम्]** वीणावादकश्च परिवादकश्च ।

**[पाणि-गृध्रौ]** पाणिश्च गृध्रश्च = पाणिगृध्रौ ।

**[पाणि-पणवौ]** पाणी च पणवश्च ।

प्राण्यङ्गाप्राण्यङ्गा(ङ्गादि)संभे(द) पाणिपणवादिषु प्रयोगेषु एकत्वनिराकरणार्थमिति न तु सूत्रकरणात्, सूत्रकरणं तु व्यक्तिविवक्षायां चरितार्थं बहुवचनम् ।।छ।।

**चरणस्य स्थेणोऽद्यतन्यामनुवादे** ।।३।१।१३८।।

**[स्थेणः]** स्थाश्च इण् च = स्थेण्, तस्य ।

**[अद्यतन्याम्]** अद्य भवा । 'सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययात्' (६।३।८८) तनट्प्र०—>तन । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । अद्यतने विहिता विभक्तिरपि अद्यतनी, तस्याम् ।

**[अनुवादे]** 'वद व्यक्तायां वाचि' (९९८) वद्, अनुपूर्व० । अनुवदनम् । 'भावा-ऽकर्त्रोः' (५।३।१८) घञ्प्र०—>अ । 'ञ्णिति' (४।३।५०) उपान्त्यवृद्धिः, तस्मिन् ।

**[प्रत्यष्ठात् कठकालापम्]** स्था (३।१।४९) सूत्रवत्, प्रतिपूर्व० । अद्यतनी दि—>त् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'अड् धातोरादि०' (४।४।२९) अडागमः । 'पिबैति-दा-भू-स्थः सिचो लुप्, परस्मै न चेट्' (४।३।६६) सिज्लोपः । 'इवर्णादे०' (१।२।२१) य । 'स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि' (२।३।४०) स०—>ष० । 'तवर्गस्य श्चवर्ग० (१।३।६०) थ०—>ठ० । कठश्च कालापाश्च । 'क्लीबे' (२।४।९७) ह्रस्वः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[उदगात् कठ-कौथुमम्]** 'इंण्क् गतौ' (१०७५) इ, उत्पूर्व० । अद्यतनी दि—>त् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'अड् धातोरादि०' (४।४।२९) अडागमः । 'इणिकोर्गा' (४।४।२३) इ०—>गा० । 'पिबैति-दा-भू-स्थः सिचो लुप्०' (४।३।६६) सिज्लोपः । कठश्च कौथुमाश्च । 'क्लीबे' (२।४।९७) ह्रस्वः । प्रथमा सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[प्रत्यष्ठात् मौद-पैप्पलादम्]** मुदस्याऽपत्यम् । पिप्पलादस्याऽपत्यम् । 'ऋषि - वृष्ण्यन्धक-कुरुभ्यः' (६।१।६१) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । मौदेन-पिप्पलादेन प्रोक्तं वेदं विदन्त्यधीयते वा । 'मौदादिभ्यः' (६।३।१८२) अण्प्र० । तद्वेत्त्यधीते (६।२।११७) अण्प्र० । 'प्रोक्तात्' (६।२।१२९) अण्लोपः । मौदाश्च पैप्पलादाश्च । प्र० सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[उदगुस्तार्किक-वैयाकरणाः]** तार्किकाश्च वैयाकरणाश्च । जस् । 'इंण्क् गतौ' (१०७५) इ, उत्पूर्व० । अद्यतनी अन् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'इणिकोर्गा' (४।४।२३) इ०—>गा० । 'पिबैति०' (४।३।६६) सिज्लोपः । 'सिज्-विदोऽभुवः' (४।२।९२) अन्—>पुस्०—>उस्० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । 'अड् धातोरादि०' (४।४।२९) अट् ।

**[अगमन् कठ-कालापाः]** अम (३९२) - द्रम (३९३) - हम्म (३९४) - मीमृ (३९५) - 'गम्लृं गतौ' (३९६) गम् ।

---

P 0 अद्य भवोऽद्यतनः ।

ह्यस्तनी अन् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[अतिष्ठन् कठ-कालापाः]** स्था पूर्ववत् । ह्यस्तनी अन् । 'कर्त्तर्यनद्भ्यः शव्' (३।४।७१) शव् । 'श्रौति-कृवु-धिवु०' (४।२।१०८) तिष्ठ आदेशः । 'अड् धातोरादि०' (४।४।२९) अडागमः ।

**[कठ-कालापाः प्रत्यष्ठुः]** प्रति-स्था पूर्ववत् । अद्यतनी अन् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'पिबैति-दा-भू०' (४।३।६६) सिज्लोपः । 'सिज्-विदोऽभुवः' (४।२।९२) अन्०→पुस्० → उस्० । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । 'अड् धातोरादि०' (४।४।२९) अट् ।।छ।।

**अक्लीबेऽध्वर्युक्रतोः** ।।३।१।१३९।।

**[अक्लीबे]** न क्लीबं = अक्लीबम् । 'नञत्' (३।२।१२५) न०→अ०, तस्मिन् ।

**[अध्वर्युक्रतोः]** अध्वर्योः क्रतुः = अध्वर्युक्रतुः, तस्य ।

**[साह्ना-ऽतिरात्रम्]** अहन् । अह्नां समूहः = आह्नः । 'श्वादिभ्योऽञ्' (६।२।२६) अञ्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अनीना-ऽदट्यह्नोऽतः' (७।४।६६) अस्य लुक् । सह आह्नेन वर्त्तते = साह्नः । अतिक्रान्ता रात्रिः = अतिरात्रः । 'संख्यातैक-पुण्य-वर्षा-दीर्घाच्च रात्रेरत्' (७।३।११९) अत्समासान्तः । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । साह्नश्च अतिरात्रश्च ।

**[पौण्डरीका-ऽतिरात्रम्]** पौण्डरीकश्च अतिरात्रश्च ।

**[गवामयना-ऽऽदित्यानामयने]** आमीनातीति आमयः । 'अः' (उणा० २) अप्र० । आमयं करोतीति । 'णिज् बहुलं०' (३।४।४२) णिच्प्र०→इ । आमय्यतेऽनेनेति । 'करणा-ऽऽधारे' (५।३।१२९) अनट्प्र०→अन । 'णेरनिटि' (४।३।८३) णिच्लोपः । गवाना(मा)मयनं = गवामयनम् । 'स्वरे वाऽनक्षे' (१।२।२९) अव । न आमयनमनामयनम् । आदित्यानाम-नामयनं = आदित्यानामयनम् । गवामयनं च आदित्यानामयनं च = गवामयनाऽऽदित्यानामयने । औ । 'औरीः' (१।४।५६) ई ।

**[इषु-वज्रौ]** इषुश्च वज्रश्च ।

**[उद्भिद्-विलभिदौ]** उद्भिच्च व(वि)लभिच्च ।

**[दर्शपौर्णमासौ]** दृश्यतेऽनेनेति । 'व्यञ्जनाद् घञ्' (५।३।१३२) घञ्प्र०→अ । पूर्णो माश्चन्द्रो यस्यां सा = पूर्णमासी । 'पूर्णमासोऽण्' (७।२।५५) अण्प्र० । 'अणञेयेकण्-नञ्-स्नञ्-टिताम्' (२।४।२०) ङी । पूर्णमास्यां भवः । 'भर्तु-सन्ध्यादेरण्' (६।३।८९) अण्प्र० । दर्शश्च पौर्णमासश्च ।।छ।।

**निकटपाठस्य** ।।३।१।१४०।।

**[निकटपाठस्य]** निकटः पाठो यस्याऽसौ निकटपाठस्तस्य । अथवा नि-समीपे पाठो यस्य सः । 'सं-प्रोन्नेः संकीर्ण-प्रकाशा-ऽधिक-समीपे' (७।१।१२५) कटप्र०, तस्य ।

**[पदक-क्रमकम्]** पद । क्रम । पदं वेत्त्यधीते वा । क्रमं वेत्त्यधीते वा । 'पद-क्रम-शिक्षा-मीमांसा-साम्नोऽकः' (६।२।१२६) अकप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । पदकश्च क्रमकश्च = पदकक्रमकम् ।

**[क्रमक-वार्त्तिकम्]** वृत्तिमधीते । 'न्यायादेरिकण्' (६।२।११८) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आर् । 'अवर्णेवर्णस्य' (७।४।६८) इलोपः । क्रमकश्च वार्त्तिकश्च ।

**[चर्चापार-खण्डिकम्]** चर्चा 'पार कर्मसमाप्तौ' (१९०१) पार् । 'चुरादिभ्यो णिच्' (३।४।१७) णिच्प्र०→इ ।

चर्चा(र्चा) पारयतीति । 'अच्' (५।१।४९) अच्प्र०→अ । 'णेरनिटि' (४।३।८३) णिच्लोपः । खण्डं विद्यते यस्य । 'अतोऽनेकस्वरात्' (७।२।६) इकप्रः० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । चर्चापारश्च खण्डिकश्च ।

**[याज्ञिक-वैयाकरणौ]** यज्ञं वेत्ति । 'याज्ञिकौक्थिक-लौकायितिकम्' (६।२।१२२) इकण्प्र० । याज्ञिकानामाम्नायः । 'छान्दोगौक्थिक-याज्ञिक-बह्वृचाच्च धर्मा-ऽऽम्नाय-संघे' (६।३।१६६) ञ्यप्र०→य । याज्ञिक्यं यज्ञं वा वेत्त्यधीते वा । 'याज्ञिकश्च वैयाकरणश्च ।

**[पिता-पुत्रौ]** पिता च पुत्रश्च । 'पुत्रे' (३।२।४०) आ ।।छ।।

## नित्यवैरस्य ।।३।१।१४१।।

**[नित्यवैरस्य]** 卐 नित्यं वैरं यस्य सः = नित्यवैरस्तस्य ।

**[अहि-नकुलम्]** अहिश्च नकुलश्च ।

**[मार्जार-मूषिकम्]** मार्जारश्च मूष(षि)कश्च ।

**[ब्राह्मण-श्रमणम्]** ब्राह्मणश्च श्रव(म)णश्च ।

**[श्वा-वराहम्]** श्वा च वराहश्च । 'शुनः' (३।२।९०) दीर्घत्वम् ।

**[श्व-चण्डालम्]** श्वा च चण्डालश्च ।

**[अश्वमहिषम्]** अश्वश्च महिषश्च ।

**[काकोलूकम्]** काकश्च उलूकश्च ।

**[कौरवपाण्डवाः, कौरव-पाण्डवम्]** कुरु । कौरवाश्च पाण्डवाश्च ।

**[देवा-ऽसुराः, देवा-ऽसुरम्]** देवाश्च असुराश्च । राज्यापहारकृतमेषां वैरम् ।

**[श्वा-वराहं वैरम्]** श्वा च वराहश्च । 'आ द्वन्द्वे' (३।२।३९) आ ।

**[मार्जारमूषिकं वैरम्]** मार्जारश्च मूषिका च । 'क्लीबे' (२।४।९७) ह्रस्वः । सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**["दक्षिणाद् वामगमनं प्रशस्तं श्व-शृगालयोः"]** वामे गमनम् । श्वा च शृगालश्च = श्वशृगालौ, तयोः ।

**["विद्यते लोक औत्पत्तिको विरोधो यथा मार्जार-मूषिकयोः]** उत्पत्तौ भवः = औत्पत्तिकः । 'अध्यात्मादिभ्य इकण्' (६।३।७८) इकण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ।।छ।।

## नदी-देश-पुरां विलिङ्गानाम् ।।३।१।१४२।।

**[नदीदेशपुराम्]** नदी च देशश्च पुरश्च(पूश्च) = नदीदेशपुरस्तासाम् ।

**[विलिङ्गानाम्]** विविधं लिङ्गं यासां तास्तासाम् ।

**[उध्येरावति]** उज्झत्युदकमिति । 'कुप्य-भिद्योध्य-सिध्य-तिष्य-पुष्य-युग्या-ऽऽज्य-सूर्यं नाम्नि' (५।१।३९) उध्यनिपातः । इरा । इरा विद्यते यस्यां सा । 'नद्यां मतुः' (६।२।७२) मतुप्र०→मत् । 'अधातूदृदितः' (२।४।२) ङी०→ई । 'नाम्नि' (२।१।९५) इति म०→व० । उध्यश्च इरावती च ।

**[गङ्गा-शोणम्]** गङ्गा च शोणश्च ।

---

P 卐 नित्यमिति अनिमित्तं जातिनिबद्धं वैरं यस्य स, तस्य ।

**[विपाट्-चक्रभिदम्]** विपाट् च चक्रभिच्च । 'चवर्ग-द-ष-हः समाहारे' (७।३।९८) अत्समासान्तः ।

**[कुरु-कुरुक्षेत्रम्]** कुरवश्च कुरुक्षेत्रं च ।

**[कुरु-कुरुजाङ्गलम्]** कुरवश्च कुरुजाङ्गलं च ।

**[वरेन्द्री-मगधम्]** वरेन्द्री च मगधश्च ।

**[मथुरा-पाटलिपुत्रम्]** मथुरा च पाटलिपुत्रश्च (पुत्रं च) ।

**[काञ्ची-कन्यकुब्जम्]** काञ्ची च कन्यकुब्जं च ।

**[शौर्य-केतवतम्]** शौर्यं च नगरम्, केतवत(ता) च ग्रामः = शौर्यकेतवतम् । 'क्लीबे' (२।४।९७) ह्रस्वः । सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[श्रावस्ती-मध्यदेशम्]** श्रावस्ती च मध्यदेशश्च ।

**[मगध-श्रावस्ति]** मगधश्च श्रावस्ती च । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[कुक्कुट-मयूर्यौ]** कुक्कुटश्च मयूरी च । औ ।

**[गङ्गा-यमुने]** गङ्गा च यमुना च । औ । 'औता' (१।४।२०) ए ।

**[मद्र-केकयाः]** मद्राश्च केकयाश्च ।

**[मथुरा-तक्षशिले]** मथुरा च तक्षशिला च । औ । 'औता' (१।४।२०) ए ॥छ॥

**पात्र्यशूद्रस्य** ॥३।१।१४३॥

**[पात्र्यशूद्रस्य]** पात्र । पात्रमर्हति । 'दण्डादेर्यः' (६।४।१७८) यप्र० । अथवा 'पात्रात् तौ' (६।४।१८०) यप्र० । यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते = पात्रार्हाः । पात्र्यश्चासौ शूद्रश्च = 卐 पात्र्यशूद्रम्, तस्य ।

**[तक्षा-ऽयस्कारम्]** तक्षा च अयस्कारश्च ।

**[रजक-तन्तुवायम्]** रजकश्च तन्तुवायश्च ।

**[कुलाल-वरुटम्]** कुलालश्च वरुटश्च ।

**[किष्किन्ध-गब्दिकम्]** किष्किन्धि(न्ध)श्च गन्दि(गब्दि)कश्च ।

**[शकयवनम्]** शकश्च यवनश्च ।

**[जनङ्गम-बुक्कसाः]** जनङ्गमाश्च बुक्कसाश्च ।

**[ब्राह्मण-क्षत्रिय-विशः]** ब्राह्मणाश्च क्षत्रियाश्च विशश्च । जस् ॥छ॥

**गवाश्वादिः** ॥३।१।१४४॥

**[गवाश्वादिः]** गवाश्व आदिर्यस्याऽसौ । प्रथमा सि ।

**[गवाश्वम्]** गौश्च अश्वश्च । 'स्वरे वाऽनक्षे' (१।२।२९) अव ।

**[गवा-ऽविकम्]** अविरेव = अविकः । 'यावादिभ्यः कः' (७।३।१५) कप्र० । गौश्च अविकश्च ।

---

P 卐 पात्र्यशूद्रस्तस्य ।

[गवैडकम्] गौश्च ऐ(ए)डकश्च । 'स्वरे वाऽनक्षे' (१।२।२९) अव ।

[अजा-ऽविकम्] अजा च अविकश्च ।

[अजैडकम्] अजा च एडकश्च ।

[कुब्ज-वामनम्] कुब्जश्च वामनश्च ।

[कुब्ज-कैरातम्] कुब्जश्च कैरातश्च ।

[पुत्र-पौत्रम्] पुत्रश्च पौत्रश्च ।

[श्व-चण्डालम्] श्वा च चण्डालश्च ।

[स्त्री-कुमारम्] स्त्री च कुमारश्च ।

[दासी-माणवकम्] दासी च माणवकश्च ।

[शाटी-पच्छिकम्] शाटी च पच्छिकश्च (पच्छिका च) ।

[उष्ट्र-खरम्] उष्ट्रश्च खरश्च ।

[उष्ट्र-शशम्] उष्ट्रश्च शशश्च ।

[मूत्र-पुरीषम्] मूत्रं च पुरीषश्च (षं च) ।

[यकृन्मेदः] यकृच्च मेदश्च ।

[मांस-शोणितम्] मांसं च शोणितं च ।

[दर्भ-शरम्] दर्भश्च शरश्च ।

[दर्भ-पूतीकम्] दर्भश्च पूतीकश्च ।

[अर्जुन-पुरुषम्] अर्जुनश्च पुरुषश्च ।

[तृणोलपम्] तृणानि च उलुपश्च (उलपानि च) ।

[कुडी-कुडम्] कुडी च कुडश्च ।

[दासी-दासम्] दासी च दासश्च ।

[भागवती-भागवतम्] भागवती च भागवतश्च ।

[गो-ऽश्वौ, गो-ऽश्वम्] गौश्च अश्वश्च । 'एदोतः पदान्तेऽस्य लुक्' (१।२।२७) अलोपः ।

[गो-अश्वौ, गो-अश्वम्] वाऽत्यसन्धिः (१।२।३१) विकल्पेऽसन्धिः ।

[गो-ऽविकौ, गो-ऽविकम्] गौश्च अविकश्च = गोऽविकौ, गोऽविकम् ।

[गवेलकौ, गवेलकम्] गौश्च एलकश्च । औ । सि-अम् ।।छ।।

**न दधिपयआदिः ।।३।१।१४५।।**

[दधिपयआदिः] दधिपय आदिर्यस्याऽसौ ।

[दधि-पयसी] दधि च पयश्च = दधिपयसी । 'पशु-व्यञ्जनानाम्' (३।१।१३२) इति प्राप्त्यामपि इतरेतरो द्वन्द्वः ।

२८

**[सर्पि-र्मधुनी]** सर्पिश्च मधु च । औ । 'औरीः' (१।४।५६) ई । 'अनाम्स्वरे नोऽन्तः' (१।४।६४) नोऽन्तः ।

**[मधु-सर्पिषी]** मधु च सर्पिश्च । औ । 'औरीः' (१।४।५६) ई ।

**[हरि-वासवौ]** हरिश्च वासवश्च ।

**[ब्रह्म-प्रजापती]** ब्रह्मा च प्रजापतिश्च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ई ।

**[शिव-वैश्रवणौ]** शिवश्च वैश्रवणश्च । विश्रवणस्य (विश्रवसः) अपत्यम् । 'णश्च विश्रवसो विश्लुक् च वा' (६।१।६५) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः वै । अवर्णेवर्णस्य (७।४।६८) अलोपः ।

**[स्कन्द-विशाखौ]** स्कन्दश्च विशाखश्च । औ ।

**[परिजा-कौशिकौ]** 卐 कुश(शिक)स्याऽपत्यम् । 'विदा०' (६।१।४१) अञ्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । परिजाश्च(जा च) कौशिकश्च ।

**[प्रवर्ग्या-ऽपसदौ]** प्रवर्ग्यश्च अपसदश्च ।

**[आद्यवसाने]** आदिश्च अवसानं च । औ । 'औरीः' (१।४।५६) ई ।

**[सूर्या-चन्द्रमसौ]** सूर्यश्च चन्द्रमस(मा)श्च । 'वेदसहश्रुताऽवायुदेवतानाम्' (३।२।४१) आ ।

**[मित्रा-वरुणौ]** मित्रश्च वरुणश्च । 'वेदसहश्रुताऽवायुदेवतानाम्' (३।२।४१) आ ।

**[अग्नी-षोमौ]** अग्निश्च सोमश्च । 'ईः षोम-वरुणेऽग्नेः' (३।२।४२) ई ।

**[सोमा-रुद्रौ]** सोमश्च रुद्रश्च । 'वेदसहश्रुताऽवायुदेवतानाम्' (३।२।४१) आ ।

**[नारद-पर्वतौ]** नारदश्च पर्वतश्च ।

**[खण्डा(ण्ड)मर्कौ]** खण्डश्च मर्कश्च ।

**[नर-नारायणौ]** नरश्च नारायणश्च ।

**[राम-लक्ष्मणौ]** रामश्च लक्ष्मणश्च ।

**[भीमा-ऽर्जुनौ]** भीमश्च अर्जुनश्च ।

**[कम्बला-ऽश्वतरौ]** कम्बलश्च अश्वतरश्च ।

**[माता-पितरौ]** माता च पिता च ।

**[पिता-पुत्रौ]** पिता च पुत्रश्च । 'पुत्रे' (३।२।४०) आ ।

**[श्रद्धा-मेधे]** श्रद्धा च मेधा च । औ । 'औता' (१।४।२०) ए ।

**[शुक्ल-कृष्णे]** शुक्लं च कृष्णं च । औ । 'औरीः' (१।४।५६) ई । 'अवर्णस्ये०' (१।२।६) ए ।

**[इध्मा-बर्हिषी]** इध्मं च बर्हिश्च । औ । 'औरीः' (१।४।५६) ई । 'नाम्यन्तस्था०' (२।३।१५) स०→ष० ।

**[ऋक्-सामे]** ऋक् च साम च ।

**[वाङ्-मनसे]** वाक् च मनश्च । 'ऋक्सामर्ग्यजुष-धेन्वनडुह-वाङ्मनसा०' (७।३।७९) अत्समासान्तः । औ । 'औरीः' (१।४।५६) ई । 'अवर्णस्ये०' (१।२।६) ए ।

---

卐 विदादिगणे कुशिक अस्ति ।

**[याज्या-ऽनुवाक्ये]**+ याज्यश्च अनुवाक्यं च ।

**[दीक्षा-तपसी]** दीक्षा च तपश्च ।

**[श्रद्धा-तपसी]** श्रद्धा च तपश्च ।

**[मेधा-तपसी]** मेधा च तपश्च ।

**[अध्ययन-तपसी]** अध्ययनं च तपश्च ।

**[उलूखल-मुश(स)ले]** उलूखलं च मुसलं च । औ । 'औरीः' (१।४।५६) ई ।

**[चण्डाल-मृतपादयः]** चण्डालश्च मृतपश्च, चण्डालमृतपा(प) आदिर्येषां ते ॥छ॥

**संख्याने** ॥३।१।१४६॥

**[संख्याने]** संख्यायते येन तत् = संख्यानम्, तस्मिन् ।

**[दश गो-महिषाः]** दशन् जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । गावश्च महिषाश्च । जस् ।

**[एतावन्ति दधि-घृतानि]** एतद् । एतत्परिमाणमेषाम् । 'यत्-तदेतदो डावादिः' (७।१।१४९) डावतुप्र०→आवत् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अल्लोपः । जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० । 'धुटां प्राक्' (१।४।६६) नोऽन्तः । दधीनि च घृतानि च । जस् । 'नपुंसकस्य शिः' (१।४।५५) शि०→इ० । 'स्वराच्छौ' (१।४।६५) नोऽन्तः । 'नि दीर्घः' (१।४।८५) दीर्घः ।

**[बहवः प्लक्ष-न्यग्रोधाः]** प्लक्षाश्च न्यग्रोधाश्च ।

**[दश हस्त्यश्वाः]** दशन् प्र०जस् । 'डतिष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । हस्तिनश्च अश्वाश्च ।

**[शतं यूका-लिक्षाः]** यूकाश्च लिक्षाश्च ।

**[तावन्ति बदरा-ऽऽमलकानि]** तद् । तत्परिमाणमेषाम् । 'यत्-तदेतदो-डावादिः' (७।१।१४९) डावतुप्र०→आवत् । 'डित्यन्त्यस्वरादेः' (२।१।११४) अल्लोपः । प्र० जस् । 'नपुंसकस्य शिः' (१।४।५५) शि० । 'धुटां प्राक्' (१।४।६६) नोऽन्तः । बदर्याः फलम् । 'हेमादिभ्योऽञ्' (६।२।४५) अञ्प्र० । बदराणि च आमलकानि च ।

**[बहवः पाणि-पादाः]** 卐 पाणी च पादौ च । प्र० जस् ।

**[कति मार्दङ्गिक-पाणविकाः]** किम् । का परिमाणमेषां कति । 'यत्-तत्-किमः संख्याया डतिर्वा' (७।१।१५०) डतिप्र० →अति । 'डित्यन्त्यस्वरादेः' (२।१।११४) इम्लोपः । जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । मृदङ्ग । मृदङ्गवादनं शिल्पमेषां ते । 'शिल्पम्' (६।४।५७) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । पणव । पणववादनं शिल्पमेषां ते । 'शिल्पम्' (६।४।५७) इकण्प्र०→इक । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । मार्दङ्गिकाश्च पाणविकाश्च ।

**[उदगुर्दशेमे कठ-कालापाः]** 'इंण्क् गतौ' (१०७५) इ, उत्पूर्व० । अद्यतनी अन् । 'सिजद्यतन्याम्' (३।४।५३) सिच् । 'पिबैति-दा-भू-स्थः सिचो लुप् परस्मै न चेट्' (४।३।६६) सिज्लोपः । 'इणिकोर्गा' (४।४।२३) गा । 'सिज्-विदोऽभुवः' (४।२।९२) पुस्आदेशः→उस् । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । 'अड् धातोरादि०' (४।४।२९) अडागमः । कठाश्च कालापाश्च । प्र० जस् ।

---

\+ श० म० न्या० - याज्या च अनुवाक्या च ।  P 卐 पाणयश्च पादाश्च ।

**[द्वावर्का-ऽश्वमेधौ]** द्वि । औ । 'आ द्वेरः' (२।१।४१) इ०→अ० । 'ऐदौत् सन्ध्यक्षरैः' (१।२।१२) औ । अर्कश्च अश्वमेधश्च । औ ।

**[द्वादश पदक-क्रमकाः]** द्वि । दशन् । द्वाभ्यामधिका दश । 'द्वित्र्यष्टानां द्वा-त्रयोऽष्टाः प्राक् शतादनशीति-बहुव्रीहौ' (३।२।९२) "द्वा" आदेशः । प्र० जस् । 'डतिष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । पदकश्च क्रमकश्च । प्र० जस् ।

**[द्वौ गङ्गा-शोणौ]** गङ्गा च शोणश्च ।

**[पञ्च तक्षा-ऽयस्काराः]** पञ्चन् । प्र०जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । तक्षा च (तक्षाणश्च) अयस्काराश्च ।

**[इयन्तो गवा-ऽश्वाः]** इदम् । इदं परिमाणमेषां ते । 'इदं-किमोऽतुरियु-कियु-चास्य' (७।१।१४८) अतुप्र० - इयादेशः । जस् । 'ऋदुदितः' (१।४।७०) नोऽन्तः । गावश्च अश्वाश्च । 'गोर्नाम्न्यवोऽक्षे' (१।२।२८) (?) ('स्वरे वाऽनक्षे' (१।२।२९) अव) । प्र० जस् ।।छ।।

**वाऽन्तिके ।।३।१।१४७।।**

**[अन्तिके]** अन्त । अन्तोऽस्याऽस्तीति । 'अतोऽनेकस्वरात्' (७।२।६) इकप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । सप्तमी ङि ।

**[उपदशं गो-महिषम्]** उपदशमित्यत्र 'प्रमाणी-संख्या०' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । गौश्च महिषश्च ।।छ।।

**प्रथमोक्तं प्राक् ।।३।१।१४८।।**

**[प्रथमोक्तम्]** 卐 प्रथमया व(उ)क्तं = प्रथमोक्तम् ।

**[आसन्नदशाः]** आसन्ना दश येषां ते । 'प्रमाणी-संख्या०' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्लोपः । जस् ।

**[सप्तगङ्गम्]** सप्तानां गङ्गानां समाहारः । 'संख्या समाहारे' (३।१।२८) इत्यनेनाऽव्ययीभावः । 'क्लीबे' (२।४।९७) ह्रस्वः । 'अमव्ययीभावस्याऽतोऽपञ्चम्याः' (३।२।२) अम् । सप्त गङ्गा समाहृता वा ।

**[ऊरीकृत्य]** ऊरीकरणं पूर्वम् । 'प्राक्काले' (५।४।४७) क्त्वाप्र०→त्वा । 'अनञः क्त्वो यप्' (३।२।१५४) यप् । 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः ।

**[कष्टश्रितः]** कष्टं श्रितः ।

**[शङ्कुलाखण्डः]** शङ्कुलया खण्डः ।

**[यूपदारु]** यूपाय दारु ।

**[वृकभयम्]** वृकाद्भयम् ।

**[राजपुरुषः]** राज्ञः पुरुषः ।

**[अक्षशौण्डः]** अक्षेषु शक्तः शौण्डः ।

**[नीलोत्पलम्]** नीलं च तदुत्पलं च ।

---

P 卐 प्रथमया उच्यन्ते स्म ।

**[पञ्चाम्राः]** पञ्च च ते आम्राश्च ।

प्रथमया प्रथमान्तेन पदेन यदुक्तं निर्दिष्टं तद् इति कोऽर्थः ? 'नाम्नः प्रथमैक-द्वि-बहौ' (२।२।३१) - 'गौणात् समया०' (२।२।३३)-'सिद्धौ तृतीया' (२।२।४३) - 'चतुर्थी' (२।२।५३) - 'पञ्चम्यपादाने' (२।२।६९) - 'अज्ञाने ज्ञः षष्ठी' (२।२।८०) - 'सप्तम्यधिकरणे' (२।२।९५) एतेषु पदेषु या(ये) या(ये) प्रथमा-द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमीपदा उक्तास्तेषां पुरतः प्रथमैकवचनं सि यद् दीयते तत् प्रथमान्तं यतो विभक्त्यन्ताः पदाः इति वचनम्, तेन प्रथमान्तेन यदुक्तं (तत्) प्रथमोक्तमिति भावार्थः ।।छ।।

## राजदन्तादिषु ।।३।१।१४९।।

**[राजदन्तादिषु]** राजदन्त आदिर्येषां ते = राजदन्तादयस्तेषु ।

卐 **[सिक्तसंसृष्टम्]** 'षिचींत् क्षरणे' (१३२१) षिच् । 'षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः' (२।३।९८) सिच् । सिच्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'क्तेऽनिटश्च-जोः०' (४।१।१११) च०→क० (?) ('च-जः क-गम्' (२।१।८६) च० →क०) । सम् 'सृजीं(जं)त् विसर्गे' (१३४९) सृज् । संसृज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यज-सृज-मृज०' (२।१।८७) ज०→ष० । 'तवर्गस्य०' (१।३।६०) त०→ट० । पूर्वं संसृष्टं पश्चात् सिक्तम् ।

**[भृष्टलुञ्चितम्]** 'भ्रस्जींत् पाके' (१३१६) भ्रस्ज् । भ्र(भृ)ज्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'ग्रह-व्रस्च-भ्रस्ज-प्रच्छः' (४।१।८४) य्वृत् । 'तृतीयस्तृतीय-चतुर्थे' (१।३।४९) स०→द० । 'तवर्गस्य०' (१।३।६०) द०→ज० । 'यज-सृज-मृज०' (२।१।८७) ज०→ष० । तवर्गस्य० (१।३।६०) त०→ट० । पूर्वं लुञ्चितं पश्चाद् भृष्टम् ।

**[नग्नमुषितम्]** पूर्वं मुषितं पश्चान्नग्नम् ।

**[अवक्लिन्नपक्वम्]** पूर्वं पक्वं पश्चादवक्लिन्नम् ।

**[अर्पितोतम्]** 'वेंग् तन्तुसन्ताने' (९९२) वे । 'आत् सन्ध्यक्षरस्य' (४।२।१) वा । ऊयते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यजादि-वचेः किति' (४।१।७९) य्वृत् व०→उ० । पूर्वमुतं पश्चादर्पितम् ।

**[उप्तगाढम्]** पूर्वं गाढं पश्चादुप्तम् ।

**[उत्तमर्णः]** ऋणे उत्तमः ।

**[तन्दुल-किण्वम्]** तन्दुलं च किण्वं च । किण्वं-सुरोपकरणद्रव्यम् ।

+**[चित्ररथवाह्लीकौ]** चित्ररथश्च वाह्लीकश्च ।

**[स्नातक-राजानौ]** स्नातकश्च राजा च ।

**[उशीरबीज-शिञ्जास्थम्]** उसी(शी)रबीजश्च* सिं(शिं)जास्थश्च ।

**[आरद्वायनि-चान्धनि]**卐卐 आरद्वायनि च चान्धनि च । प्र० सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[अधरोष्ठम्]** अधरश्च ओष्ठश्च ।

---

卐 बृहद्वृत्तौ - सिक्तसंमृष्टम् ।

卐卐 श म० न्या० - आरट्वायनिश्च चान्धनिश्च ।

\+ श० म० न्या० - चित्ररथवाल्हीकौ इति - चित्ररथो राजविशेष एव वाल्हीकपदसान्निध्यात्, वाल्हीको नाम देशः, तस्य राजापि वाल्हीकः । यद्यपि चित्ररथो नाम गन्धर्वराजः पुराणादिषु प्रसिद्धः, परमिह स न ग्रहीतव्यस्तस्य राज्ञा सह सहचरितत्वस्याप्रसिद्धत्वात् ।

* श० म० न्या० - शिञ्जास्थमिति तालव्यादेः स्थाने सिञ्जास्थम् - सिञ्जाश्वत्थम् इति द्वौ दनयादी द्वन्द्वौ पठ्येते ।

**[वैकारिमतगाजवाजम्]** विकारिमतस्याऽपत्यम् । 'ऋषि-वृष्ण्वन्धक-कुरुभ्यः' (६।१।६१) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । गजवाजस्येदम् । 'तस्येदम्' (६।३।१६०) अण्प्र० । वैकारिमतश्च गाजवाजश्च ।

**[गो(गौ)पालिधान-पूलासम्]** गो(गौ)पालिदा(धा)नश्च पूलाश(स)श्च ।

**[कुरण्डस्थल-पूलासम्]** कुरण्डस्थलं च पूलाश(स)श्च ।

**[दार-जारौ]** दारश्च जारश्च । औ । "धर्मप्रजासंपत्ते(न्ने) दारे नान्यं कुर्वीत" इति वाक्यदर्शनात् ।

**[विष्वक्सेनाऽर्जुनौ]** विष्वक्सेनश्च अर्जुनश्च ।

**[शूद्रार्यौ]** शूद्रश्च अर्यश्च ।

**[विषयेन्द्रियाणि]** विषयाश्च इन्द्रियाणि च ।

**[गवाश्वौ]** गजश्च(गौश्च) अश्वश्च ।

**[अवन्त्यश्मकाः]** अवन्त्य(तय)श्च अश्मकाश्च । जस् ।

**[चित्रा-स्वाती माणविके]**+ चित्रया चन्द्रयुक्तः कालोऽपि चित्रा । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० । 'बहुलाऽनुराधा-पुष्यार्थ-पुनर्वसु-हस्त-विशाखा-स्वातेर्लुप्' (६।३।१०७) अण्लोपः (?) ('चित्रा-रेवती०' (६।३।१०८) अण्लोपः )। स्वात्या चन्द्रयुक्तया युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० । 'बहुलाऽनुराधा० (६।३।१०७) अण्लोपः । चित्रा च स्वातिश्च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ई ।

**[केशश्मश्रु]** केशाश्च श्मश्रूणि च । प्र० सि । 'अनतो लुप्' (१।४।५९) सिलोपः ।

**[भार्या-पती]** भार्या च पतिश्च ।

**[पुत्र-पती]** पुत्रश्च पतिश्च ।

**[स्वसृ-पती]** स्वसा च पतिश्च ।

**[जाया-पती, जम्पती]** जाया च पतिश्च । गणपाठज्जायाशब्दस्य जम्भावश्च विकल्पे निपात्यते ।

**[पुत्र-पशू]** पुत्रश्च पशुश्च । औ ।

**[शिरो-जानु]** शिरश्च जानु च ।

**[नर-नारायणौ]** नरश्च नारायणश्च ।

**[सोमरुद्रौ]** सोमश्च रुद्रश्च ।

**[कुबेर-केशवौ]** कुबेरश्च केशवश्च । औ ।

**[काक-मयूरौ]** काकश्च मयूरश्च ।

**[उमा-महेश्वरौ]** उमा च महेश्वरश्च ।

**[पाण्डुधृतराष्ट्रौ]** पाण्डुश्च धृतराष्ट्रश्च । औ ।

**[विष्णुवासवौ]** विष्णुश्च वासवश्च । औ । अनेन सर्वत्र पूर्वनिपातः ।

**[पुरुषोत्तमः, उत्तमपुरुषः]** पुरुषश्चासावुत्तमश्च ।

---

+ श० म० न्या० - चित्रायां जाता चित्रा, स्वात्यां जाता स्वातिः, ते च माणविके इति चित्रास्वाती ।

**[मध्यगृहम्, गृहमध्यम्]**+ मध्यश्चासौ गूहश्च (गृहाश्च-गृहं च) ।

**[अधरबिम्बम्, बिम्बाधरः]** अधरो बिम्बमिव ।

**[ओष्ठबिम्बम्, बिम्बोष्ठः]** ओष्ठे बिम्बमिव । 'उपमेयं व्याघ्राद्यैः साम्यानुक्तौ' (३।१।१०२) समासः ।।छ।।

**विशेषण-सर्वादि-संख्यं बहुव्रीहौ ।।३।१।१५०।।**

**[विशेषणसर्वादिसंख्यम्]** सर्व आदिर्यस्याऽसौ सर्वादिः । 卐 विशेषणं च सर्वादिश्च संख्या च = विशेषणसर्वादिसंख्यम् । 'क्लीबे' (२।४।९७) ह्रस्वः ।

**[चित्रगुः]** चित्रा गौर्यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६) ह्रस्वः ।

**[शबलगुः]** शबला गौर्यस्याऽसौ । 'गोश्चान्ते०' (२।४।९६). ह्रस्वः । 'परतः स्त्री पुम्वत्०' (३।२।४९) पुंवद्भावः ।

**[कण्ठेकालः]** कण्ठे कालोऽस्य सः ।

**[उरसिलोमा]** उरसि लोमान्यस्य सः ।

**[उदरेमणिः]** उदरे मणिर्यस्य सः । त्रिषूदाहरणेषु 'उष्ट्रमुखादयः' (३।१।२३) समासः ।

**[सर्वशुक्लः]** सर्वं शुक्लमस्य सः ।

**[सर्वकृष्णः]** सर्वं कृष्णमस्य सः ।

**[सर्वसारः]** 'सृं गतौ' (२५) सृ । सरतीति । 'सर्त्तेः' स्थिर-व्याधि-बल-मत्स्ये' (५।३।१७) घञ्प्र०→अ । 'नामिनोऽकलि-हलेः' (४।३।५१) वृद्धिः आर् । सर्वं सारमस्य सः ।

**[सर्वलघुः]** सर्वो लघुरस्य सः ।

**[विश्वदेवः]** विश्वे देवाः सन्ति ।

**[विश्वामित्रः]** विश्वे मित्राणि सन्ति ।

**[उभयचेतनः]** उभये चेतने यस्य सः ।

**[द्विशुक्लः]** द्वौ शुक्लौ गुणावस्य सः ।

**[चतुर्ह्रस्वः]** चतुर्षु स्थानेषु ह्रस्वः ।

**[पञ्चदीर्घः]** पञ्चसु स्थानेषु दीर्घः ।

**[षडुन्नतः]** षट्सु स्थानेषु उन्नतः ।

**[सप्तरक्तः]** सप्तसु स्थानेषु रक्तः ।

**[त्र्यन्यः]** त्रिभ्योऽन्यः ।

**[द्वियुष्मत्कः]** द्वौ युष्मदीयौ यस्य सः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[द्व्यस्मत्कः]** द्वावस्मदीयौ यस्य सः । 'शेषाद् वा' (७।३।१७५) कच्प्र०→क ।

**[उपसर्वम्]** सर्वेषामुपसमीपम् ।।छ।।

---

\+ श० म० न्यासानुसन्धाने - गृहस्य मध्यम् ।

P 卐 विशेषणश्च ।

**क्ताः ॥३।१।१५१॥**

**[कृतभव्यकटः]** भव्यश्चासौ कटश्च । कृतो भव्यकटोऽनेन इति कृतभव्यकटः । भव्य इति विशेषणम्, विशेषणं पूर्वसूत्रेण पूर्वं निपतति परं बाध्यते ।

**[कृतविश्वः]** कृतं विश्वमनेन ।

**[कृतप्रियः]** कृतः प्रियोऽनेन सः = कृतप्रियः ॥छ॥

**जाति-काल-सुखादेर्नवा ॥३।१।१५२॥**

**[जातिकालसुखादेः]** सुखमादिर्यस्याऽसौ सुखादिः । जातिश्च कालश्च सुखादिश्च = जातिकालसुखादिस्तस्मात् ।

**[शाङ्गरजग्धी, जग्धशाङ्गरा]** 'अदं भक्षणे' (१०५९) अद् । अद्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'यपि चाऽदो जग्ध्' (४।४।१६) जग्ध् । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'धुटो धुटि स्वे वा' (१।३।४८) धलोपः । शाङ्गरो जग्धोऽनया । 'अनाच्छादजात्यादेर्नवा' (२।४।४७) ङी ।

**[पलाण्डुभक्षिती, भक्षितपलाण्डुः]** पलाण्डुर्भक्षितोऽनया सा । 'अनाच्छादजात्यादेर्नवा' (२।४।४७) ङी ।

**[पाणिगृहीती, गृहीतपाणिः]** पाणिर्गृहीतोऽनया सा । जातिविवक्षायां 'अनाच्छादजात्यादेर्नवा' (२।४।४७) ङी । अन्यथा 'पाणिगृहीतीति' (२।४।५२) (ङी) प्राप्नोति ।

**[कटकृतः, कृतकटः]** कृतः कटोऽनेन ।

**[आहूतब्राह्मणः]** आहूतो ब्राह्मणो येन सः ।

**[सेवितक्षत्रियः]** सेवितः क्षत्रियो येन सः ।

**[तर्पितदाक्षिः]** दक्षस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । तर्पितो दाक्षिर्येन सः ।

卐 **[प्रीणितकटः]** 'प्रींग्श् तृप्ति-कान्त्योः' (१५१०) प्री । प्रीणन्तं प्रयुङ्क्ते । 'प्रयोक्तृव्यापारे णिग्' (३।४।२०) णिग्प्र० →इ । 'धूग्-प्रीगोर्नः' (४।२।१८) न । प्रीण्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र०→त । 'स्ताद्यशितोऽत्रोणादेरिट्' (४।४।३२) इट् । 'णेरनिटि' (४।३।८३) णिग्लोपः । प्रीणितः कटो येन सः ।

**[मासयाता, यातमासा]** मासो यातोऽस्याः सा ।

**[मासगतः, गतमासः]** मासो गतोऽस्याः सा (अस्य सः) ।

सुखादयो दश क्यङ्विधौ निर्दिष्टाः-

**[सुखयाता, यातसुखा]** सुखं यातमस्याः सा ।

**[हीनदुःखा, दुःखहीना]** दुःखं हीनमस्याः सा ।

**[तृप्रोत्पन्ना, उत्पन्नतृप्रा]** + तृप्र उत्पन्नो यस्याः सा ॥छ॥

**आहिताग्न्यादिषु ॥३।१।१५३॥**

**[आहिताग्न्यादिषु]** आहितोऽग्निर्येन सः । आहिताग्निरादिर्येषां ते, तेषु ।

---

卐 बृहद्वृत्तौ - प्रीणितकठः ।

+ श० म० न्यासानुसन्धाने - उत्पन्नं तृप्रं दुःखमस्याः ।

[जातपुत्रः, पुत्रजातः] जातः पुत्रो यस्य सः ।

[जातदन्तः, दन्तजातः] जाता दन्ता यस्य सः ।

[जातश्मश्रुः, श्मश्रुजातः] जातं श्मश्रु यस्य सः ।

[पीततैलः, तैलपीतः] पीतं तैलं येन सः ।

[पीतघृतः, घृतपीतः] पीतं घृतं येन सः ।

[पीतमद्यः, मद्यपीतः] पीतं मद्यं येन सः ।

[पीतविषः, विषपीतः] पीतं विषं येन सः ।

[ऊढभार्यः, भार्योढः] ऊढा भार्या येन सः ।

[गतार्थः, अर्थगतः] गतोऽर्थो यस्य सः ।

[छिन्नशीर्षः, शीर्षच्छिन्नः] छिन्नं शीर्षं यस्य सः ।

[पीतदधिः, दधिपीतः] पीतं दधि येन सः ।

अनेन क्तान्तं नाम विकल्पे निपतति ।।छ।।

**प्रहरणात्** ।।३।१।१५४।।

[प्रहरणात्] प्रह्रियतेऽनेनेति प्रहरणम्, तस्मात् ।

[कलितप्रहरणः, प्रहरणकलितः] कलितं प्रहरणमनेन सः ।

[उत्खातखड्गः, खड्गोत्खातः]卐 उत्खातं खड्गं येन सः ।

[आकृष्टधन्वा, धनुराकृष्टः] आकृष्टं धनुरनेन सः । 'धनुषो धन्वन्' (७।३।१५८) अत्समासान्तः-धन्वनादेशः । प्रथमा सि । 'नि दीर्घः' (१।४।८५) दीर्घत्वम् ।

[उद्यतमुश(स)लः, मुश(स)लोद्यतः] उद्यतं मुसलं येन सः ।।छ।।

**न सप्तमीन्द्वादिभ्यश्च** ।।३।१।१५५।।

[इन्द्वादिभ्यः] इन्दुरादिर्येषां ते = इन्द्वादयस्तेभ्यः ।

[चन्द्रमौलिः] चन्द्रो मौलौ यस्य सः ।

[शशिशेखरः] शशी शेखरे यस्य सः ।

[पद्मनाभः] पद्मं नाभावस्य सः ।

[ऊर्णनाभः] ऊर्णं नाभावस्य सः । 'नाभेर्नाम्नि' (७।३।१३४) अप्समासान्तः । 'अवर्णवर्णस्य' (७।४।६८) इलोपः ।

[पद्महस्तः] पद्मं हस्ते यस्य सः ।

[शङ्खपाणिः] शङ्खः पाणावस्य ।

[दर्भपवित्रपाणिः] दर्भस्य पवित्रम्, दर्भपवित्रं पाणौ यस्य सः ।

卐 श० म० न्या० - उत्खातः खड्गोऽनेन ।

**[पद्मपाणिः]** पद्मं पाणावस्य ।

**[दण्डपाणिः]** दण्डः पाणावस्य सः ।

**[चक्रपाणिः]** चक्रं पाणावस्य सः ।

**[शूलपाणिः]** शूलं पाणावस्य सः ।

**[शार्ङ्गपाणिः]** शार्ङ्गं पाणावस्य सः ।

**[धनुष्पाणिः]** धनुः पाणावस्य सः । 'समासेऽसमस्तस्य' (२।३।१३) षत्वम् ।

**[धनुर्हस्तः]** धनुर्हस्ते यस्य सः ।

**[पाशहस्तः]** पाशा(शः) हस्ते यस्य सः ।

**[वज्रहस्तः]** वज्रं हस्ते यस्य सः ।

**[वज्रपाणिः]** वज्रं पाणावस्य सः ।।छ।।

**गड्वादिभ्यः** ।।३।१।१५६।।

**[गड्वादिभ्यः]** गडुरादिर्येषां ते, तेभ्यः ।

**[शिरसिगडुः, गडुशिराः]** गडुः शिरसि यस्य सः ।

**[शिरस्यरुः, अरुःशिराः]** अरुर्वणः शिरसि यस्य सः । 'अमूर्द्ध-मस्तकात् स्वाङ्गादकामे' (३।२।२२) इत्यनेन सर्वत्र अलुप्समासः ।

**[मध्येगुरुः, गुरुमध्यः]** गुरुर्मध्ये यस्य सः ।

**[अन्तेगुरुः, गुर्वन्तः]** गुरुरन्ते यस्य सः ।

**[वहेगडुः]** वहे = स्कन्धदेशे गडुर्यस्य सः ।।छ।।

**प्रियः** ।।३।१।१५७।।

**[प्रियगुडः, गुडप्रियः]**卐 गुडः प्रियो यस्य सः ।

**[प्रियविश्वः, विश्वप्रियः]** विश्वं प्रियं यस्य सः ।

**[प्रियचत्वाः, चतुष्प्रियः]** चत्वारः प्रिया यस्य सः । 'निर्दुर्बहिराविष्प्रादुश्चतुराम्' (२।३।९) इत्यनेन रस्य षत्वम् । अनेन पूर्वनिपातः सर्वत्र ।।छ।।

**कडारादयः कर्मधारये** ।।३।१।१५८।।

**[कडारादयः]** कडार आदिर्येषां ते ।

**[कर्मधारये]** कर्मधारयः (३।१।९६) सूत्रवत्, तस्मिन् ।

**[कडारजैमिनिः, जैमिनिकडारः]** चमू (३८०) - छमू (३८१) - जमू (३८२) झमू (३८३) - 'जिमू अदने' (३८४) जिम् । जेमतीति । 'मन्-वन्-क्वनिप्-विच् क्वचित्' (५।१।१४७) विच्प्र० । अप्रयोगीत् (१।१।३७) विज्लोपः । अग्रे इन् जेमामिनः स्वामी । जेमिनस्याऽपत्यम् । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ ।

---

P 卐 प्रिया गुडा अस्य ।

'अवर्णेवर्णस्य' (७।४।६८) अलोपः । जैमिनिश्चासौ कडारश्च ।

**[गड्डुलगालवः, गालवगड्डुलः]** गड्डु । गड्डुरस्याऽस्तीति । 'सिध्मादि-क्षुद्रजन्तु-रुग्भ्यः' (७।२।२१) लप्र० । गालवश्चासौ गड्डुलश्च ।

**[काणद्रोणः, द्रोणकाणः]** द्रोणश्चासौ काणश्च ।

**[खञ्जमौञ्जायनः, मौञ्जायनखञ्जः]** मुञ्ज । मुञ्जस्याऽपत्यम् । 'नडादिभ्य आयनण्' (६।१।५३) आयनण्प्र०⟶आयन । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । खञ्जश्चासौ मौञ्जायनश्च ।

**[कुण्टवात्स्यः, वात्स्यकुण्टः]** कुण्टश्चासौ वात्स्यश्च ।

**[खेलदाक्षिः, दाक्षिखेलः]** खेलश्चासौ दाक्षिश्च ।

**[खोडकहोडः, कहोडखोडः]** खोडश्चासौ कहोडश्च ।

**[खलतिखारपायणः, खारपायणखलतिः]** 'पांक् रक्षणे' (१०६७) पा । खरं पातीति । 'स्था-पा-स्ना-त्रः कः' (५।१।१४२) कप्र०⟶अ । 'इडेत्-पुसि चाऽऽतो लुक्' (४।३।९४) आलोपः । खरपस्याऽपत्यम् । 'नडादिभ्य आयनण्' (६।१।५३) आयनण्प्र०⟶आयन । खलतिश्चासौ खारपायणश्च ।

**[गौरगौतमः, गौतमगौरः]** गौरश्चासौ गौतमश्च ।

**[पिङ्गलमाण्डव्यः, माण्डव्यपिङ्गलः]** मण्डु । मण्डोरपत्यम् । 'गर्गादेर्यञ्' (६।१।४२) यञ्प्र०⟶य । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः आ । 'अस्वयम्भुवोऽव्' (७।४।७०) अव् । पिङ्गलश्चासौ माण्डव्यश्च ।

**[वृद्धमनुः, मनुवृद्धः]** वृद्धश्चासौ मनुश्च ।

**[भिक्षुकदाक्षिः, दाक्षिभिक्षुकः]** भिक्षुकश्चासौ दाक्षिण्यश्च(दाक्षिश्च) ।

**[बठरछान्दसः, छान्दसबठरः]** छन्दस् । छन्दोऽधीते छान्दसः ।卐 'छन्दोऽधीते श्रोत्रश्च वा' (७।१।१७३) अण्प्र० । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । बठरश्चासौ छान्दसश्च ।

**[तनुतृणबिन्दुः, तृणबिन्दुतनुः]** तनुश्चासौ तृणबिन्दुश्च ।

**[कूटप्लाक्षिः, प्लाक्षिकूटः]** कूटश्चासौ प्लाक्षिश्च ।

**[गड्डुलकाणः, काणगड्डुलः]** गड्डुलश्चासौ काणश्च ।

**[खञ्जकुण्टः, कुण्टखञ्जः]** खञ्जश्चासौ कुण्टश्च ।

**[खोडखलतिः, खलतिखोडः]** खोडश्चासौ खलतिश्च ।

**[गौरवृद्धः, वृद्धगौरः]** गौरश्चासौ वृद्धश्च ।

**[पिङ्गलभिक्षुकः, भिक्षुकपिङ्गलः]** भिक्षुकश्चासौ पिङ्गलश्च ।

**[बठरतनुः, तनुबठरः]** बठरश्चासौ तनुश्च ।

**[नटबधिरादयः]** नड(ट)श्च बधिरश्च, नड(ट)बधिरावादिर्येषां ते(आदी येषां ते) ।।छ।।

---

卐 'छन्दोऽधीते श्रोत्रश्च वा' (७।१।१७३) सूत्रेण इयप्रत्ययो विकल्पे भवति, इयप्रत्यययोगे श्रोत्रादेशे श्रोत्रियो भवति । इयप्रत्ययाभावे 'तद् वेत्त्यधीते' (६।२।११७) अण्प्रत्यये छान्दसो भवति ।

**धर्मार्थादिषु द्वन्द्वे ।।३।१।१५९।।**

**[धर्मार्थादिषु]** धर्मश्च अर्थश्च, धर्मार्थावादिर्येषां (दी येषां) ते = धर्मार्थादयस्तेषु ।

**[धर्मार्थौ, अर्थधर्मौ]** धर्मश्च अर्थश्च ।

**[कामार्थौ, अर्थकामौ]** कामश्च अर्थश्च ।

**[शब्दार्थौ, अर्थशब्दौ]** शब्दश्च अर्थश्च ।

**[आद्यन्तौ, अन्तादी]** आदिश्च अन्तश्च । प्रथमा औ सर्वत्र ज्ञेयः ।

**[अग्नेन्द्रौ, इन्द्राग्नी]** अग्निश्च इन्द्रश्च । 'वेदसहश्रुताऽवायुदेवतानाम्' (३।२।४१) इ०→आ० ।

**[चन्द्रार्कौ, अर्कचन्द्रौ]** चन्द्रश्च अर्कश्च ।

**[अश्वत्थकपित्थौ, कपित्थाश्वत्थौ]** अश्वत्थश्च कपित्थश्च ।

**[सर्पिर्मधुनी, मधुसर्पिषी]** सर्पिश्च मधुश्च । औ । औरीः (१।४।५६) ई । 'अनाम्स्वरे नोऽन्तः' (१।४।६४) नोऽन्तः ।

**[गुणवृद्धी, वृद्धिगुणौ]** गुणश्च वृद्धिश्च ।

**[दीर्घलघू, लघुदीर्घौ]** दीर्घश्च लघुश्च ।

**[चन्द्रराहू, राहुचन्द्रौ]** चन्द्रश्च राहुश्च ।

**[तपःश्रुते, श्रुततपसी]** तपश्च श्रुतं च । औ । 'औरीः' (१।४।५६) ई ।

**[द्रोणभीष्मौ, भीष्मद्रोणौ]** द्रोणश्च भीष्मश्च ।

**[शकृन्मूत्रम्, मूत्रशकृत्]** शकृच्च मूत्रं च ।

**[कुशकाशम्, काशकुशम्]** कुश(शा)श्च काश(शा)श्च ।

**[करभरासभौ, रासभकरभौ]** करभश्च रासभश्च ।

**[समीरणाग्नी, अग्निसमीरणौ]** समीरणश्च अग्निश्च ।

**[आदित्यचन्द्रौ, चन्द्रादित्यौ]** आदित्यश्च चन्द्रश्च ।

**[पाणीनीयरौढीयाः, रौढीयपाणिनीयाः]** 'रुहं जन्मनि' (९८८) रुह् । रुह्यते स्म । 'क्त-क्तवतू' (५।१।१७४) क्तप्र० → त । 'हो धुट्-पदान्ते' (२।१।८२) ह०→ढ० । 'अधश्चतुर्थात् तथोर्धः' (२।१।७९) त०→ध० । 'तवर्गस्य श्चवर्ग०' (१।३।६०) ध०→ढ० । 'ढस्तड्ढे' (१।३।४२) ढलोपः-पूर्विला स्वरदीर्घत्वम् । रूढस्याऽपत्यं = रौढिः । 'अत इञ्' (६।१।३१) इञ्प्र०→इ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः औ । 'अवर्णवर्णस्य' (७।४।६८) अलोपः । रौढेरिमे छात्राः । पाणिनि । पाणिनेरिमे छात्राः । 'दोरीयः' (६।३।३२) ईयप्र० । 'अवर्णे०' (७।४।६८) इलोपः । पाणिनीयाश्च रौढीयाश्च । जस् ।

**[जित्याविपूयविनीयाः, विपूयविनीयजित्याः]** 'जिं अभिभवे' (८) जि । वि 'पूङ् पवने' (६००) पू । 'णींग् प्रापणे' (८८४) णी । 'पाठे धात्वादे०' (२।३।९७) नी विपूर्व० । 'जि-विपू-न्यो हलि-मुञ्ज-कल्के' (५।१।४३) क्यप्प्र०→य । प्रथमे 'ह्रस्वस्य तः पित्कृति' (४।४।११३) तोऽन्तः । जित्याश्च विपूयाश्च विनीयाश्च = जित्याविपूयविनीयाः । विनीयशब्दस्य पूर्वनिपातो न, गणे दर्शनात् ।

**[ब्राह्मणक्षत्रियविट्शूद्राः, शूद्रविट्क्षत्रियविप्राः]** ब्राह्मणाश्च क्षत्रियाश्च विशश्च शूद्राश्च । जस् ।

**[देवापिशन्तनू, शन्तनुदेवापी]** देवापिश्च शन्तनुश्च ।

**[वसन्तग्रीष्मौ, ग्रीष्मवसन्तौ]** वसन्तश्च ग्रीष्मश्च ।

**[शुक्रशुची, शुचिशुक्रौ]** शुक्रश्च शुचिश्च । औ । ज्येष्ठा-ऽऽषाढौ ।।छ।।

**लघ्वक्षरा-ऽसखीदुत्-स्वराद्यदल्पस्वरा-ऽर्च्यमेकम् ।।३।१।१६०।।**

**[लघ्वक्षराऽसखीदुत्स्वराद्यदल्पस्वराऽर्च्यम्]** लघूनि अक्षराणि यत्र तत् । इच्च उच्च = इदुत् । सखि च तद् इदुच्च = सखीदुत् । न सखीदुत् = असखीदुत् । स्वर आदिर्यस्य तत् । स्वरादि च तद् अच्च = स्वराद्यत् । 卐 अल्पः स्वरो यस्य तत् । लघ्वक्षरं च असखीदुच्च स्वराद्यच्च अल्पस्वरं च अर्च्यं च = लघ्वक्षराऽसखीदुत्स्वराद्यदल्पस्वराऽर्च्यम् । सि । 'अतः स्यमोऽम्' (१।४।५७) अम् ।

**[शर-सीर्यम्]** सीरे साधुः । 'तत्र साधौ' (७।१।१५) यप्र० । 'अवर्णेवर्णस्य' (७।४।६८) अलोपः । शरश्च सीर्यं च ।

**[तृण-काष्ठम्]** तृणं च काष्ठं च ।

**[तिल-माषम्]** तिलाश्च माषाश्च ।

**[शैलौ मलय-दुर्दुरौ]** मलयश्च दुर्दुरश्च । औ ।

**[अग्नी-षोमौ]** अग्निश्च सोमश्च । 'ईः षोम-वरुणेऽग्नेः' (३।२।४२) ई । एवं सूत्रे षोमेति निर्देशादीकारसन्नियोगे षत्वं निपात्यते ।

**[अग्नि-धूमम्]** अग्निश्च धूमश्च ।

**[पति-सुतौ]** पतिश्च सुतश्च ।

**[वायु-तोयम्]** वायुश्च + तोयं च ।

**[स्वादु-तिक्तौ]** स्वादुश्च तिक्तश्च । औ ।

**[सुतसखायौ, सखिसुतौ]** सुतश्च सखा च । औ । सख्युरितोऽशावैत् (१।४।८३) ऐ । एदैतोऽयाय् (१।२।२३) आय् ।

**[बहुसखि-बहुधनौ]** बहवः सखायो यस्य सः । बहु धनं यस्य सः । बहुसखा च बहुधनश्च । औ ।

**[व्रीहि-यवौ]** व्रीहिश्च यवश्च । औ ।

**[पतिवसू, वसुपती]** पतिश्च वसुश्च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ई ।

**[अस्त्र-शस्त्रम्]** अस्त्रं च शस्त्रं च ।

**[इन्द्र-चन्द्रौ]** इन्द्रश्च चन्द्रश्च । औ ।

**[उष्ट्र-मेषम्]** उष्ट्रश्च मेषश्च ।

**[अश्व-रथम्]** अश्वश्च रथश्च ।

**[उष्ट्र-खरम्]** उष्ट्रश्च खरश्च ।

**[उष्ट्र-शशम्]** उष्ट्रश्च शशश्च । 'गवाश्वादिः' (३।१।१४४) एकार्थः । सि-अम् ।

**[इन्द्र-वायू]** इन्द्रश्च वायुश्च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ऊ ।

**[इन्द्रा-विष्णू]** इन्द्रश्च विष्णुश्च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ऊ । 'वेदसहश्रुताऽवायु०' (३।२।४१) आ ।

---

P 卐 अल्पे स्वरा यत्र तत् ।　　P + तोयश्च ।

[अर्केन्दू] अर्कश्च इन्दुश्च । औ ।

[प्लक्ष-न्यग्रोधौ] प्लक्षश्च न्यग्रोधश्च । औ ।

[धव-खदिरौ] धवश्च खदिरश्च ।

[वागग्नी] वाग् च अग्निश्च । औ ।

[वाग्वायू] वाग् च वायुश्च । औ । 'ईदुतोऽस्त्रेरीदूत्' (१।४।२१) ऊ।

[वागर्थौ] वाग् च अर्थश्च । औ ।

[धवा-ऽश्वकर्णौ] धवश्च अश्वकर्णश्च । औ ।

[श्रद्धा-मेधे] श्रद्धा च मेधा च । औ । 'औता' (१।४।२०) ए ।

[दीक्षा-तपसी] दीक्षा च तपश्च । औ । 'औरीः' (१।४।५६) ई ।

[श्रद्धा-तपसी] श्रद्धा च तपश्च ।

[मेधा-तपसी] मेधा च तपश्च । औ । 'औरीः' (१।४।५६) ई ।

[माता-पितरौ] माता च पिता च । औ । 'आ द्वन्द्वे' (३।२।३९) आ ।

[वधू-वरौ] वधू(धूश्च) वरश्च । औ ।

[रुद्रा-ऽग्नी] रुद्रश्च अग्निश्च ।

[रुद्रेन्द्रौ] रुद्रश्च इन्द्रश्च ।

[वासुदेवा-ऽर्जुनौ] वासुदेवश्च अर्जुनश्च । औ ।

[कुक्कुटमयूरौ, मयूरकुक्कुटौ] कुक्कुटश्च मयूरश्च । औ ।

[अध्येतृवेदितारौ, वेदित्रध्येतारौ] अध्येता च वेदिता च । औ । 'तृ-स्वसृ-नप्तृ०' (१।४।३८) आर् ।

[अश्वावृक्षौ, वृक्षाश्वे] अश्व । 'अजादेः' (२।४।१६) आप्प्र०—>आ । अश्वा = चतुरङ्गिका च वृक्षश्च । औ ।

[शङ्खदुन्दुभिवीणाः, वीणादुन्दुभिशङ्खाः, शङ्खवीणादुन्दुभयः] शङ्खश्च दुन्दुभिश्च वीणा च । प्र० जस् ।

[अश्वरथेन्द्राः, इन्द्राश्वरथाः, इन्द्ररथाश्वाः] अश्वश्च रथश्च इन्द्रश्च । प्र० जस् ।

[धनपतिरामकेशवाः] रामश्च केशवश्च = रामकेशवौ । धनपतिश्च रामकेशवौ च ।

[मृदङ्गशङ्खपणवाः] शङ्खश्च पणवश्च = शङ्खपणवौ । मृदङ्गश्च शङ्खपणवौ च । प्र० जस् ।।छ।।

**मास-वर्ण-भ्रात्रनुपूर्वम्** ।।३।१।१६१।।

[मासवर्णभ्रातृ] मासश्च वर्णश्च भ्राता च ।卐 सि । 'अनतो लुप्' (१।४।५९) सिलुप् ।

[फाल्गुन-चैत्रौ] फल्गुनीभिश्चन्द्रयुक्ताभिर्युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० । 'तेन प्रोक्ते' (६।३।१८१) अण्लोपः (?) । ('लुप त्वप्रयुक्ते' अण्लोपः) । फाल्गुनी पूर्णमासी अस्य । 'चैत्री-कार्त्तिकी-फाल्गुनी-श्रवणाद् वा' (६।२।१००) अण्प्र०—>अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः । 'अवर्णेवर्णस्य' (७।४।६८) ईलोपः । चित्राभिश्चन्द्रयुक्ताभिर्युक्तः कालः । 'चन्द्रयुक्तात् काले०' (६।२।६) अण्प्र० । 'लुप् त्वप्रयुक्ते' अण्लोपः । चैत्री पूर्णमासी अस्य । 'चैत्री-कार्त्तिकी-फाल्गुनी-श्रवणाद्

---

P 卐 तत् ।

वा' (६।२।१००) अण्प्र०→अ । 'वृद्धिः स्वरेष्वादे०' (७।४।१) वृद्धिः ऐ । 'अवर्णवर्णस्य' (७।४।६८) आलोपः । फाल्गुनश्च चैत्रश्च । औ ।

**[वैशाख-ज्येष्ठौ]** वैशाखश्च ज्येष्ठश्च ।

**[ब्राह्मण-क्षत्रियौ]** ब्राह्मणश्च क्षत्रियश्च ।

**[क्षत्रिय-वैश्यौ]** क्षत्रियश्च वैश्यश्च । औ ।

**[वैश्य-शूद्रौ]** वैश्यश्च शूद्रश्च । औ ।

**[ब्राह्मण-क्षत्रिय-विशः]** ब्राह्मणश्च क्षत्रियश्च विट् च । जस् ।

**[ब्राह्मण-क्षत्रिय-विट्-शूद्राः]** ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्च । प्र० जस् ।

**[बलदेव-वासुदेवौ]** बलदेवश्च वासुदेवश्च ।

**[युधिष्ठिर-भीमा-ऽर्जुनाः]** युधिष्ठिरश्च भीमश्च अर्जुनश्च । प्र० जस् ।।छ।।

**भर्तुतुल्यस्वरम् ।।३।१।१६२।।**

**[भर्तुतुल्यस्वरम्]** भं च ऋतुश्च ।卐 सि । 'अनतो लुप्' (१।४।५९) सिलुप् । + तुल्यः स्वरो यस्य तत् ।

**[कृत्तिका-रोहिण्यः]*** कृतिका(काः) च रोहिणी(ण्यः) च । जस् ।

**[अश्विनी-भरणी-कृत्तिकाः]** अश्विनी च भरणी च कृत्तिका(काः) च । प्र० जस् ।

**[मृगशिरः-पुनर्वसु]** मृगशिरश्च पुनर्वसू च । सि । 'अनतो लुप्' (१।४।५९) सिलोपः । 'पुनर्वसू तु यामकौ आदित्यौ च' - इत्यभिधानचिन्तामणिः । (देवकाण्डे श्लोकाङ्कः ११०/१११) ।

**[हेमन्त-शिशिरौ]** हेमन्तश्च शिशिरश्च ।

**[शिशिर-वसन्तौ]** शिशिरश्च वसन्तश्च । औ ।

**[हेमन्त-शिशिर-वसन्ताः]** हेमन्तश्च शिशिरश्च वसन्तश्च । प्र० जस् ।

**[आर्द्रा-मृगशिरसी]** आर्द्रा च मृगशिरश्च । औ । 'औरीः' (१।४।५६) ई ।

**[पुष्य-पुनर्वसू]** पुष्यश्च पुनर्वसू च । औ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) ऊ ।

**[तिष्य-पुनर्वसू]** तिष्यश्च पुनर्वसू च ।

**[ग्रीष्म-वसन्तौ]** ग्रीष्मश्च वसन्तश्च । औ ।।छ।।

**संख्या समासे ।।३।१।१६३।।**

**[संख्या]** संख्या । सि । 'दीर्घङ्याब्०' (१।४।४५) सिलोपः ।

**[द्वित्राः]** द्वौ वा त्रयो वा । 'प्रमाणी - संख्या०' (७।३।१२८) डप्र० → अ । 'डित्यन्त्य०' (२।१।११४) इलोपः ।

**[त्रि-चतुराः]** त्रयो वा चत्वारो वा । 'नञ्-सु-व्युप-त्रेश्चतुरः' (७।३।१३१) अप्समासान्तः → अ । जस् ।

**[पञ्च-षाः]** पञ्च वा षड् वा ।

---

P 卐 तत् ।

P + तुल्याः स्वरा यत्र तत् ।

P * 'मघाऽप्-कृत्तिकाबहौ' इति लिङ्गानुशासनवचनात् ।

**[द्विदशाः]** द्विर्दश । 'प्रमाणी-संख्या०' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[त्रिदशाः]** त्रिर्दश । 'प्रमाणी-संख्या०' (७।३।१२८) डप्र०→अ । 'डित्यन्त्यस्वरादेः' (२।१।११४) अन्त्यस्वरादिलोपः ।

**[द्विशती]** द्वे शते समाहृते । 'द्विगोः समाहारात्' (२।४।२२) ङी ।

**[त्रिशती]** त्रयाणां शतानां समाहारः । 'द्विगोः समाहारात्' (२।४।२२) ङी ।

**[एकादश]** एकश्च दश च । 'एकादश-षोडश-षोडन्-षोढा-षड्ढा' (३।२।९१) 卐 एकादश निपातः ।

**[द्वादश]** द्वाभ्यामधिका दश । 'द्वित्र्यष्टानां०' (३।२।९२) द्वादश निपातः ।

**[त्रयोदश]** त्रिभिरधिका दश । 'द्वित्र्यष्टानां०' (३।२।९२) त्रयोदश निपातः ।

**[सप्ततिशतम्]** सप्तत्याधिकं शतम् । 'द्वित्र्यष्टानां द्वा-त्रयोऽष्टाः प्राक्०' (३।२।९२) सप्ततिशतं निपातः ।

**[अशीतिशतम्]** अशीत्याधिकं शतम् । 'द्वित्र्यष्टानां द्वा-त्रयोऽष्टाः प्राक्०' (३।२।९२) अशीतिशतं निपातः ।

**[नवतिशतम्]** नवत्याधिकं शतम् । 'द्वित्र्यष्टानां द्वा-त्रयोऽष्टाः प्राक्०' (३।२।९२) नवतिशतं निपातः ॥छ॥

***॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां बृहद्वृत्तौ चतुष्कस्य नवमः पादः समाप्तः ॥***

---

P 卐 एकादशन् निपात्यन्ते । जस् । 'डति-ष्णः संख्याया लुप्' (१।४।५४) जस्लोपः । 'नाम्नो नोऽनह्नः' (२।१।९१) नलोपः । यदा एकेन अधिका दश = एकादश । 'मयूरव्यंसकेत्यादयः' (३।१।११६) इत्यादिना समासे सति पूर्ववत् सिद्धिः ।

## ।। अकारादिवर्णक्रमेण सूत्रान्तर्गतोदाहरणसूचिः ।।

| | | | | | |
|---|---|---|---|---|---|
| कार्श्यवणम् | २।३।६६ | कुण्डकृता | २।४।४७ | कुलालवरुटम् | ३।१।१४३ |
| कार्षापणविकलम् | ३।१।६७ | कुण्डमिता | २।४।४७ | कुवलम् | २।४।९५ |
| कार्षापणोनम् | ३।१।६७ | कुण्डलहिरण्यम् | ३।१।७० | कुशकाशम् | ३।१।१३३ |
| कालमुखा | २।४।४० | कुण्डोध्नी | २।४।७ | कुशकाशम् | ३।१।१५९ |
| कालाक्षी गर्भिणी | ३।१।११२ | कुतपसौश्रुतः | ३।१।११६ | कुशकाशाः | ३।१।१३३ |
| कालाक्षी वशा | ३।१।१११ | कुत्सितो ब्राह्मणः | ३।१।१०० | कुशकाशौ (२) | ३।१।१३६ |
| कालापप्रवक्ता | ३।१।१११ | कुन्ती | २।४।७२ | कुशलदक्षः | ३।१।१८ |
| कालापश्रोत्रियः | ३।१।१११ | कुन्ती | २।४।९५ | कुशलश्चित्रकर्मणि,न च करोति | २।२।९७ |
| कालापाध्यायकः | ३।१।१११ | कुपुरुषकः | ३।१।४२ | कुष्ठः | २।३।३० |
| कालिकाऽङ्गरकाः | ३।१।१२६ | कुबेरकेशवौ | ३।१।१४९ | कुष्ठलम् | २।३।२८ |
| काशकुशम् | ३।१।१५९ | कुब्जकैरातम् | ३।१।१४४ | कुसितायी | २।४।६० |
| काश्यपप्रतिकृतिः काश्यपः | २।२।१२१ | कुब्जवामनम् | ३।१।१४४ | कुसि(सी)दायी | २।४।६० |
| काष्ठकाः | २।४।९३ | कुब्राह्मणः | ३।१।४२ | कुसुमसुरभिः | ३।१।६५ |
| किंकिरातम् | ३।१।११० | कुमारतल्लजकः | ३।१।१११ | कुसुमसौरभ्यम् | ३।१।८७ |
| किंगौ यो न वहति | ३।१।११० | कुमारतुल्यः | ३।१।११५ | कूटप्लाक्षिः | ३।१।१५८ |
| किंपुरुषः | ३।१।११० | कुमारतुल्या | ३।१।११५ | कूपकच्छपः | ३।१।९१ |
| किंराजा यो न रक्षति | ३।१।११० | कुमारपरमः | ३।१।११५ | कूपमण्डूकः | ३।१।९१ |
| किंशुकः पलाशः | ३।१।११० | कुमारपरमा | ३।१।११५ | कृच्छ्राद् मुक्तः | २।२।७९ |
| किंसखा योऽभिद्रुह्यति | ३।१।११० | कुमारप्रव्रजिता | ३।१।११५ | कृच्छ्रेण भोजनेन निर्विण्णः | २।२।७९ |
| किञ्जल्कः | ३।१।११० | कुमारयुवा | ३।१।११५ | कृच्छ्रेण मुक्तः | २।२।७९ |
| किरीटेन | २।३।६३ | कुमारश्रमणः | ३।१।११५ | कृतं तेन | २।२।४७ |
| किश(स)लयकरा | २।४।३८ | कुमारसती | ३।१।११५ | कृतकटः | ३।१।१५२ |
| किष्किन्धगब्दिकम् | ३।१।१४३ | कुमारसन् | ३।१।११५ | कृतपूर्वी कटम् | ३।१।१८ |
| कीटपिपीलिकम् | ३।१।१३४ | कुमाराभिरूपकः | ३।१।११५ | कृतप्रियः | ३।१।१५१ |
| कीर्तनम् | २।३।६३ | कुमारिका | २।४।१०४ | कृतभव्यकटः | ३।१।१५१ |
| कीलालपकः | २।४।१०४ | कुमारीप्रियः | २।४।९६ | कृतविश्वः | ३।१।१५१ |
| कीलालपम् | २।४।९७ | कुमुदश्येनी | ३।१।१०१ | कृताकृतम् | ३।१।१०५ |
| कीलालपिका | २।४।१०४ | कुम्भकपाललोहिनी | ३।१।१०१ | कृताकृतम् | ३।१।१०६ |
| कुक्कुटमयूरौ | ३।१।१६० | कुम्भकारः | ३।१।१८ | कृतापकृतम् | ३।१।१०५ |
| कुक्कुट-मयूर्यौ | ३।१।१२६ | कुम्भकारः | ३।१।४९ | कृतिः | २।४।३२ |
| कुक्कुटमयूर्यौ | ३।१।१४२ | कुम्भकारी | २।४।२० | कृत्तिकारोहिण्यः | ३।१।१६२ |
| कुक्कुटसंपात्या ग्रामाः | ३।१।६८ | कुम्भस्य समीपम् | २।२।८१ | कृन्थिविचक्षणा क्रिया | ३।१।११६ |
| कुक्कुटसर्पः | ३।१।९६ | कुरुकटः | ३।१।११६ | कृपः | २।३।९९ |
| कुचकुम्भः | ३।१।१०२ | कुरुकुरुक्षेत्रम् | ३।१।१४२ | कृपणः | २।३।९९ |
| कुञ्जरदासः | ३।१।११५ | कुरुकुरुजाङ्गलम् | ३।१।१४२ | कृपाणः | २।३।९९ |
| कुडीकुडम् | ३।१।१४४ | कुरुचरी | २।४।२० | कृपीटम् | २।३।९९ |
| कुण्टखञ्जः | ३।१।९६ | कुरुचरी | २।४।८६ | कृशोदरा | २।४।३९ |
| कुण्टखञ्जः | ३।१।१५८ | कुरूः | २।४।७३ | कृशोदरी | २।४।३९ |
| कुण्टवात्स्यः | ३।१।१५८ | कुरूः | २।४।९५ | कृष्टमतीकृता भूमिः | ३।१।९७ |

# પ્રથમ વિભાગ અંગે વિદ્વાનોના પ્રતિભાવ

૧. हैमव्याकरणे येषां, परीक्षा भवति क्षणम् ।
तत्रोत्तीर्णतमाः छात्राः, ढुण्ढिकासेविनो ध्रुवम् ॥१॥
न केवलं पाणिनीयात्, संस्कृतं वर्धते नवम् ।
नूतनानां पदानां च, निष्पत्तिर्नूत्नशासनात् ॥२॥
मुनिश्रीविमलकीर्तिविजयाचार्यधर्मतः ।
संपन्ना ढुण्ढिका हैमसिद्धशब्दानुशासने ॥३॥
शीघ्रमेव यथालाभं, ढुण्ढिकाऽत्र प्रकाश्यताम् ।
शब्दब्रह्मणि निष्णाताः, तां पठेयुः समग्रतः ॥४॥

[ अरैयर श्रीरामशर्मा, मेलुकोटे ]

२. आचार्यश्रीहेमचन्द्रस्य प्रतिभापरिपाकसमुल्लासं परिचाययितुं ग्रन्थोऽयं सम्यक्तया समर्थ इति मे विश्वासः ।

[ मिश्रोऽभिराजराजेन्द्रः, Shimla ]

३. भाषाक्षेत्रे एतत् पुस्तकमत्यन्तमुपयुक्तं भवतीत्यस्माकमाशयः । [ चमू कृष्णशास्त्री, नवदेहली ]

४. अनयाऽपूर्वया टीकया संस्कृतव्याकरणशास्त्रे विशेषतः श्रीसिद्धहेमव्याकरणे अध्ययन-संशोधनकार्यं कुर्वतां विदुषां कृते महान् उपकारो भविष्यतीत्यत्रासंशयं मे मनः ।

[ डो. किशोरचन्द्रपाठकः, अमरेली ]

૫. This book will be very useful to the Scholars and students doing Research in this field.

[ M.L. Wadekar, Oriental Institute ]

૬. It would be very useful to students of Grammar, Particularly of सिद्धहेमचन्द्रशब्दानुशासन.

[ V. M. Kulkarni, Vile parle ]

૭. પૂજ્ય વિમલકીર્તિવિજયજી મહારાજે આ પુસ્તકનું સંપાદન કરી જૈન સમાજ ઉપર અગણિત ઉપકાર કર્યો છે. પૂજ્ય સાધુ ભગવંત-સાધ્વીજી મહારાજના જ્ઞાનમાં ખૂબ જ પ્રગતિ-વૃદ્ધિ કરાવનારું હોવાથી તેઓશ્રી અગણિત કલ્યાણના ભાગીદાર છે, અભ્યાસી વર્ગને ખૂબ જ ઉપયોગી છે.

[સ્થાનકવાસી પૂ. ઉપા. વિનોદચંદ્રજી મ.સા.]

૮. આવો અદ્‌ભુત ગ્રંથ મોકલવા બદલ ખૂબ ખૂબ આભાર. હું સંસ્કૃતનો અધ્યાપક છું, મને આ ટીકા ઘણી ઉપયોગી થશે. સાંપ્રતકાળે સંસ્કૃતની સાચી સેવા આપના જેવા ગુરૂભગવંતો કરે છે ત્યારે સાચે જ પ્રસન્નતા થાય છે. આપનું આ વિદ્યાકર્મ વિદ્યાજગતમાં પ્રશંસા પામશે જ.

[અનિલ ર. દ્વિવેદી, ..નનગર]

૯. આવા દુર્લભ ગ્રંથો પ્રકાશિત કરીને આપે જનસમાજ તેમજ વિદ્વત્ સમાજને ઉપકૃત કરેલ છે.

[પ્રભાશંકર ફડકે, કચ્છ સંસ્કૃત સભા]

क्लृप्तं व्याकरणं नवं विरचितं छंदो नवं द्वयाश्रया-
लङ्कारौ प्रथितौ नवौ प्रकटितं श्रीयोगशास्त्रं नवम् ।
तर्कः संजनितो नवो जिनवरादीनां चरित्रं नवं,
बद्धं येन न केन केन विधिना मोहः कृतो दूरतः ।।

નવું વ્યાકરણ કલ્પ્યું, નવું છંદશાસ્ત્ર રચ્યું, દ્વયાશ્રય મહાકાવ્ય અને અલંકારશાસ્ત્રને વિસ્તાર્યા અને નવા જ પ્રગટ કર્યા, શ્રીયોગશાસ્ત્રને પણ નવું રચ્યું, નવા તર્કશાસ્ત્રને જન્મ આપ્યો, જિનેશ્વરોના ચરિત્રોનો નવો ગ્રંથ રચ્યો, કઈ કઈ રીતે શ્રી હેમચન્દ્રાચાર્યે અજ્ઞાનને દૂર કર્યું નથી ?